राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक– पुरातत्त्वाचार्य जिनविजय मुनि

[ सम्मान्य संचालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर ]

★

– ग्रन्थाङ्क ६ –

समीक्षाचक्रवर्ति–विद्यावाचस्पति–महामहोपदेशक–
स्वर्गीय पण्डितप्रवर -श्री मधुसूदन ओझा विरचितं

# महर्षिकुलवैभवम्

★

— प्र का श क —

राजस्थान. राज्य. संस्थापित

राजस्थान पुरातत्त्वान्वेषण मन्दिर

( Rajasthan Oriental Research Institute )

जयपुर ( राजस्थान )

वि० सं० २०१३ ]

[ मूल्य

(१०) ६० ७४ न० पै०

## राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक – पुरातत्त्वाचार्य, जिनविजय मुनि

[ सम्मान्य संचालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर ]



– ग्रन्थाङ्क ६ –

समीक्षाचक्रवर्ति – विद्यावाचस्पति – महामहोपदेशक–

स्वर्गीय पण्डितप्रवर -- श्री मधुसूदन ओझा विरचितं

# महर्षिकुलवैभवम्



— प्रकाशक —

राजस्थान-राज्य-संस्थापित

राजस्थान पुरातत्त्वान्वेषण मन्दिर

( Rajasthan Oriental Research Institute )

जयपुर ( राजस्थान )

वि० सं० २०१३ ] [ मूल्य

# राजस्थान पुरातन ग्रन्थमाला

## प्रकाशित ग्रन्थ

१ प्रमाणमञ्जरी – तार्किकचूड़ामणि सर्वदेव। २ यन्त्रराजरचना – महाराजाधिराज जयसिंहदेव कारिता। ३ कान्हडदे प्रबन्ध – महाकवि पद्मनाभ। ४ क्यामखांरासा – नवाब अलफखां (कविवर जान)। ५ लावारासा – चारण कविया गोपालदान। ६ महर्षिकुलवैभवम् -- विद्यावाचस्पति स्व. श्री मधुसूदनजी ओझा।

## प्रेस में

१ त्रिपुराभारतीलघुस्तव – सिद्धसारस्वत लघुपण्डित। २ बालशिक्षा व्याकरण – ठक्कुर संग्रामसिंह। ३ करुणामृतप्रपा – महाकवि ठक्कुर सोमेश्वरदेव। ४ पदार्थरत्नमञ्जूषा – पं. कृष्णमिश्र। ५ शकुनप्रदीप – पं. लावण्यशर्मा। ६ उक्तिरत्नाकर – पं. साधुसुन्दर गणी। ७ प्राकृतानन्द – पं. रघुनाथ कवि। ८ ईश्वरविलासकाव्य – पं. कृष्णभट्ट। ९ चक्रपाणिविजयकाव्य -- पं. लक्ष्मीधर भट्ट। १० काव्यप्रकाश -- भट्ट सोमेश्वर। ११ वृत्तिदीपिका – मौनि कृष्णभट्ट। १२ तर्कसंग्रहफक्किका -- क्षमाकल्याण गणी। १३ राजविनोद काव्य – कवि उदयराज। १४ कारकसंबन्धोद्योत – पं.रभसनन्दी। १५ शृंगारहारावलि – हर्षकवि। १६ कृष्णगीतिकाव्यनि -- कवि सोमनाथ। १७ नृत्यसंग्रह – अज्ञातकर्तृक। १८ नृत्यरत्नकोश – महाराजाधिराज कुंभकर्णदेव। १९ नन्दोपाख्यान -- अज्ञातकर्तृक। २० चान्द्रव्याकरण – चन्द्रगोमी। २१ शब्दरत्नप्रदीप – अज्ञातकर्तृक। २२ रत्नकोश – अज्ञातकर्तृक। २३ कविकौस्तुभ -- पं. रघुनाथ मनोहर। २४ एकाक्षरकोशसंग्रह -- विविधकविकर्तृक। २५ शतकत्रयम् – भर्तृहरि, धनसारकृत व्याख्यायुक्त। २६ वसन्तविलास -- अज्ञातकर्तृक। २७ दुर्गापुष्पाञ्जलि -- म. म. पं. दुर्गाप्रसादजी द्विवेदी। २८ दशकण्ठवधम् – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २९ गोरा बादल पदमिणी चऊपई -- कवि हेमरतन। ३० बांकीदासरी ख्यात -- महाकवि बांकीदास। ३१ मुंहता नैणसीरी ख्यात – मुंहता नेणसी। इत्यादि।

प्राप्तिस्थान – सञ्चालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जयपुर।

समीक्षाचक्रवर्ति – विद्यावाचस्पति – महामहोपदेशक–

स्वर्गीय पण्डितवर्य -- श्रीमधुसूदन ओझा – विरचितं

# महर्षिकुलवैभवम्

[ पूर्वार्द्धम् ]




सम्पादक एवं व्याख्याता

महामहोपाध्याय पं० गिरिधरशर्मा चतुर्वेदः।





—: प्रकाशनकर्त्ता :—

राजस्थान-राज्याज्ञानुसार

संचालक–राजस्थान पुरातत्त्वान्वेषरण मन्दिर

( Rajasthan Oriental Research Institute )

जयपुर (राजस्थान)

क्रमाब्द २०१३ ] प्रथमावृत्ति  मूल्य [ खिस्ताब्द १९५६

## प्रकाशकीय निवेदन

वैदिकविज्ञानमार्तण्ड विद्यावाचस्पति स्वर्गीय विद्वद्वर्य श्रीमधुसूदनजी ओझा रचित 'महर्षिकुलवैभवम्' नामक ऋषितत्त्वनिरूपणात्मक ब्रह्मविज्ञानशास्त्रीय ग्रन्थरत्न को महामहोपाध्याय श्रीगिरिधरजी शर्मा चतुर्वेदी के सम्पादकत्त्व में प्रकाशित करने का निर्णय राजस्थान सरकार द्वारा संस्थापित संस्कृत मंडल की दिनांक २८ जून, १९५० की बैठक में हुआ था। उपर्युक्त निर्णयानुसार यह कार्य राजस्थान पुरातत्त्व मंदिर के तत्त्वावधान में उसी समय आरम्भ कर दिया गया था। श्री महामहोपाध्यायजी उस समय काशी-हिन्दू-विश्वविद्यालय में संस्कृतशिक्षासंचालक के पद पर आसीन थे। अतः उनकी देखरेख तथा सुविधा के लिए मुद्रणकार्य काशीराज मुद्रणालय, रामनगर को सौंपा गया।

श्री महामहोपाध्यायजी ने श्री ओझाजी के पास बैठ कर अहर्निश उनके मन्तव्यों का श्रवण और मनन वर्षों तक किया है। प्रस्तुत ग्रन्थ की संस्कृत व्याख्या तथा हिन्दी टीका लिख कर इन्होंने इसे सुबोध एवं जनसाधारणोपयोगी बना दिया है।

खेद है कि यह सम्पूर्ण ग्रन्थ एक साथ में कतिपय कारणों से प्रकाशित नहीं किया जा सका है। इस समय इसका प्रथम खंड, राजस्थान पुरातन ग्रन्थमाला, के ६ ठे पुष्प के रूप में विद्वत् समाज के समक्ष प्रस्तुत किया जा रहा है।

मुनि जिनविजय

१.६.५६

सम्मान्य संचालक

राजस्थान पुरातत्त्वान्वेषण मंदिर,

जयपुर

# किमप्यावश्यकम् ।

अध्यर्धशताधिकान् ग्रन्थान् निर्माय्यास्तं प्रयातेषु विद्यावाचस्पतिश्रीमधुसूदनशर्ममहाभागेषु वेदविज्ञानदिवाकरेषु श्रीगुरुचरणेषु तदादेशादेव ग्रन्थप्रकाशनभारमुररीकृत्य प्रवर्तमानस्तत्सुतः श्रीप्रद्युम्नझामहाशय अंसन्नपञ्चाशात् ग्रन्थान् क्रमेण प्रकाशितवान्, प्रकाशयति च। श्रीगुरुचरणैर्यद्यपि भाषाकाठिन्यं न क्वापि कृतम्, सुलभयैव सुप्रसन्नया भाषया सर्वेऽपि ग्रन्था निबद्धाः, परं वैदिक्याः परिभाषाया एव दुरवबोधतया विषयाणां गाम्भीर्येण च त इमे ग्रन्थाः प्रौढानामपि विदुषां दुरवबोधाः प्रतीयन्त इत्येवैषां प्रचारे महद् बाधकम्। श्रीगुरुचरणानां मुखाद् यैर्विज्ञानस्यास्य परिभाषाः श्रुताः, त एवैतान् विज्ञातुं शक्नुवन्ति। तदेतत्सर्वमनुध्याय ग्रन्थानामेषां टीकानुवादादिभिः परिष्कृत्य प्रकाशनाय राजस्थानशासनाधिकारिणो मया प्रार्थिताः। तदानीन्तनैश्चाधिकारिभिः सप्तोत्तरद्विसहस्रतमे वैक्रमे वत्सरे पुरातत्त्वाचार्याणां जैनाचार्यप्रवराणां मुनिविरुदभाजां श्रीजिनविजयमहाभागानामध्यक्षतायां जयपुरे पुरातत्त्वमन्दिरं प्रतिष्ठाप्य तदन्तरेव कार्यमिदं कृपया परिगृहीतम्, 'महर्षिकुलवैभव'नामानं ग्रन्थमिमं टीकानुवादाभ्यां परिष्कृत्य प्रकाशयितुं चाहमादिष्टः। ग्रन्थोऽयमृषितत्त्वनिरूपणप्रवणस्तदङ्गतया वैदिकीं सृष्टिप्रक्रियां प्रबोधयन्नतिजटिल इति भारमिमं वोढुमशक्तेनापि मया श्रीगुरुचरणकृपामेवावलम्ब्य कार्यमिदं स्वीकृतम्। तस्य ग्रन्थस्य प्रथमो भागः सृष्टिप्रक्रियाप्रबोधकोऽयं प्रथमं प्रकाश्यते, प्रत्येकमृषीणां विवरणन्तूभयविधानाम्—वैज्ञानिकानां, मनुष्यरूपाणां च द्वितीयखण्डे प्रकाशितं स्यात्। अस्मिन् खण्डे कीदृशा महत्त्वास्पदानि विषया इति विषयतालिकामेव पठित्वा ज्ञातुं शक्येत विद्वत्प्रवरैः। श्रीपण्डितमहाभागानां मन्तव्यस्य स्फुटमवबोधनाय उपोद्घातोऽपि मयात्र संयोजितः। तस्यापि प्रथम एव भागोऽत्र प्रकाश्यते। द्वितीयो भागस्तु द्वितीयेन खण्डेन सहैव प्रकाशमेष्यति। अत्र व्याख्यायाम् 'उपोद्घाते निरूपितम्' इति यत्र स्थाने स्थाने मयोक्तम्, तदपि प्रायेण द्वितीय एव भागे प्राप्येत पाठकमहाभागैः, न तदर्थमधैर्यमालम्बनीयम्। श्रीपण्डितानां मुद्रितामुद्रितग्रन्थपरिचयो य उपोद्घातस्यादौ प्रतिज्ञातः सोऽपि द्वितीय एव भागे समुपलभ्येत।

अस्य ग्रन्थस्य प्रकाशने प्रधानं साहाय्यं राजस्थान शासनाधिकारिणाम्, 'मुनि' श्रीजिनविजयमहाभागानां चेति ते सबहुमानं धन्यवादै रभिनन्द्यन्ते। आगराविश्वविद्यालयस्य भूतपूर्वरजिस्ट्रारमहाभागैः श्रीश्यामसुन्दर एम० ए० महाशयैरहमेतत्कार्येऽतितरां प्रोत्साहित इति सबहुमानं कृतज्ञतां तेषामावहामि। भाषानुवादे परमं श्रमं कृतवन्तश्च मच्छिष्यकोटिप्रविष्टा निम्ननिर्दिष्टा विद्वांसः सपरितोषमाशीर्भिर्मयाभिनन्द्यन्ते।

१ श्रीभवदत्तशर्ममैथिलः, व्याकरणसाहित्याचार्यः
२ श्रीदेवादत्तशर्मा चतुर्वेदः
३ श्रीगोपालचन्द्रशर्मा वेद-धर्मशास्त्राचार्यः, मीमांसाशास्त्री च
४ श्रीरघुराजमिश्रः, न्यायाचार्यः, एम० ए०

काशिकराजकीययन्त्रालयप्रधानाध्यक्षेण काशिराजपण्डितेन प्रियसुहृद्वरश्रीपुरुषोत्तमशर्मचतुर्वेदेन साहित्याचार्य—शुद्धाद्वैतालंकारादिविरुदभाजा संशोधनादिषु महदुपकृतमिति सोऽपि सादरं धन्यवादैरभिनन्द्यते।

अनेन ग्रन्थेन वैदिकविज्ञानप्रसारे यदि किमपि साहाय्यं स्यात्, तर्हि श्रममिमं सफलमाकलयिष्यामीति।

गिरिधरशर्मा चतुर्वेदः

(व्याख्यानिबन्धा, संपादकश्च)



श्रीः

# उपोद्घातः

श्रीमहर्षिकुलवैभवस्यास्य प्रकाश्यमानस्य ग्रन्थस्य रचयितारो वेदरहस्योद्घाटनप्रवणा विद्यावाचस्पति-समीक्षाचक्रवर्तीत्यादिविरुदभाजः श्रीमधुसूदनशर्ममैथिलाभिधाः श्रीगुरुचरणाः।

श्रीमतां विद्यावाचस्पतिमहाभागानां जीवनचरितं संस्कृतभाषायां हिन्दीभाषायां चानेकेषु सामयिकपत्रेषु पुस्तकेषु च विस्तृत्य प्रकाशितं प्रायेण सर्वत्र प्रसिद्धम्। तस्यायं संक्षेपः–यदिमे महाभागाः मिथिलायां मुजफ्फरपुरमण्डलान्तर्गते गाढाग्रामे विद्वत्प्रवर-श्रीवैद्यनाथ-झा-महोदयस्य धर्मपत्न्याः कुक्षेस्त्रयोविंशत्युत्तरैकोनविंशतिशततमे (१९२३) वैक्रमेऽब्दे भाद्रकृष्णाष्टम्याम् (श्रीकृष्णजन्माष्टम्याम्) रात्रौ जन्म गृहीतवन्तः। जयपुर-महाराजश्रीरामसिंहदेवस्य प्रधानपण्डितैर्ज्येष्ठपितृव्यैः श्रीराजीवलोचन-झा महाभागैर्निःसन्तानरिमे दत्तकपुत्रतया पालिता जयपुरं नीतास्तत्रैव संस्कृतशिक्षायां प्रविविशुः। अनन्तरं च स्वर्यातेषु पितृव्यपादेषु वाराणसीं प्राप्य जगत्प्रसिद्धवैदुष्यविभवानां महामहोपाध्याय श्रीशिवकुमारशास्त्रिपादानां शिष्यकोटिप्रविष्टा अब्दाष्टकादधिकं तच्चरणौ सेवमानाः, कामेश्वराभिधं शिवमाराधयन्तश्च व्याकरणन्याय-साहित्य-वेदान्तादिषु प्रगाढं पाण्डित्यमासाद्य पञ्चविंशतिवर्षासन्ने वयसि पुनर्जयपुरं प्राप्ताः। क्रमेण जयपुरनरेश-श्रीमाधवसिंहदेवस्य प्रधानपण्डितपदमासाद्य यावज्जीवनं तत्रैव स्थिताः। जयपुरराज्यस्य सुप्रसिद्धो यः प्राचीनपुस्तकभाण्डागारोऽस्ति, तस्याध्यक्षपदे विद्यावाचस्पतिमहाभागा चत्वारिंशतोऽप्यधिकानि वर्षाणि प्रतिष्ठिताः।

अचिराद् वेदार्थस्य यत्पाश्चात्यपण्डितैस्तदनुयायिभिर्भारतीयैश्च विप्लावनं कृतम्, तस्मादत्यर्थ-मुद्विग्नमानसैः श्रीशिवकुमारशास्त्रिमहाभागैरेव विद्यावाचस्पतिमहाशयानां प्रतिभाबलं शास्त्रवैचक्षण्यं चावलोक्य यथार्थवेदार्थप्रचारायैते समाज्ञप्ताः। गुरोराज्ञामनुसृत्य वेदार्थपरिशीलनाय प्रवृत्ता वाचस्पतिमहाभागाः। तदनु तु तत्रैवंविधो रस एभिरुपलब्धो यदधिकचत्वारिंशानब्दान् अगणितशरीरसुखाः अस्पृष्टविषयानुरागा विनिवर्त्तितसर्वान्यकर्तव्या अहोरात्रं परिश्राम्यन्तस्तत्रैव जीवनं यापयामासुः, प्रायेण सहस्राब्दीतो विद्वदग्रेसरैरविज्ञातांश्च तादृशान् निगूढान् रहस्यभूतान् विषयानाविष्कृतवन्तः, यान् शृण्वन्तश्चकिता भवन्ति विद्वदग्रेसरा अपि। महानुभावा इमे वक्तृत्वे लेखने च तुल्यमनितरसाधारणं पाटवं वहन्ति स्म। यैस्तच्चरणावुपासीनैस्तेषां मुखारविन्दाद्विगलितं शास्त्रपीयूषं पीतम्, त एव वक्तृत्वकला-

साक्षिणः। भारतीयेषु बहुषु प्रधाननगरेषु जनता अन्येषां भाषणानि श्रावं श्रावं विस्मयानन्दसमुद्रे निमज्जति स्म। नैतावदेव, जयपुरमहाराजश्रीमाधवसिंहदेवस्य ऐतिहासिक्यामिङ्गलैण्डयात्रायां तत्सहचरा इमे महाभागाः कैम्ब्रिज विश्वविद्यालये स्वकीयया वक्तृतया सकलानपि संस्कृतविदुषश्चकितानकार्षुः। ग्रन्थाश्च सपादशतादप्यधिकास्तैर्निर्मिताः, येषु आसन्नचत्वारिंशाः प्राकाश्यं गताः, अन्ये च क्रमेण प्रकाश्यन्ते, तेषां नामसूची पुस्तकान्ते द्रक्ष्यते पाठकमहाभागैः। त्रिसप्ततिवत्सरपरिमितमायुरुपयुज्य पञ्चनवत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे ब्रह्मभावं गतेषु विद्यावाचस्पतिमहाभागेषु तत्तनयः श्रीप्रद्युम्नझामहाशयस्तद्ग्रन्थान् यथाशक्यं क्रमेण प्रकाशयति।

अथ विद्यावाचस्पतिमहाभागैः किमभिनवमाविष्कृतमिति बहवो जिज्ञासन्ते। तत्परितोषाय विद्यावाचस्पतिमहाभागानां कृतिपरिचयोऽत्र यथाप्रज्ञं संक्षेपेण निबध्यते। वैदिकं वाङ्मयं प्रातिभपोतेनालोडयद्भिरेभिर्दृष्टम्—यद्यापि वैदिकवाङ्मये श्रद्धा भारतीयानां विशेषेण जागर्ति, विदेशीयाश्चापि वेदगौरवं मन्यन्ते, परन्तु सर्वमिदं वाङ्मात्रमेव। वैदेशिकाः केवलं प्राक्तनेतिहासपरिचयाय प्राक्तनसंस्कृतिपरिचयाय च वेदानाददते, किमपि वैज्ञानिकं गौरवं तु तत्रानुमन्तुं नैव सर्वथोत्सहन्ते। भारतीयाश्च संस्कृतविद्वांसः केवलं पारलौकिकफलं तत्प्रयोजनं मन्यन्ते।

"भूतं भवद् भविष्यच्च सर्वं वेदात् प्रसिध्यति" (मनुः)।

इति तु सर्वैरेव विस्मृतम्। कतिपयैर्भारतीयैर्विद्वद्भिर्वेदेषु विज्ञानमाविष्कर्तुं चेष्टितम्, परं क्रमबद्धं किमपि सूत्रं न प्राप्तम्। तत्रानेके हेतव उपस्थिताः, कैश्चित् केवलं मन्त्रभाग एव परिश्रमः कृतः, ब्राह्मणानि तूपेक्षितानि। पुराणेतिहासास्तु कैरपि न स्पृष्टाः। परं यावद् ब्राह्मणानां वेदाङ्गानां पुराणेतिहासानां च समुचितं सहाय्यं नालम्ब्येत, न तावद् वैदिकरहस्यप्रकटनस्याशा फलवती भवेत्। क्रमिकं विकासवादमुच्छृङ्खलमुपाश्रित्य च यावदयं संस्कारो दृढमूलो यत् पुरातने काले विज्ञानस्य बाल्यकालो भवतु नाम, यौवनं तु विज्ञानस्य न संभवति पुरायुगे, तावदपि वेदार्थस्यान्वेषणं न सम्यक् संभवति। अस्य ग्रंथकर्तुर्दृष्टौ तु वैदिकः कालो विज्ञानस्य तथाविधो मध्याह्नकालः यत्ततः परं सायन्तनाभिमुख एव प्रतीयते भगवान् विज्ञानभास्करः। बहूनि वैज्ञानिकानि तत्त्वानि विलोपं गतान्यद्यापि नोद्धर्तुं पारितानि विज्ञानपारंगतैरपि। तमिमं वैज्ञानिकतत्त्वनिचयं क्रमबद्धमाविष्कर्तुं विज्ञानशब्दार्थ एव तावद्विचिन्तनीयः।

## विज्ञानशब्दार्थः।

विज्ञानशब्दस्यार्थेऽप्यद्यत्वे प्रचलति विवादमहाहवः—

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।"

इत्यादीनि श्रीभगवद्गीतादिवचनानि व्याचक्षाणैः श्रीशंकराचार्यपाद-प्रमुखैर्महानुभावैः "विज्ञानसहितम्-स्वानुभवसंयुक्तम्" इतिशब्दार्थः प्रदर्शितः। अमरकोषे तु

"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।"

इति शिल्पशास्त्रादिकं विज्ञानशब्दार्थतया परिगृहीतम्। आधुनिकास्तु विद्वांसः पाश्चात्यभाषायाः साइन्स्पदसमानार्थकं विज्ञानपदं प्रयुञ्जते। तत्किमेवं विज्ञानपदमनेकार्थकमेव, उतास्ति काचिदेका सर्वानुगता परिभाषा इति विचारयद्भिर्विद्यावाचस्पतिभिरेवं निर्णीतम्। यद्—

"विभिन्नं वस्तुजातमखिलक्षीकृत्य मूलान्वेषणक्रमेणैकतत्त्वपर्यन्तं गतिर्ज्ञानम्। एकं तत्त्वं निरूढं मत्वा क्रमेण तस्यानन्तरूपताप्रतिपत्तिर्विज्ञानम्। विशिष्य ज्ञानं हि विज्ञानम्, विविधं ज्ञानम्, विभेदेन ज्ञानं वा विज्ञानमिति"।

तत्रेयं ज्ञानप्रक्रिया—प्रत्यक्षादिप्रमाणसिद्धमिदं जगदेव तावदालोच्यताम्। तत्र जाताः पदार्था यदि जानन्ति, चेष्टन्ते च तर्हि जीवा इति प्राणिन इति वा व्यपदिश्यन्ते। न हि तेषु जीवः प्राणो वेन्द्रियगोचरः। ज्ञानचेष्टाभ्यां त्वसौ केवलमनुमीयते। विनष्टज्ञानचेष्टं जन्मनैव वाऽप्रकटज्ञानचेष्टं तु यथाक्रमं शव इति जड इति च व्याहरन्ति लोकाः। हिताहितप्राप्तिपरिहारार्थं कर्मैव चेष्टामुदीरयन्ति विद्वांसः। तदेवं निर्गलितोऽर्थो यज्ज्ञानकर्मणी एव जीवतां जीवनस्य लक्षणम्। तत्र ज्ञानकर्ममयस्यास्य जीववर्गस्य यः प्रभवः सोऽपि ज्ञानकर्मरूप एव स्यात्, कार्यकारणयोः सारूप्यात्, कारणगुणाः कार्यगुणान् आरभन्त इति न्यायाच्च।

अत्रेदमाशङ्क्यते—यत्र ज्ञानं कर्म चेत्युभयं प्रमाणसिद्धं तेषां मनुष्य-पशु-पक्षि-कृमि-कीटादीनां ससंज्ञानां वृक्ष-लता-गुल्मादीनामन्तःसंज्ञानां च ज्ञानकर्मात्मकारणकत्वं शक्यमनुमातुम्, क्षित्यादयः पुनर्नितान्तमसंज्ञा अचेतना जडाः कस्मादुत्पद्यन्ते ? किं तेषां ससंज्ञान्तःसंज्ञसृष्टिकारणाद् भिन्नमेव किञ्चित् कारणम् ? अत्रेदमुत्तरम्—ससंज्ञान्तःसंज्ञसृष्ट्योरिवासंज्ञसृष्टेरपि तदेव ज्ञानकर्मात्मकं कारणम्, नान्यत् किञ्चित्। ये यावन्तश्च कारणगुणास्ते सर्वेऽपि सर्वात्मना कार्ये विकसन्त्येवेति नायं नियमः। न हि पितुर्मातुर्वा सर्वेऽपि गुणाः सर्वात्मना पुत्रे दुहितरि वाऽनुवर्तन्ते। क्षित्यादिषु नितान्तमप्रस्फुटेऽपि ज्ञाने केन वा सूक्ष्मेक्षिकाविचक्षणेन नाध्यक्षीक्रियन्त उत्पत्तिस्थिति-विपरिणति-वृद्धि-क्षिति-विनष्टयः कर्मपर्यायाः षड् भावविकाराः। किं च तस्या एव क्षितेरवयवान्मृदो जलक्लिन्नाया अचिरादेव ससंज्ञानां कृमिकीटादीनां प्रादुर्भावः किं नावलोक्यते ? अन्तःसंज्ञानां वृक्षलतादीनान्तु तत उद्भवः स्पष्ट एव। तस्मादस्फुटचैतन्या भवन्तु क्षित्यादयः, सर्वथा अचेतनास्तु तेऽपि न वक्तुं शक्याः। तथा चेयं सर्वापि सृष्टिर्ज्ञानकर्मात्मन एव कस्माच्चित् कारणादुत्पन्नेति निश्चप्रचम्।

नन्वेवं मा भूत् क्षित्यादिषु ज्ञानस्य विकासः। तथापि ज्ञानकर्मात्मनः कारणात् समुद्भूतानां तेषां ज्ञानकर्ममयत्वाच्चेतनत्वं प्राप्तम्—इति कथमचेतनानि तानि ? निर्विषयश्चैवमयमचेतनपदप्रयोगः स्यात्, कारणस्य कार्येऽनुस्यूतत्वाद् ज्ञानकर्मशून्यस्यार्थस्यात्यन्तमभावात्। न ह्यविकसदवस्थं नास्तीति शक्यमुद्घोषयितुम्, बीजादिष्वविकसदवस्थस्यापि वृक्षादेः सत्त्वस्य दार्शनिकमूर्धन्यैरभ्युपगमात्, इति चेद्। अत्रैवाहुः प्राञ्चो महामुनयः—न ह्यत्र पदार्थानां चेतनाचेतनत्वव्यपदेशो ज्ञानकर्ममयत्वस्वीकारात्, किन्तु सेन्द्रियत्वनिरिन्द्रियत्वमूलः। केचित् सेन्द्रियाः पदार्थाः, अपरे निरिन्द्रियाः। ये न्यूनाधिकभावेन सेन्द्रियास्ते मनुष्यपशुपक्ष्यादयस्तरुलतागुल्मादयश्च चेतना अर्धचेतना वा व्यपदिश्यन्ते। ये पुनर्निरिन्द्रिया भावाः क्षित्यादयस्ते जडा इत्यचेतना इति च प्रथन्ते। तदुक्तं चरके—

खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्॥

तदित्थं सर्वप्रजाकारणभूतस्य सर्वप्रजात्मभूततया परात्मपदव्यपदेश्यस्य ज्ञानकर्मात्मनः प्रजापतेरंशभूतयोरनयोर्ज्ञानमेकरसं स्थिरं प्रशान्तं न कदाचिदपि विपरिवर्तते। ज्ञानस्यैकरसत्वमिदं विद्यारण्यस्वामिना पञ्चदश्यास्तत्त्वविवेकाध्याये युक्त्या स्थापितम्। तदुक्तं तत्र—

"शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक्।
ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते॥

तथा स्वप्नेऽत्र वेद्यन्तु न स्थिरं जागरे स्थिरम्।
तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते॥

सुप्तोत्थितस्य सौषुप्ततमोबोधो भवेत् स्मृतिः।
सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः॥

स बोधो विषयाद् भिन्नो न बोधात् स्वप्नबोधवत्।
एवं स्थानत्रयेऽप्येका संवित् तद्वद् दिनान्तरे॥

मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा।
नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा"॥ इति॥

कर्म पुनस्तद्विपरीतमनेकमनेकविधमस्थिरमप्रशान्तं सर्वदा विपरिवर्तते। एकत्वाद् एकरसत्वात् स्थिरत्वादेवेदं ज्ञानममृतं सदिति चोच्यते।

अनेकत्वाद् अनेकविधत्वाद् अस्थिरत्वाच्चेदं कर्म मर्त्यं मृत्युरसदिति चाभिलप्यते। तदुक्तं शतपथश्रुतौ दशमकाण्डे "अर्धं ह वै प्रजापतेरात्मनो मर्त्यमासीद्, अर्धममृतम्" इति। गीतायामपि—

"अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन।"

इत्येवमहंपदबोध्यस्य परात्मनः सदसदात्मकत्वममृतमृत्य्वात्मकत्वं च प्रतिपादितम्। किञ्चेमे ज्ञानकर्मणी निरुक्तया दिशा स्वभावतः पृथग्भूते अपि अन्योन्यमोतप्रोते, नानयोरन्येन विनाऽन्यदवतिष्ठते। इमे एव ज्ञानकर्मणी आगमशास्त्रेषु शिवशक्ती इत्युच्येते। ज्ञानं शिवः, कर्म च तच्छक्तिः। शक्तिशक्तिमतोश्चाविनाभावः। अत एव श्रुतावनयोरन्तरान्तरीभावः श्रूयते—

"अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्।" इति।

तदेवमन्योन्यमोतप्रोतयोरन्तरान्तरीभावमापन्नयोरविनाभूतयोर्द्वयोरपि शक्यमेकत्वमास्थातुम्। एकस्मादेव च तस्माज्ज्ञानकर्ममयात् परात्मनोऽस्य सर्वस्य चेतनाचेतनप्रपञ्चस्य समुद्भवः। तदुक्तम् ऋक्संहितायाम्—"एकं वा इदं विबभूव सर्वम्" (८।४।२८) इति। अयमेव सर्वजगत्कारणभूतो ज्ञानकर्ममयः परात्मा पुरुष इत्यपि व्यपदिश्यते। पुरि शयनादेवास्य पुरुषत्वम्। सेन्द्रिया निरिन्द्रियाश्चेमाः सर्वाः प्रजा लोकापरपर्यायाः पूरित्याख्यायन्ते। तासामभिन्ननिमित्तोपादानतया तत्रैव शयानस्यास्य पुरुषपदवाच्यता। तदुक्तं शतपथे चतुर्दशकाण्डेऽन्यत्र च बहुत्र—

"स वा अयं पुरुषः, सर्वासु पूर्षु पुरिशयः।"
"सोऽयं पुरि शेते तस्मात् पुरुषः।"

गीतास्वपि—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।

इत्यादिनाऽस्येश्वरस्य लोकत्रयावेशः पुरुषत्वं चोक्तम्।

"तेनेदं पूर्णं पुरुषेण सर्वम्"
"पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्"

इत्यादिमन्त्रश्रुतयोऽपि ज्ञानकर्ममयस्य तस्यैकस्य पुरुषस्यैव सर्वजगत्कारणत्वमुद्घोषयन्ति। सेयमनेकेष्वेकदर्शनरूपा ज्ञानप्रक्रिया। अथ ज्ञानकर्मात्मनि तस्मिन् पुरुषे ज्ञानाश्रितं कर्म सृष्टौ प्रवर्तते, निलीनकर्म तु ज्ञानं

ततो निवर्तते—प्रतिसर्गं प्रवर्तयति। तत् स एक एवोर्णनाभिरिव सर्ग-प्रतिसर्गयोः प्रवर्तयिता।

कथमयमेकस्माद् नानाविधः सर्गः प्रवर्तते, कथं ज्ञानकर्मात्मकमिदमेकतत्त्वं विश्वरूपतया विपरिणतम्, केन क्रमेण परिणामो विवर्तो वा, इत्यनुभव एव विज्ञानशब्देन व्याह्रियते। एतत्प्रधानं च शास्त्रं विज्ञानं, संचरः, संभूतिरपरा विद्येति च बहुविधैः शब्दैर्व्यपदिशन्ति स्म पुरातना महर्षयः। अनयोर्ज्ञान-विज्ञानयोरेव सर्वासां विद्यानामन्तर्भावः। अत एवानयोर्ज्ञाने भगवदुक्ता ज्ञातव्यस्य निरवशेषतोपपद्यते।

अयमत्र स्फुटोऽभिप्रायः—ज्ञानकर्ममयाद् एकस्मात् पुरुषतत्त्वाद् अयं समस्तोऽपि पुरपदाभिधेयो विश्वप्रपञ्चः समुत्पद्यत इति पुरस्तादुपपादितम्। उत्पन्नं च भूत्वा न भवति, अन्ततः स्वकारणे निलीयते। अत एतेनापि विश्वप्रपञ्चेन स्वकारणे विलेतव्यम्। विलयं च स एव कारणात्मा ज्ञान-कर्ममयः पुरुषोऽवतिष्ठते। तत्र पुरुषो मौलिकं तत्त्वम्, विश्वश्च यौगिकम्। मौलिकं तत्त्वं बृंहणशीलत्वाद् ब्रह्मशब्देन प्रख्यायते शास्त्रेषु,अनेकयोगाज्जायमानं यौगिकं तु यज्ञशब्देन। ब्रह्मापरपर्यायं मौलिकं तत्त्वं सर्वत्रानुस्यूतं सर्वाधिष्ठानं यत्र विविच्यते तच्छास्त्रं ज्ञानप्रधानत्वाद् दर्शनशास्त्रं ब्रह्मविद्यामध्यात्मविद्यां च प्रवदन्ति विद्वांसः। तस्य विस्तारभूतं यज्ञापराभिधानं यौगिकं तत्त्वं यत्र प्रतिपाद्यते तच्छास्त्रं यज्ञविद्यां विज्ञानशास्त्रं चाचक्षते तद्विदः। ज्ञाने ब्रह्मविद्यायामेकत्वं प्रधानम्, विज्ञाने यज्ञविद्यायां तु नानात्वं प्रधानम्। "एकं वा इदं विबभूव सर्वम्" "प्रजापतिस्त्वेवेदं सर्वं यदिदं किञ्च" "तस्माद् वा एतस्मादाकाशः संभूतः" इत्यादीनि वाक्यानि विज्ञानप्रधानानि। एष्वेकत्व-मुद्दिश्य नानात्वं विधीयते। "सर्वं खल्विदं ब्रह्म" "इमे लोकाः प्रजापतिः" इत्यादीनि वाक्यानि ज्ञानप्रधानानि। एषु नानात्वमुद्दिश्यैकत्वं विधीयते। तथा चैकस्य नानात्वानुभवो विज्ञानम्, नानात्वे चैकत्वदर्शनं ज्ञानम्।

मा स्मैतज्ज्ञानविज्ञानयोः स्वरूपं व्याख्यातुरस्य स्वोत्प्रेक्षितं निराधारं वामन्यन्त विद्वांसः। अर्जुनं प्रति विज्ञानसहितं ज्ञानमुपदेष्टुं प्रतिज्ञाय भगवता कृष्णेनोक्तैर्वचोभिरेतस्यैवार्थस्य स्फुटं प्रतिपत्तेः। तथा हि गीतायाः सप्तमाध्यायस्य द्वितीयश्लोके "ज्ञानं तेऽहं सविज्ञानम्" इत्यादि प्रतिज्ञाय—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय।"

इत्येवमेकस्यानेकात्मतावगमप्रवणं विज्ञानमुपदिश्य—

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥

"रसोऽहमप्सु कौन्तेय" इत्यादिनानेकस्यैकात्मतावगतिप्रधानं ज्ञानमुपदिष्टम् । पुनरग्रे

"ये चैव सात्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि ।"

इत्येवं विज्ञानमुपक्रम्य

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति ।"

इत्येवं सर्वस्यैकवासुदेवात्मकत्वप्रतिपत्तिरूपे ज्ञान उपसंहृतम् । तथैव नवमाध्यायेऽपि "ज्ञानं विज्ञानसहितम्" इति प्रतिज्ञाय "मया ततमिदं सर्वं जगद्" इति विज्ञानेनोपक्रम्य "सर्वाणि भूतानि मत्स्थानि" इति ज्ञानमुपदिश्य "एकत्वेन पृथक्त्वेन" इति द्विविधमप्युपासनमुपदिष्टम् ।

ज्ञाने विज्ञानमुपयुज्यते । न हि विनेया एकपद एवास्य बहुधा विभिन्नस्य जगतो मूलमेकं ग्राहयितुं शक्याः, विज्ञानसाहाय्येन तु शक्याः, अत एव भगवता विज्ञानं पूर्वमुक्तम्, "विज्ञानसहितम्" इति विशेषणविधया विज्ञानोपन्यासेन तस्याप्राधान्यं च निर्दिष्टम्, ज्ञानोपयोगित्वात् तस्य । अतिमहतो वृक्षस्यातिलघुबीजात्मकता तस्य प्ररोहादिक्रमेण नानारूपता निदर्शनपुरस्सरमेव कथंचित् ग्राहयितुं शक्या, नास्त्युपायान्तरम् । एष एवार्थो भागवतस्यैकादशे स्कन्धे ऊनविंशेऽध्याये श्लोकद्वयेन सुस्पष्टं प्रतिपादितः । तथा हि—

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।
ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥

एतदेव हि विज्ञानं न तथैकेन येन यत् ।
स्थित्युत्पत्त्यप्ययान् पश्येद् भावानां त्रिगुणात्मनाम् ॥

अयमर्थः—स्थूणारुन्धतीन्यायेन साधर्म्यवैधर्म्याभ्याम् एकादशकं वा इदं सर्वम्, नवकं वा, पञ्चकं वा, त्रिकं वा इत्येवमनन्तानां भूतानां वर्गीकरणेनान्ते "एकमिदं सर्वम्" इत्येवमीक्षेत येन तज्ज्ञानमित्युच्यते । यद्यपि विज्ञानमप्येतदेव,

परं प्रकारोऽत्र भिद्यते, येन एकैनैव त्रिगुणात्मनामगणेयानां भावानामुत्पत्ति-स्थितिप्रलयान् यत् पश्येत् तद् विज्ञानमित्याख्यायते। कूर्मपुराणेऽपि -

"यया स देवो भगवान् विद्यया वेद्यते परः।
साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम्।

चतुर्दशानां विद्यानां धारणं हि यथार्थतः।
विज्ञानमिति तद्विद्याद्येन धर्मो विवर्द्धते।"

उ० खं० १५ अ०।

श्रीज्ञानदेवैरपि श्रीभगवद्गीतां व्याचक्षाणैरुक्तम्-

तीरलग्ना तरिरिव कुण्ठीभवति शेमुषी।
परावृत्तपदो दूराद्विचारश्चापसर्पति।

तर्कोऽपि नैवोत्सहते यत्र तज्ज्ञानमर्जुन।
प्रपञ्चोऽन्यत्तु विज्ञानमज्ञानं तत्र सत्यधीरिति॥

ज्ञानस्यास्मदुक्तं लक्षणन्तु स्पष्टं श्री भगवद्गीतास्वपि—

"सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" इति।

(भग. १८।२)

संक्षिप्यायमभिप्रायः—एकस्माद् अनेकस्मिन्नवतरणं विज्ञानं यज्ञविद्या। अनेकस्माद् एकस्मिन्नारोहणं ज्ञानं ब्रह्मविद्या। ब्रह्मविद्यातिरिक्ताः सर्वा अपि विद्या अनेकत्वप्राधान्याद् यज्ञविद्यायामर्थाद् विज्ञान एवान्तर्भवन्ति। आभ्यामेव ज्ञानविज्ञानाभ्यां मानवस्य कृतकृत्यता सम्पद्यते। तत्र विज्ञानमभ्युदयहेतुः, ज्ञानं तु निःश्रेयसजनकम्। इदमेव ज्ञानविज्ञानयुगलं मुख्यो धर्मः। अस्यैव "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इत्यभ्युदयनिःश्रेयससाधकत्वमाह भगवान् कणादः। इति कृतमप्रकृतविस्तरेण।

तत्रेयं मूलान्वेषणक्रमेणैकतत्त्वगतिःसूक्ष्मेषु तत्त्वेषु न प्रायेण प्रत्यक्षसाध्या, अनुमानं वा शब्दं वावलम्ब्य विचारेणैवेयं प्रादुर्भवति। बुद्धिमनुसृत्य च निष्पाद्यमाने निर्णये प्रक्रियाभेदा मतभेदाश्च भृशं विजृम्भन्त एव, बुद्धीनामैकरूप्याभावे मतैक्यस्य तत्र दुर्लभत्वात्। प्रक्रियाया ऐक्यं तु संभावयितुमप्यशक्यम्। अथैकस्यानेकरूपतायां तु सुस्फुटं प्रत्यक्षं प्रभवत्येवेति परोक्षरूपे प्रतिभासे ज्ञानशब्दः, प्रत्यक्षे प्रत्यक्षायिते वा स्फुटे प्रतिभासे तु विज्ञानशब्दः स्थाने प्रवृत्तः। अत एव—

"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।"

( भ. गी. ७।२ )

'ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।"

( भ. गी. ९।१ )

इत्यादिषु "विज्ञानसहितं-स्वानुभवसंयुक्तम्" इति श्रीशङ्कराचार्यप्रभृतिभिर्भाष्यकृद्भिर्व्याख्यातम् । एकमूलान्वेषणं केवलं मोक्षोपयोगि । एकस्यानेकरूपताविचारस्तु व्यवहारोपयोगितामप्यावहतीति क्रमेण व्यवहारोपयोगिनि ज्ञाने विज्ञानशब्दः, मोक्षोपयोगिनि ज्ञाने तु ज्ञानशब्दो निरूढिं गतः । तदभिप्रायेणैव —

"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।"

इति तत्रभवानमरसिंहो बभाषे । अनेनैव च पथाऽद्यत्वे वस्तुतत्त्वान्वेषणपरं 'साइन्स' इति नाम्ना प्रसिद्धं शास्त्रं विज्ञानशब्देनैव संस्कृतविद्वांसः परिचिन्वन्ति । तत्राप्येकत्वस्य विस्तार एव शिक्ष्यत इति ।

वस्तुतस्तु मोक्षोपयोगि तत्त्वमपि यदा न केवलं परोक्षविधया, अपि तु अनुभवपर्यवसायितया प्रतिपद्यते, तदा तदपि विज्ञानपदव्यपदेश्यतामेवावगाहते । तत एव तु भगवद्गीतासु "ज्ञानं विज्ञानसहितम्" इत्याद्यादिष्टम् । न हि शिल्पशास्त्रयोस्तत्र कापि कथा । अनुभवावसानमेव च तत्त्वज्ञानमविद्यानिवर्त्तकमाचक्षत आचार्याः । तेन ज्ञानस्याप्युज्ज्वलता विज्ञानेन संपाद्यते । किञ्च परोक्षप्रतिभासरूपे ज्ञाने ये मतभेदाः प्रक्रियाभेदा वा विभिन्नदृशां विजृम्भन्ते, ते तत्र दर्शनसमाख्यां लभन्ते । तेषु दर्शनेषु दृष्टिभेदप्रधानेषु पारस्परिकाणां वाक्कलहानामपि भवति संभावना । विज्ञाने त्वनुभवावसाने प्रत्यक्षायिते प्रतिभासे न कापि विचारभेदस्यापि संभावना, दूरे तु विचारभेदमूलकाः कलहा इत्यहो विज्ञानस्य महिमा । एवमयं विज्ञानशब्दो दार्शनिके विचारे अनुभवपर्यवसायितायां निरूढिं गत इति साधितम् । इत्थं क्रमेण विज्ञानशब्दस्यार्थविकासः, न तु मूलतोऽनेकार्थतेति भाव्यं सुधीभिः ।

[ अत्र केचिन्महानुभावा विद्वांसो विप्रतिपद्यन्ते—यत् श्रीशङ्करभगवत्पादैर्गीताभाष्ये यद् व्याख्यातम्—विशिष्टं ज्ञानम्, विशेषेण ज्ञानम्, अनुभवावसानं प्रत्यक्षायितं ज्ञानम्, स एव विज्ञानशब्दार्थो दार्शनिकप्रक्रियायां ग्रहीतव्यः, लोके त्वर्थान्तरपरो भिन्न एव विज्ञानशब्दोऽस्तु । एकस्यानेकरूपताप्राप्तिरूपेऽर्थे तु न प्रमाणम् इति ।

श्रीभागवतश्लोकमपि ते श्रीश्रीधरस्वामिरीत्या व्याख्याय अनुभवावसानतारूप एवार्थेऽनुकूलं मन्यन्ते । श्रीश्रीधरस्वामिभिर्हि—

"एतदेव हि विज्ञानं न तथैकेन येन यत् ।"

इति भागवतपद्यादूर्ध्वं "यद्-यदा येनैकेनानुगतान् एकात्मकान् भावान् पूर्वमैक्षत, तांस्तथा पूर्ववन्नेक्षेत [ किन्तु तदैकं परमकारणं ब्रह्मैव ], तदा एतदेव विज्ञानमुच्यते ।" इत्येवं व्याख्यातम् ।

"स्थित्युत्पत्त्यप्ययान् पश्येद् भावानां त्रिगुणात्मनाम् ।"

इत्युत्तरार्द्धन्तु परान्वयितया योजितम् । तेन भेदनिरसनपूर्वकमेकत्वदर्शनं विज्ञानपदार्थः सिद्ध्यति । अनुभवावसाने ब्रह्मज्ञानेऽप्येकत्वमेवावशिष्यते, जगत्प्रतिभानविलोपस्तत्र भवतीति श्रीशङ्करभगवत्पादैरेकवाक्यता सिद्ध्यति ।

अत्रेदमुच्यते, श्रीगुरुचरणानुमतेऽस्माभिः पूर्वमुक्ते विज्ञानशब्दार्थे सन्त्यनेका युक्तयः । तथा हि —

(१) श्रीभागवतपद्यस्यास्मदुक्तेऽर्थे स्फुटं भासमाना पूर्वोत्तरार्द्धयोरेकवाक्यता सिद्ध्यति । पक्षान्तरे तु सा समुच्छिद्यते । उत्तरार्द्धस्य पृथक् करणात् ।

(२) श्रीभागवतपद्ये अस्मदुक्तेऽर्थे कोऽप्यध्याहारो न कर्तव्यो भवति । पक्षान्तरे तु [ किन्तु तदैकं परमकारणं ब्रह्मैव ] इत्यादि विज्ञानशब्दार्थस्फुटीकरणमध्याहारलभ्यमेव । दोषश्चायमध्याहारः सत्यां गताविति न तिरोहितं मीमांसाचणानाम् ।

(३) श्रीश्रीधरस्वाम्याद्यभिमते विज्ञानशब्दार्थे परिगृहीते विज्ञानस्य प्राधान्यं स्यात्, ज्ञानं तु तदर्थमिति गौणं स्यात् । अनुभवावसानताया एव मुख्योद्देश्यत्वात् । श्रीभगवद्गीतायान्तु "ज्ञानं तेऽहं सविज्ञानम्" इति विज्ञानस्याप्रधानता दर्शितेति तद्विरोधः स्यात् । अस्मत्पक्षे तु एकस्यानेकरूपतां ज्ञात्वा परत एकतादर्शनमेव मोक्षोपयोगीति ज्ञानस्य प्राधान्यं सिद्ध्यति ।

(४) पक्षान्तरे अनुभवपर्यन्तं ज्ञानमेव विज्ञानमिति स्वीकृते विज्ञानं न केवलं शाब्दज्ञानमिति तस्य "वक्ष्याम्यशेषतः" ( भग. गी. ७ अ. ) इति वचनकर्मता न युज्येत । न हि विज्ञानं वक्तुं शक्यम्, अपितु निदिध्यासनेन प्राप्यम् । अस्मत्पक्षे त्वेकस्यानेकरूपता, अनेकेष्वेकस्यानुप्रवेशश्चेति द्वयमपि वक्तुं शक्यमेव । यथा च तत्राध्याये द्वयं प्रतिपादितम्, तथा स्फुटीकृतमेव पूर्वमिति न काप्यनुपपत्तिः ।

(५) पक्षान्तरे ज्ञानं विज्ञानस्वरूप एवानुप्रविष्टम्, शाब्दस्य ज्ञानस्यैवानुभवपर्यन्तत्वे विज्ञानरूपतालाभात्। ततश्च "ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्" ( भग. गी. १८ अ. ४२ श्लो. ) इत्यादौ द्वयोः पृथगुक्तिरनर्थिकेव। अस्मत्पक्षे तु ज्ञानप्रकारभेदाद् द्वयमपि सम्यगुक्तम्।

(६) इदं चाप्यनुसन्धेयम्—इदं गीतावचनं ( १८।४२ ) व्याचक्षाणैर्महामहिमभिर्बहुभिर्व्याख्यातृभिरस्मदुक्त एव विज्ञानशब्दार्थो भङ्ग्याङ्गीकृतः। तथा हि-श्रीमधुसूदनसरस्वतीमहाभागाः "विज्ञानं कर्मकाण्डे यज्ञादिकर्मकौशलम्, ब्रह्मकाण्डे ब्रह्मात्मैक्यानुभवः" इति व्याचक्षाणाः कौशलमेव विज्ञानं मन्वाना वीत्युपसर्गस्य विशेषार्थतां ध्वनयन्तः सर्वं शिल्पशास्त्रादिकं विज्ञानेऽन्तर्भावयन्ति।

"यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः।
धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥"

इति देवलवचनमुपन्यस्य च तदेव द्रढयन्ति। तेनानेकविषयं ज्ञानं विज्ञानमिति स्पष्टमेव प्रतिपद्यते। यस्तु ब्रह्मकाण्डे पृथगिव विज्ञानशब्दार्थस्तैर्विवदयते, न सोऽपि पृथक, किन्त्वत्रैवान्तर्भवतीत्युपरिष्टाद्वदयते। श्रीनीलकण्ठाचार्याः, श्रीशङ्करानन्दाः, श्रीसदानन्दाश्चैतमेव पन्थानमनुसरन्ति। श्रीराघवेन्द्रास्तु स्वीयेऽर्थसंग्रहे "ज्ञानं सामान्यतः, विज्ञानं विशेषतः" इति व्याख्यायास्मत्पक्षं द्रढयन्ति। "विज्ञानं परतत्त्वगतासाधारणविशेषविषयकं ज्ञानम्" इति श्रीभगवद्रामानुजाचार्या अपि विशेषार्थविषयकं ज्ञानमेव विज्ञानमाहुः। परतत्त्वस्य ज्ञेयेषु मुख्यतया परतत्त्वगता एव विशेषास्तैर्विषयत्वेन गृहीता इत्यन्यदेतत्। शब्दप्रवृत्तिस्तु परावरतत्त्वसाधारण्येनैवेति।

(७) पक्षान्तरे विज्ञानशब्दस्यानेकार्थताऽवश्याभ्युपगन्तव्या स्यात्। "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इति कोशबलेन लौकिकविद्यानामपि विज्ञानशब्दवाच्यताया अपरित्याज्यत्वात्। अस्मत्पक्षे तु 'एकस्यानेकताप्रतिपत्तिर्विज्ञानम्' इत्युक्ते अनेकत्वसहचराणां शिल्पादीनामपि विज्ञानान्तर्भावादेक एवार्थ उभयत्रानुगतो भवति—इति परमानुकूल्यम्। सत्यां गतावनेकार्थतास्वीकारस्य मीमांसकैः कदर्थितत्वात्। विज्ञानशब्दार्थस्य क्रमिको विकास एवास्मत्पक्षे सिद्ध्यति, न तु मूलत एवोच्छृङ्खला अनेकार्थता।

(८) अध्यारोपापवादन्यायेन गुरूपदेशः फलेग्रहिर्भवतीति वेदान्तिप्रक्रिया। तत्राध्यारोपो विज्ञानम्, अपवादश्च ज्ञानमिति सैव प्रक्रिया गीतासु भगवताप्याश्रितेति सम्यग् युज्यते। इयमेवाध्यारोपापवादप्रक्रिया प्रभवत्यनुभवावसानतां प्रापयितुमित्यभिप्रायेण "विज्ञानसहितम्—स्वानुभवयुक्तम्"

इति श्रीशङ्करभगवत्पादानां सप्तमाध्याय-द्वितीयश्लोकगीताभाष्यमपि नास्मत्पक्षे विरुध्यते। तत्रैव "विज्ञानं विशेषज्ञानम्"। "विज्ञानं विविधतया चिदचिद्रूपतया च तत्तद्विभूतिधर्मरूपतयाऽवान्तरविशेषैश्च यथार्थज्ञानम्" "विज्ञानसहितं ज्ञानं विशेषेण ज्ञातव्यसहितं माहात्म्यम्—सामान्यविशेषमाहात्म्यं च" इत्यादि व्याचक्षाणाः श्रीमदानन्दतीर्थपादाः, श्रीवल्लभाचार्यपादाः, श्रीराघवेन्द्राश्च स्फुटमस्मदनुकूलाः। "विज्ञानं हि विविक्ताकारविषयं ज्ञानम्" इति श्रीभगवद्रामानुजाचार्या अपि एतदेव समर्थयन्ते, सामान्यविशेषरूपताया एव तैरग्रे स्फुटीकृतत्वात्। श्रीज्ञानदेवानां संमतिस्तु पूर्वमेवोद्धृतेति नाम्रेडनमपेक्षितम्।

(९) 'विशेषेण ज्ञानम्, विशिष्टं ज्ञानम्' इति श्रीशङ्करभगवत्पादानां शब्दार्थः। 'विशेषेण ज्ञानम्—विशेषसहितसामान्यज्ञानम्—विशेषाणामपि ज्ञानम्' इति श्रीगुरुचरणानां शब्दार्थः-इति नात्र कोऽपि महान् विरोधो येन कोलाहल उत्तिष्ठेत्। वीत्युपसर्गस्योभयत्रापि विशेषार्थकत्वात्।

(१०) किंच—पाश्चात्यानां 'साइन्स्' शब्दस्यापि विशेषेण ज्ञानमेव शब्दार्थः। ते च विभिन्नपदार्थज्ञान एव शब्दमिममुपयुञ्जते। संस्कृतस्याप्ता विद्वांसोऽपि 'साइन्स्' शब्दार्थबोधकया विज्ञानशब्दमेव प्रयुञ्जते—इति तेषामप्यानुकूल्यमत्रैव सिद्धयति।

तदित्थमनेकोपपत्तिबृंहितं श्रीभागवतश्लोकयोरस्मत्कृतं व्याख्यानं न दूष्यतामर्हतीति विभावयन्तु सुधियो महाभागाः। श्रीभागवतव्याख्यासु च श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपेऽर्थोऽयमनुमतः "यत्-यदा एकेन तथा नेक्षेत परमकारणेन, यद्वैक्यं न पश्येत् किन्तु तत्तदसाधारणस्वरूपगुणादिबुभुत्सया वैलक्षण्यं पश्येत् एतदेव हि विज्ञानम्" इति तत्र व्याख्यातत्वात्। समानकर्तृककूर्मपुराणवचनं च यत्पूर्वमेवोद्धृतम् तेनास्मदुक्त एवार्थः स्फुटीभवति। न तत्समक्षं व्याख्यातृवचसां किमपि मूल्यम्।

एवं लौकिक्यां भाषायामस्मदुक्तो विज्ञानशब्दस्यार्थः सर्वत्र समनुगच्छतीति दिङ्मात्रेण निरूपितम्। वैदिक्यपि प्रक्रियातिसंक्षेपेण निदर्श्यते। उपनिषत्सु आत्मवाचकः, पञ्चसु कोशेषु अन्यतमकोषवाचकश्च विज्ञानशब्दः सुप्रसिद्धः। तत्र विज्ञानं जीवः, प्रज्ञानं प्राज्ञो वा परात्मेति श्रीशङ्करगवत्पादानामभिप्रेतम्। अत्रापि एकस्मादुद्भूताः—औपाधिकेन रूपेण विभिन्नतां गताः-अनेकत्वं प्राप्ता जीवा विज्ञानविषया इति विज्ञानशब्देन गृहीताः, सर्वत्रानुगतं परतत्त्वं तु ज्ञानरूपमिति प्रज्ञानपदाभिलप्यमिति युज्यतेऽस्मदुक्तार्थसंगतिः। पञ्चसु कोशेष्वपि विज्ञानमयकोशो बुद्धिरूपत्वादनेकतां भजते, आनन्दमयस्तु सर्वत्र निगूढ एक एवेति स्फुटं श्रीविद्यारण्यस्वा-

मिप्रभृतिभिर्व्याख्यातम्। अत्राप्यनेकरूपत्वाद्विज्ञानविषयः कोशो विज्ञानपदभागिति स्फुटास्मदर्थसंगतिः। एवमन्यत्राप्यूह्यम्। तत्सर्वत्रानुगतं विज्ञानशब्दस्य प्रवृत्तिनिमित्तमेकं संभवदप्युपेक्ष्यानेकार्थता तस्य शिरसि कुतः प्रसह्य निपातनीयेति नास्माभिर्बोद्धुं पार्यते। विद्वांसः पाठकाः सुविचार्यैतन्निर्णेष्यन्तीति कृतं विस्तरेण। ]

(प्रकृते तु 'साइन्स्' पदवाच्यं पदार्थज्ञानमेव विज्ञानशब्दार्थमभिप्रेत्य तद् वेदेषु प्राप्यते न वेति विचारः प्रवर्त्यत इति स्मर्तव्यम्।)

## वेदे का प्रक्रिया ?

इदं तु वक्तव्यम्। वेदेष्विमां विज्ञानसारामेव शैलीं प्राधान्येनोपलभामहे। एकस्मादेव मूलात्परस्परात्यन्तविलक्षणपदार्थघटितस्य जगत उत्पत्तिर्वेदेषु बहुधा प्रपञ्चिता, तत्तद्वस्तुधर्माश्च करतलामलकवद् विस्पष्टं ग्राहिताः। किमन्यत्, तत्र धर्मतत्त्वं मोक्षतत्त्वं च यत् प्राधान्येनोपदिष्टम्, तदपि वस्तुतत्त्वविवेचनप्रधानामनुभवपर्यवसायिनीं च विज्ञानशैलीमेव समालम्ब्य समुपदिष्टम्, न तु परोक्षमिव केवलं श्रद्धानप्रधानां शैलीमभिलक्ष्येति विवेचनपरा विद्वांसः सम्यगवगच्छेयुः। तस्माद् वैदिकं सर्वमपि ज्ञानम्—आत्मविज्ञानम्, ब्रह्मविज्ञानम्, धर्मविज्ञानमिति विज्ञानशब्देनैवोपदेष्टुमर्हम्। अत एव कर्मविधिपरेषु ब्राह्मणेषु प्रतिविधि † 'किमर्थमेवमेतत् करोति' इति जिज्ञासामुत्थाप्य वस्तुतत्त्वावलम्बेन तत्समाधानं तत्र तत्र पश्यामः। तेन च वस्तुशक्तिमवलम्ब्यैव वस्तुविज्ञानाधारोऽस्माकं धर्मोऽपीति सुस्पष्टं भवति।

उपनिषत्स्वपि च दृश्यवस्तुतत्त्वावलम्बिनीं निरूपणप्रक्रियाम्, बहुभिश्च तैस्तैर्दृष्टान्तैरात्मविद्याया अप्यनुभवावसानताप्रापणप्रयत्नमालोचयामः। छान्दोग्योपनिषत्सु षष्ठः प्रपाठकः, बृहदारण्यकोपनिषत्सु चतुर्थपञ्चमाध्यायौ चात्र विशेषेण निदर्शनार्हाः। धर्मब्रह्माङ्गभावेनैव च सर्वं वस्तुतत्त्वं कार्त्स्न्येन वेदेष्वालोचितं प्रतिजानीमः। अयमेव सर्वातिशायी प्रतिपादनप्रकारः सर्वविद्यादिभूतानां वेदानां किमपि गौरवमुद्भासयति। तत एव च वेदैकशरणानामार्याणां शिरोऽद्यापि जगत्युन्नतम्।

अथ वेदेषु परिश्राम्यद्भिरवदातप्रतिभैः श्रीगुरुचरणैर्दृष्टम्—यद्—यत्पदार्थविज्ञानम् (साइन्स्) अद्यत्वे विज्ञानपदस्य प्रसिद्धोऽर्थः, तदिदं सर्वमपि विज्ञानं मन्त्रेषु सुसूक्ष्मतरं सूत्ररूपेण संकेतविधया समुपदिष्टम्। ब्राह्मणादिषु च यथोपयोगं किञ्चिद् विवृतम्। यदा खलु जागर्ति स्म वैदिकं

---

† "तद्यदप उपस्पृशति, अमेध्यो वै पुरुषः" (१।१।१) इत्यादि शतपथब्राह्मणं द्रष्टव्यम्।

विज्ञानं भारते, तदा संकेतमात्रेणैव तं तमर्थं प्रतिपित्सवः प्रपद्यन्ते स्म। न बहु व्याख्यानमपेक्षितमभूत्। विद्ययाऽन्तःकरणं संस्कार्यमिति चासीत् तत्रभवतामार्याणां शैली। पुस्तकपरतन्त्रतामपि न ते विषेहिरे। अत एव—

"पुस्तकस्था च या विद्या परहस्ते च यद् धनम्।
कार्यकाले तु सम्प्राप्ते न सा विद्या न तद् धनम्।"

इत्यद्याप्यस्माकं नीतिर्जोघुष्यते। ततश्च ग्रन्थगौरवं तदात्वे नेष्टमासीत्। सूत्ररूपेणैव प्रतिपादनशैली प्रवर्त्तते स्म। अत एव वेदेषु तादृशीं विलक्षणां शैलीं पश्यामो यद् देवतास्तुतिपरेष्वेव मन्त्रेषु केनचिद् विशेषणेन तत्संबन्धि गभीरं विज्ञानं विद्योत्यते। स्तुवद्भिरेव चैतिहासिकं विवरणमपि तथैव कुक्षीक्रियते। अत्र कानिचिदुदाहरणानि संक्षेपेण दर्श्यन्ते—

"अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्।" (ऋ० १।१।१)।

इति दशतय्या आदिम एव मन्त्रे—

'पुरोहितम्' 'यज्ञस्य देवम्' 'ऋत्विजम्' 'होतारम्' 'रत्नधातमम्' इति पञ्च विशेषणान्यग्नेः श्रूयन्ते। तत्र 'पुरोहितम्' इति—अस्माकं पुरः स्थित एवात्राग्निः प्रस्तुतो न वैद्युतसौरावान्तरिक्ष्यदिव्यावग्नी इति स्तोतव्यस्य व्यावृत्तिं प्रदर्श्य, पुरो दृश्यमानेषु पार्थिवेषु सर्वेष्वपि वस्तुषु अग्नेर्व्यापकत्वमाह। "यत् किञ्चिद् दार्ष्टिविषयकम्, अग्निकर्मैव तद्" इति निगमयति भगवान् यास्कः (निरुक्ते ७ अध्याये)। मौलिकस्य तत्त्वस्याग्नेरेव चयनेन (ऊर्ध्वाधोभावेन, तिर्यग्भावेन चावस्थानेन) सर्वे पदार्था निष्पद्यन्ते, स एव चित्योऽग्निः। सर्वत्र पुनः प्राणरूपेणानुप्रविष्टश्च चितेनिधेयः—इति वैदिकं दर्शनम्। यत्तु वैज्ञानिका आधुनिका अग्नेर्यौगिकत्वं साधयन्तो मौलिकतां वारयन्ति, सैषा स्थूलाग्निप्रवणा दृष्टिस्तेषाम्। तापदाहजनक एव पदार्थस्तैरग्नित्वेन स्थूलदृष्ट्याऽभिमतः। वैदिके तु सिद्धान्ते प्राणरूपेण सर्वत्रावस्थितः दार्थोऽग्निरित्याख्यातः। तापदाहौ तस्यैव स्थूलावस्था। अन्यत्रापि मन्त्रेषु सुस्पष्टं व्यापकताग्नेर्निरुक्ता—

"गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि।"

(यजुः—१२-३७)

"गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम् ।
अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ॥"

( ऋक्० मं० १।७०।२ )

इत्यादिना। तत्र 'पुरोहितम्' अग्निं वदन् मन्त्रोयमादिमः पुरो दृश्यमानान् पार्थिवान् पदार्थान् अग्निरूपानाह। सर्वत्रावस्थितः किमयमग्निः करोति—इति द्वितीयेन 'यज्ञस्य देवम्' इति विशेषणेनोच्यते। सर्वमपि पदार्थजातं दृश्यमानं न कदाप्येकरूपम्, परिवर्तमानमेव त्विदं सर्वमुपलभ्यते। परिवर्तमानमपि च नैकान्ततः सत्तां जहाति। तदिदं सर्वं यज्ञकृतम्। स्वीयानां भावानामन्यत्रार्पणम्, अन्यतश्च भावानामादानमितीयमादानप्रदानप्रक्रिया यज्ञः। यथा प्रदीपः प्रकाशं सर्वत्रार्पयति तैलावयवांश्चाजस्रमादत्ते, वृक्षलताः पुष्पफलानि ददति, पृथिव्या अपां च रसमजस्रमाददते। प्राणिन आहारमाददते, मलं बलं च तत्र तत्र प्रयोजयन्तीति सुस्फुटं सर्वत्रानुभूयेत सूक्ष्मया दृशा। सोऽयमादानप्रदानापरपर्यायोऽन्नान्नादभाव एव प्राकृतो यज्ञ उच्यते, स चायमग्निसाध्य इत्यग्निरेव यज्ञस्य देवः। अग्नौ सोमाहुतिरेव यज्ञसंपादिका। अनेनैव यज्ञेन सर्वेषामुत्पत्तिः स्थितिश्च। प्राणिनामङ्गपोषो वृक्षादीनां पर्णपुष्पादिप्रसवश्च सर्वोऽग्नियज्ञसाध्यः। तदेतद्वृक्षादिविषयेऽ यत्रापि स्फुटीकृतम्—

"प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ।"

( ऋक् १०।७९।३ )

एतद् व्याख्यातं श्रीमाधवाचार्यैः—"अयमग्निः, मातुः पृथिव्याः सम्बन्धिनीः, उर्वीः—बह्वीः, वीरुधः—लताः, इच्छन्—कामयमानः, प्रसर्पत्—प्रसर्पति—प्रसरति। किमिव, कुमार इव, स यथा स्तन्यं पातुं जानुभ्यां सर्पति, तद्वत्। ससं न पक्वम्—पक्वमन्नमिव, शुचन्तम्—दीप्यमानं नीरसं वृक्षम्, रिपः पृथिव्या उपस्थे, अन्तः—उत्सङ्गे, अन्तरविदत्—विन्दति। पुनः कीदृशम्, रिरिह्वांसम्—आकाशमास्वादयन्तम्, यद्वा मूलैर्मातरं पृथिवीं रिरिह्वांसम्"। इति। अत्र तृतीयचतुर्थयोः पादयोरेकवाक्यताचार्येण संपादिता। एतदपेक्षया तयोः पृथग् वाक्यत्वं यदि स्यात्—पक्वमन्नमिव शुचन्तम्—नीरसं वृक्षमविदत्, रिप उपस्थे अन्तः—पृथिव्या उत्सङ्गे, रिरिह्वांसम्—रसमास्वादयन्तं चाविन्ददिति, ततोऽधिकं स्पष्टता स्यात्। वृक्षलतादिषु सिक्तं जलमादित्यरश्मय ऊर्ध्वमाकृषन्ति, तेन सहैव तज्जलसंसक्तः पार्थिवोऽग्निरप्यूर्ध्वमाक्रमते, तदेतदग्नेरुत्सर्पणमृचः पूर्वस्मिन्नर्द्धे स्फुटमुक्तम्। तस्यैतस्य चीयमा-

तस्याग्नेरुपरितनो भागो वायुसंपर्काच्छुष्कतामापद्यते—अन्तस्तु प्रवहत्येव रसोऽजस्रम् । जले हि सोमस्य प्राधान्यमिति स्फुटीकृतं श्रुतौ—

"त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥"

( ऋ० अष्ट० १ अ० ६ वर्ग २३ )

ततश्च पार्थिवेऽग्नौ सोमाहुतिरेव वृक्षाद्युत्पत्तिहेतुरिति यज्ञस्य हेतुता सिद्धा। अनेन यज्ञेनैव वृक्षादीनामूर्ध्वं तिर्यक् च क्रमेण विस्तारः, तिर्यग्रस-प्रसार एव शाखापर्णादिजनकः, तस्यैव च रसस्य पर्णपुष्पफलादिरूपेण क्रमेण परिणामः। परं कस्य वृक्षलतादेः कियती प्रसृतिरूर्ध्वं तिर्यग्वेति सर्वमिदं मूले स्थितस्य प्राणस्यायत्तम्। सेयं मूलशक्तिरेवास्यामृचि 'प्रतरम्' 'गुह्यम्' इति संकेतिता। प्रसरतः पार्थिवस्य रसस्य कृष्णवर्णतायाः, आदित्यस्य च 'पिशङ्गं द्रापिं प्रतिमुञ्चते कविः' (ऋक् सं० ४।५३।२) इति पीतवर्णतायाः श्रुतत्वेनोभयोः संयोगाद्धरितं रूपं वृक्षपर्णादिषूपलभ्यते। यदा तु यमेन प्रतिबद्धो रसो नोपसर्पति, तदा केवलस्यादित्यस्य पीतमेव रूपं पर्णेषु प्रतिभासते। तदा मूलात् प्रवर्ग्यमाप्तोऽयमग्निः पृथगवस्थया पर्णादिषु स्थिरो भवति। एवमेव शुष्केष्वन्नेष्वपि भिन्नयैवावस्थयाग्नेरवस्थितिरिति ते उभे अप्यवस्थे पृथगृचि प्रतिपादिते। "अग्निर्वै शर्म्माण्यन्नादीनि प्रयच्छति" (ऐ. ब्रा. २।५।६) इत्यादिना ब्राह्मणेषु च विस्पष्टीकृतं विज्ञानमिदमिति कृतं विस्तरेण।

अथ प्रथमायामृचि तृतीयं विशेषणमृत्विजमिति। ऋतुभिर्यजति—संगच्छत इति वा, ऋतून् यजति-ददातीति वा तस्यार्थः। प्रथमे विग्रहे ऋतस्य सौराग्नेरवयवा एव ऋतुशब्दार्थः। द्वितीये तु तत्तत्फलपुष्पादिजनकत्वेन प्रसिद्धः स स काल एव ऋतुशब्दार्थः।

उभयथापि सौराग्निना सङ्गतोऽयं पार्थिवोऽग्निस्तत्तदृतुव्यपदेशप्रयोजक इति सिद्ध्यति। सौरस्य संवत्सररूपतामाप्तस्याग्नेरपेक्षयैव ऋतूनां नामान्यपि क्लृप्तानि। अग्नयोऽत्र वसन्तः-क्रमेण सर्वत्र व्याप्नुवानः सन्ति, स कालो वसन्त इत्याख्यायते। यदा तु सर्वानर्थान् गृह्णानः-आत्मसात्कुर्वाणोऽस्ति, स कालो ग्रीष्मः, ग्रहधातोः परोक्षवृत्या निष्पन्नत्वादस्य शब्दस्य। यदा तेऽग्नयः प्रवृद्धा भवन्ति तदा वर्षाः, वृध्धातुनिष्पन्नोऽयं शब्दः। अथ परां वृद्धिं प्राप्य यदा क्षयं गन्तुमारभन्तेऽग्नयः तदा (शरन्तोऽग्नयो यत्र) शरत्कालः, हीनतायां हेमन्तः, सर्वथा विशीर्णेषु चाग्निषु शिशिर इति। 'जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति' इति यास्कपरिपठिताः, षड्भावविकारा

एव ऋताग्निसंबन्धेनेह ऋतुवाचकैः शब्दैः प्रदर्शिताः। ऋत्ववयवभूतानां चैत्रादिमासानां वैदिकानि नामान्यपि—मधुः, माधवः, शुक्रः, शुचिः, नभाः, नभस्यः, इषः, ऊर्जः, सहाः, सहस्यः, तपाः, तपस्यः-इत्येतानि तेषु तेषु मासेषु ऋताग्निसंबन्धाद्यत्पृथिव्यां पार्थिवेषु प्राणिषु वोत्पद्यते तन्मूलकान्येव। यदा हि मधु समुत्पद्यते—स मासो मधुः। मधुप्रकर्षसंबन्धी च माधवः-इत्यादीत्यहो वैज्ञानिकं विजृम्भितं सुरभारत्याः। यत्र हि अन्यासु वैज्ञानिकतामानिनीषु भाषासु जूनंनामकः पुरुषविशेषो यत्रोत्पन्नः स जून इति, जूली च यस्मिन् मासे जातः स जुलाई-इति मनुष्यसंबन्धेन मासनामानि भवन्ति, तत्र संस्कृतभाषाया मासनामश्रवणादेव तन्माससंबन्धि विज्ञानं प्रतीयते इति दृश्यतां सुरभारत्या गौरवं विस्फार्य चक्षुषी भाषान्तरपक्षपातिभिः।

आस्तामप्रकृतम्। ऋतुविज्ञानमेवेदानीं संक्षेपेण वक्तव्यम्। ऋतः सौरोऽग्निरेव ऋतूनां प्रधानं कारणम्, परं नैकरूपः स विभिन्नप्रकारानृतून् जनयितुमलमिति सोमसंबन्धस्तत्र विभिन्नदशासंपादनायापेक्षणीयः। सोममण्डलं च चन्द्र इति चन्द्रस्याप्यृतुजनकत्वमाम्नातम्—

"पूर्वापरं चरतो माययैतौ
शिशू क्रीडन्तौ परियातो अध्वरम्।
विश्वान्यन्यो भुवनाभिचष्टे
ऋतूंरन्यो विदधज्जायते पुनः॥"

(ऋक् १०।८५।१०)

सूर्याचन्द्रमसावस्मिन् मन्त्रे प्रस्तुतौ, तावेव शिशू इति रूपितौ। तत्रैकः सूर्यो भुवनानि प्रकाशयति, अन्यस्तु चन्द्र ऋतून् विदधत्पुनः पुनर्जायत इति चन्द्रस्यापेक्षाकृतं प्राधान्यमुक्तम्। तदित्थं सूर्याचन्द्रमसावृतूत्पादकौ, किन्तु तत्तदृतुषु या फलपुष्पान्नादिसमृद्धिस्तत्र हेतुः पार्थिवोऽग्निरेव। न हि पार्थिवाग्निसंबन्धमन्तरेण पृथिव्यां किमप्युत्पद्येत नाम। सूर्याचन्द्रयोः प्रभावः पार्थिवेऽग्नौ, पार्थिवश्चाग्निस्ताभ्यां संगत्य तत्तदन्नादिजनक इति सर्वमिदम् 'ऋत्विजम्' इति त्रिभिरक्षरैरुक्तम्।

'होतारम्' इति चतुर्थं विशेषणं ह्वेञ्धातोर्होतृशब्दं निष्पाद्य ब्राह्मणेषु व्याख्यातम्। तेनाग्निर्देवानाह्वयति, अग्निद्वारैवास्माकं सौरमण्डलस्थैर्देवैः संबन्ध इति गभीरं तत्त्वं विज्ञायते, यद्द्यापि सर्वथा परोक्षं वैज्ञानिकानाम्। अथ पञ्चमम् 'रत्नधातमम्' इति विशेषणम्-अग्निरेव सुवर्णमणिप्रभृतीनां रत्नानामुत्पादयितेति भूगर्भविज्ञानं स्फुटयति। हिरण्योत्पत्तिविज्ञानं ब्राह्मणे

स्फुटमप्युपलभ्यते "आपो वै वरुणस्य पत्न्य आसन्, ता अग्निमभ्यध्यायन्त, ताः समभवन्, तस्य रेतः परापतत्, तद्धिरण्यमभवत्" (तैत्तिरीयब्राह्मणे १।१।६) रसेऽग्निवीर्यसंबन्धाद्धिरण्योत्पत्तिरित्यत्र स्फुटं भवति । अत एव चाग्निर्हिरण्यरेता इति संस्कृतभाषायामाख्यायते। तदित्थं परिमिताक्षरैः पञ्चभिर्विशेषणैः कियद्विज्ञानं वयं शिक्षिता इति विचार्यतां मनाङ् महाभागैः।

तथैव यजुःसंहिताया आदिमे मन्त्रे—

इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु, श्रेष्ठतमाय कर्मण आप्यायध्वम्।

इत्यादौ--इडित्यन्नम्, ऊर्गिति बलम्, तद्वायोरेवान्नबलसंपादकत्वं वृष्टिद्वारेणेति वायोर्गुणाः, वायौ च गतिः सूर्यप्रेरणयेति विज्ञानसिद्धान्तः स्फुटीभवति। 'हे वायवः! सविता देवो वः प्रार्पयतु-प्रेरयतु' इति सूर्यप्रेरणया वायौ गतेः सुप्रतिपन्नत्वात्। 'सवितृप्रसूत एष पवते" इति शतपथब्राह्मणे तद् व्याख्यानम्। किंच "यज्ञो हि श्रेष्ठतमं कर्म" तस्मै "श्रेष्ठतमाय कर्मणे यूयमाप्यायध्वम्--परिपुष्टा भवत' इति व्याख्यातपूर्वस्य प्राकृतस्य यज्ञस्य वायुपरिपोषाधीनत्वमप्यत्र शिक्षितम्।

सूर्यसंबन्धे तु "प्राणः प्रजानामुदयत्येष सूर्यः" "नूनं जनाः सूर्येण प्रसूताः" इत्यादि बहुतरं श्रुतिषु श्रुतम्। अस्मदधिष्ठितस्यास्य ब्रह्माण्डस्य सूर्य एवाधिनायकः, स एवोपरिष्टाद्वर्तमानानामपि मण्डलानां नियन्ता निवेशयिता चेति सर्वातिशायि माहात्म्यं सूर्यस्य श्रूयते।

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्।

(ऋ० १।३५।२)

इति हि सौरे मन्त्रे अमृत--मर्त्यनिवेशकत्वम्। सूर्यादुपरिष्टाद्यत् तदमृतम्, अर्वाग्भूतं च मर्त्यमिति ब्राह्मणेषु बहुत्रोपलभ्यमानेयं परिभाषा श्रीगुरुचरणानां ग्रन्थेष्वसकृद् व्याख्याता। तदुभयनिवेशकत्वं मध्यस्थितस्य सूर्यस्यात्र विज्ञातम्। किं च 'कृष्णेन रजसा-लोकेन, आवर्तमानः' इत्युक्त्या प्राणभूतस्य देवस्यादित्यस्य लोकभूतमिदं मण्डलं कृष्णवर्णमित्यस्मान्मन्त्रात् स्फुटीभवति, यत्रेदानीन्तना अपि वैज्ञानिका हस्तपादं प्रसारयन्ति। ते हि 'सूर्यमण्डले कृष्णवर्णा बहवो भागाः ( धब्बा )' इत्यद्यावधि यन्त्रैर्विनिश्चिन्वन्ति, श्रुतौ तु सर्वमपि मण्डलं कृष्णवर्णं श्रूयते, या तु पीतरक्तताऽस्माभिरनुभूयते, सा रथस्येति 'हिरण्ययेन रथेनायाति' इत्यादिना स्फुटीकृतम्। संसक्तानि स्वभक्तिभूतानि देवान्तराण्येव रथाश्ववाहनादिरूपतया देवानां मन्यन्त इति व्याख्यातं

निरुक्तकृता भगवता यास्केन। तेन संसक्त--सविकारिप्राणसंबन्धाद्धिरण्यवर्णता सूर्यमण्डलस्य प्रतीयत इति श्रौतः सिद्धान्तः, सोऽयापि दुरवगम एव विकलयन्त्रसहायानामाधुनिकवैज्ञानिकानाम्। यस्त्वयमस्माभिः सौरः प्रकाशोऽनुभूयते, स सौररश्मिसंपर्कात्सर्वत्र व्याप्तस्य सोमस्याभिज्वलनान्निष्पन्न इति श्रूयतेऽन्यत्र--

सोमेनादित्या बलिनः ( ऋ० सं० १५।८५।१ )

आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्।

परो यदिध्यते दिवि ( ऋ० ८।९।३० )।

इत्यादौ। प्रत्नं रेतः सोम एव। स एव च दिवः—सूर्यमण्डलात्परस्तादपीध्यते-प्रदीप्यते इति।

अथापरोऽयं सौरो मन्त्रः—

उदु त्यं जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्यम्। (ऋ० अष्ट० १-४-७)

अत्र केतवः किरणाः, विश्वस्मै दर्शयितुं सूर्यं देवमुद्वहन्ति-ऊर्ध्वं प्रापयन्तीत्यर्थः प्रतीयते, व्याख्यातश्च तथैव भाष्यकारैः। परं विचारदृशा नेदं सम्यक् प्रतीयते, ऊर्ध्वस्थितमादित्यमधः स्थितानस्मान् किरणा दर्शयन्ति, तेन उपवहन्तीति वक्तव्यं स्यात्, कुतस्तु उद्वहन्तीति। ऊर्ध्वमपि सूर्यकिरणाः प्रसरन्तीति चेत्, प्रसरन्तु नाम, न तावतास्माकं किमपि सिद्धयति। अस्मभ्यं दर्शनन्तु अधः प्रसरणादेव भवति। ततश्च विश्वाय दृशे उद्वहन्तीति अनुपपन्नमिव। परमिदं तदैवोपपद्यते—यदा वैज्ञानिकानामेष सिद्धान्तोऽधीयते-यद् यावत्सूर्योऽस्मत्क्षितिजादधस्तादेव भवति, नेत्रसूत्रसम्बन्धं नैव गच्छति, तावदेव तत्किरणाः पृथिव्या उपरिष्टाद्वायुमण्डले पतिता वक्रीभूयास्मन्नेत्राणि अनुप्रविष्टाः स्वसंमुखभागे सूर्यं दर्शयन्ति। सूर्यस्य वास्तविकोदयाद्बहुपूर्वमेव सूर्योदयोऽस्माभिरभिमन्यत इति यावत्। किरणानां वक्रीभावोऽयं जलादौ स्फुटमनुभूतचरः। यावदियं घटना, तावदेव सूर्यमण्डलं रक्तं प्रतीयते। ततश्च क्षितिजादधःस्थितमेव सूर्यं केतव उद्वहन्ति-विश्वं दर्शयन्तीति प्रस्फुटं जातम्। एवं वैज्ञानिकविचारेणैव ये सम्यगुपपद्यन्ते, तादृशा बहवः सन्ति मन्त्राः—

अभिद्रवन्त समनेव योषाः।
कल्याण्यः स्मयमानासो अग्निम्।

( ऋ. अष्ट. ३।८।११ )

इति मन्त्रं दैवतकाण्डप्रथमाध्याये व्याचक्षाणस्तत्रभवान् यास्कः—

"अभित उदकधाराभिरान्तरिक्ष्योऽग्निर्दीप्यते"

इति वदन् वैद्युतं विज्ञानं श्रुतिषु स्फुटमभ्युपगच्छति।

अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ।
गर्भे सन् जायसे पुनः । (यजुः १२।३६)
(हे अग्ने तव अप्सु साधिः-सहस्थानम् ।
त्वं गर्भे-अन्तः स्थितः पुनः जायसे । )

यो अनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईडते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥
( ऋ. मं. १०।३०।४ )

इत्यादिषु मन्त्रेष्वपि स्फुटं विद्युद्विज्ञानम्। 'अपां नपात्' इति हि अन्तरिक्षाग्निनामसु पठ्यते निघण्टुषु । ततश्च-अविन्धनः, अप्सु अन्तर्वर्तमानः, आन्तरिक्ष्योऽग्निः-इत्यतः परं किं विद्युतः परिचयदानं संभवेत् ?

अस्य वामस्य पलितस्य होतु-
स्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्या-
त्रापश्यं विश्पतिं सप्तपुत्रम् ।
( ऋ० २।३।१४५ )

इति मन्त्रे च 'वामस्य' 'पलितस्ये'ति सूर्यमुपक्रम्य मध्यम आन्तरिक्ष्योऽग्निः 'तद्भ्राता'-तद्भरणीय उक्तः, तेन विद्युतः सूर्यादुत्पन्नतापि स्फुटीकृता। किमन्यद् विद्युत्येवावलम्बमानमाधुनिकं विज्ञानं विद्युतस्तत्त्वमद्यापि न बुध्यति-भूतरूपेयम्, केवलशक्तिरूपा वेत्यद्यापि विचारयत्येव। श्रुतिस्तु तस्या इन्द्ररूपतां सूर्याद्भरणीयतां स्पष्टैः शब्दैराचष्ट इति किमपि माहात्म्यं श्रुत्या आविर्भवति।

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवम् ।
( ऋ० १।२३।२० )

इति मन्त्रेण जलेऽन्तरग्निसत्तां ब्रुवाणेन जलस्य यौगिकता स्फुटीकृता, यामद्यत्व आडम्बरेण साधयन्ति वैज्ञानिकाः ।

सर्वाणि रूपाणि सूर्यरश्मिभिरेव निर्मीयन्ते, शुक्लं कृष्णं चेति द्वे एव रूपे मुख्ये; तत्सन्धिगतं रक्तम्, मिश्रणजानि चान्यानीत्यस्ति रूपविषये वैज्ञानिकानां दर्शनम् । तदपि—

इन्द्रा रूपाणि कनिक्रदचरत् [तैत्तिरी. सं०]

शुक्रं ते अन्यद् यजतं ते अन्यद्

विषुरूपे अहनी द्यौरिवासि ।

विश्वा हि माया अवसि स्वधावन्

भद्रा ते पूषन्निह रातिरस्तु ॥

( ऋ. ६।५८।१ )

इत्यादिषु स्फुटमाम्नातम् । इह शुक्रम्-शुक्लम्, यजतं च कृष्णमिति व्याख्यातं भाष्यकृता । विस्तरभयात्सर्वेषां मन्त्राणां स्फुटार्था अत्र न निरूपिताः, भाष्यादिषु जिज्ञासुभिर्द्रष्टव्याः ।

अपि च ऋक्, साम, यजुः, छन्दः, स्तोमः, मनोता, अहः, सहस्रम्- इत्याद्याः परश्शताः शब्दा वेदेषु भूयो भूयः समुपलभ्यन्ते, ये वैज्ञानिकेष्वर्थेषु संकेतिताः सन्ति । यथाधुनिकेषु व्याकरणादिशास्त्रेषु परिभाषितशब्द-महिम्नाऽनायासेन भूयानर्थोऽवबुध्यते, तथा वेदेषु संकेतितानामेषां शब्दानां यथार्थं संकेतं ब्राह्मणादिभिर्ज्ञात्वा सुमहद् विज्ञानमनायासेन स्वल्पैरेवाक्षरैः शक्यमवबोद्धुम् । अत्यल्पमिदं निदर्शितम्, अतिगभीराणि विज्ञानानि स्वल्पाक्षरैः पदैरुपदिष्टानि पदे पदे समुपलभ्यमानानि वेदस्य कमपि गरिमाणं ख्यापयन्ति, तानि वेदमहाब्धौ ससाहसं सोत्साहं च निमज्जद्भिरेव सुलभानि ।

## स्फुटानि विज्ञानानि—

कानिचित्तु विज्ञानानि तथा विस्पष्टमप्याम्नातानि, यथा आपाततोऽपि तदवलोकनेन वेदेषु विज्ञानमस्ति न वेति संशयलेशोऽपि न तिष्ठेत्; परं तान्यपि सूत्ररूपेणैवाम्नातानि पश्यामः । अत्रापि निदर्शनद्वयमुपस्थाप्यते-

अनवर्णे इमे भूमी इयं चासौ च रोदसी ।

किं स्विदत्रान्तराभूतं येनेमे विधृते उभे ।

विष्णुना विधृते भूमी इति वत्सस्य वेदना ।

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।

व्यस्तभ्नाद् रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥

(तैत्तिरीयारण्यके १।८।५।६)

इह पृथिवीमण्डलस्य सूर्यमण्डलस्य च कथं समानान्तरं धारणमिति प्रश्नमुत्थाप्य विष्णुकर्तृकं धारणं स्फुटैरेवाक्षरैर्व्यवस्थापितम् । तत्र च ऋक्-

संहितापठितो मन्त्रः (७।८८।३) 'इरावती' इत्यादि प्रमाणत्वेनोपन्यस्तः। विष्णुशब्दोऽयमादित्यनामसु निघण्टुषु पठितः, ब्राह्मणेषु पुराणेष्वपि चादित्यस्य विष्णुशब्दाभिधेयता प्रस्फुटा। तेन मण्डलद्वयमिदं सूर्यमण्डलान्तर्गतेनादित्यप्राणेन विधृतं तिष्ठतीति सूर्याकर्षणविज्ञानमत्र प्रस्फुटं भवति। अयमेवादित्यप्राण इन्द्रशब्देनापि श्रुतिष्वाख्यायते—

यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी

इति।

इन्द्रस्य न केवलं पृथिवीधारकत्वमपि तु तत्प्रेरणेनैव पृथिव्या दैनन्दिनगतिरित्यपि श्रुत्यन्तरे स्पष्टमुक्तम्—

यज्ञ इन्द्रमवर्धयत्, स भूमिं व्यवर्तयत्।
चक्राण ओपशं दिवि॥

(ऋ० सं० ८।१४।५)

(ओपश-पदं शृङ्गवाचकम्)

किरणानां व्याघातेन वक्रीभावे शृङ्गं भवतीति वैज्ञानिकी परिभाषा।
तथैव—

तिस्रो मातृस्त्रीन् पितॄन् बिभ्रदेक
ऊर्ध्वस्तस्थौ नेममवग्लापयन्ति।

(ऋ० १।१६४।१०)

तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्।

(ऋ० २।२७।८)

इत्यादिष्वपि बहुषु मन्त्रेषु सूर्यकृतं पृथिव्यादिधारणमुपदिशद्भिराकर्षणविज्ञानं स्फुटीकृतम्। तिस्रो भूम्यस्तिस्रो दिवश्चात्रोक्ता अग्रे व्याहृतिनिरूपणे संक्षेपेण व्याख्यायन्ते। तथैव—

मनो देवा मनुष्यस्याजानन्तीति, मनसा संकल्पयति, तत् प्राणमभिपद्यते, प्राणो वातम्, वातो देवेभ्य आचष्टे—यथा पुरुषस्य मनः। तस्मादेतदृषिणाऽभ्यनूक्तम्—

मनसा संकल्पयति तद् वातमपि गच्छति।
वातो देवेभ्य आचष्टे यथा पुरुष ते मनः।

(शत० ६।५।५)

इति शतपथब्राह्मणे, तत्र प्रमाणीकृते अथर्वसंहितामन्त्रे (१२।४।१५) च विस्पष्टैरक्षरैर्मनोविज्ञानमाम्नातम्, यद् देवा-विद्वांसः, वायुमण्डलं पुरुषं परितो वर्तमानं परीक्ष्य तस्य विचारान् ज्ञातुं प्रभवन्तीति नात्र मनागपि व्याख्याया अपेक्षा।

अल्पमात्रं निदर्शितम्। वर्षादिविज्ञानं तु मन्त्रेषु निरुक्तादिष्वपि स्फुटं

विद्वानेवमेतां वेदानां मातरं सावित्रीं संपदमुपनिषदमुपास्ते' (गोपथब्रा-पू-१।३९) इति गोपथश्रुतौ तु वेदानां माता गायत्री श्रूयते। त इमे वैज्ञानिकप्रक्रियामनवलम्ब्य न चेतस्तोषकरं समाधातुं शक्याः। 'मुखमस्तीति वक्तव्यम्' इति न्यायं कृतार्थयंस्तु सर्वोऽपि किमपि समाधानं तत्र तत्र वक्त्येव। परं चेतस्तोष एवंविधेषु वैज्ञानिक्यैव प्रक्रियया संभवति।

तदित्थं विज्ञानेतिहासयोरन्वेषणं महाफलमिति न्यदर्शयाम। तत्र विज्ञानप्रधानेषु श्रीगुरुचरणग्रन्थेषु ऋषीणां तत्त्वबोधको वैदिकसृष्टिप्रक्रियासमर्थक एष 'महर्षिकुलवैभव'नामा ग्रन्थ इदानीं प्रकाश्यते। तस्येदं प्रथमं खण्डम्, तेन सह उपोद्घातस्यापि प्रथममेव खण्डं प्रकाशयामः। का शैली श्री गुरुचरणानां वेदविज्ञानप्रक्रियायाः, क एषां क्रमः, कश्च तत्त्वनिरूपणप्रकार इति सर्वमिदमुपोद्घातस्य द्वितीये खण्डे प्रदर्शयिष्याम इति।

**गिरिधरशर्मा चतुर्वेदः**

(जयपुराभिजनः)

(काशी हिन्दूविश्वविद्यालयस्य

संस्कृतशिक्षासंचालकः)



ओ३म् ।

# मूलस्थविषयानुक्रमणिका

विषयाः | पृष्ठाङ्क


| विषयाः | पृष्ठाङ्क |
|---|---|
| १ मङ्गलं प्रतिज्ञा च | १ |
| २ ऋषिशब्दस्य चत्वारोऽर्थाः | ३ |
| ३ वाक्प्राणमनांसि कर्मब्रह्माणि | ४ |
| ४ प्राणाः असच्छब्दऋषिशब्दाभ्यां वाच्याः, तत्र श्रुतयः, | ७ |
| ५ देवानामृषीणाञ्च भिन्नत्वम् | १४ |
| ६ ताराणामृषिशब्दवाच्यता श्रुतिसिद्धा | १८ |
| ७ सप्तर्षीणां ध्रुवसन्निधौ सन्निवेशः | २३ |
| ८ देवादीनां रश्मिस्थानत्वम् | २५ |
| ९ विद्या-ब्रह्म-वेदानामौपाधिको भेदः, व्यवहारसाङ्कर्यञ्च | २५ |
| १० वेद-मन्त्र-शब्दार्थयोरपि भेदो व्यवहारसाङ्कर्यञ्च | २७ |
| ११ समुदायदृष्टाः शब्दा अवयवेष्वपि प्रवर्तन्ते | २८ |
| १२ वेदस्य ब्रह्मशब्दवाच्यता | २९ |
| १३ वेदे कस्य कस्य विज्ञानम् | ३० |
| १४ वेदोपदेष्टार ऋषयः | ३१ |
| १५ ऋषीणां मन्त्रकर्तृत्वम्, द्रष्टृत्वञ्च श्रुतिप्रमाणसिद्धम् | ३२ |
| १६ ऋषीणां वेदकर्तृत्वे युक्तिः प्रमाणं च । | ३५ |
| १७ विज्ञानात्मका वेदा नित्या अपौरुषेयाः | ४१ |
| १८ वाग्वेदशब्दयोर्वैज्ञानिको नित्योऽर्थः श्रुतिसिद्धः | ४३ |
| १९ वेदानामपौरुषेयत्वं पौरुषेयत्वञ्च समञ्जसं श्रुतिसिद्धञ्च | ५२ |
| २० द्रष्टॄणां स्वतः प्रामाण्यम्, श्रोतॄणान्तु परतः | ५६ |
| २१ लौकिका आप्ता ऋषयश्च भिन्नाः | ५८ |
| २२ अतीन्द्रियार्थविज्ञानस्य सम्भवोपपादनम्, पश्वादिदृष्टान्तेन | ६१ |
| २३ द्रष्टारः प्रवक्तारश्च ऋषय एव | ७० |
| २४ कचित्परमुखेन ऋषिः प्रकाशयति, तत्र गौणा भिन्ना ऋषयः | ७५ |
| २५ मन्त्राणां पञ्चविधानि प्रतिपाद्यानि, तत्र देवा ऋषयश्च वेद्याः | ७५ |
| २६ पञ्चविधानां निदर्शनानि | ७७ |
| २७ प्रवर्तकत्वमृषित्वमिति द्वितीयं मतम् | ८५ |
| २८ प्राणानां मनुष्यर्षीणाञ्च समाननामत्वम् | ८७ |
| २९ यशोनामानि ऋषीणां प्रायेण ख्यातानि | ८९ |
| ३० स्वनामसादृश्यात् तत्तद्विषये प्रवृत्तिः | ९२ |
| ३१ तत्तत्प्राणानामात्मत्वमापाद्य तन्नामान ऋषयः | ९४ |


इति प्रथमं प्रकरणं पूर्णम् ।

## द्वितीयं प्रकरणम्

### ( वैदिकसृष्टिविषयः )


| विषयाः | पृ० |
|---|---|
| १ ब्रह्म—उक्थं प्रतिष्ठा साम च ( उक्थादीनां निर्वचनं तत्र तत्र ब्रह्मशब्दव्युत्पत्तिश्च ) | ६७ |
| २ कर्मपुरुष—विद्यापुरुषरूपेण द्विविधं ब्रह्मणो व्याकरणम | १०० |
| ३ मनःप्राणवाचः कर्मपुरुषाः, त एवात्मा | १०२ |
| ४ आत्मा, प्राणाः, पशव इति त्रिवृद् रूपम् , त एवोक्थार्काशितयः सत्यञ्च । | १०४ |
| ५ कार्यब्रह्मणि उक्थादीनां भिन्नाश्रयत्वम्, तत्प्रदर्शनञ्च | १०७ |
| ६ पिण्डानां स्वयंज्योतिष्ट्वादिभेदाः | १११ |
| ७ पृथिव्यादीनामपि साममण्डलोपपादनम् | ११२ |
| ८ सृष्टिहेतूनामिच्छातपःश्रमाणां स्वरूपाख्यानम् | ११३ |
| ९ मनसो अपूर्णं रूपम्, तत्राशनायावृत्तिश्च | ११७ |
| १० श्रौतस्यार्चनशब्दस्यार्थविवरणम् | १२१ |
| ११ श्रौतानां कामतपःश्रमाणां निर्वचनम् | १२२ |
| १२ यज्ञतपोदानानि तपोरूपाण्येव | १२८ |
| १३ प्राजापत्यं कुरुक्षेत्रम् | १३४ |
| १४ ऋषिप्राणस्वरूपम् | १४० |
| १५ अक्षरपुरुषस्य पञ्चधा रूपाणि | १४२ |
| १६ सप्तसु लोकेषु व्याहृत्यभिधेयेषु त्रेधा त्रिलोकी | १४५ |
| १७ यजुःशब्दार्थः, तत्र ऋषयश्च | १४७ |
| १८ ऋषीणां पितृरूपता, तत्र द्वादश प्रधानाश्च | १४९ |
| १९ एषां सृष्टिजननक्रमः | १५० |
| २० सृष्ट्यारम्भे ब्रह्मक्षत्रविड्वीर्यनिरूपणम् | १५६ |
| २१ चन्द्रसूर्यादीनां ब्राह्मणत्वक्षत्रियत्वादि | १६७ |
| २२ प्रजापतेरिन्द्रस्य च विवरणम् | १६८ |
| २३ प्राणस्य पक्षपुच्छाद्याः सप्त विभागाः | १७० |
| २४ प्राणानां शिरोभागविवरणम् | १७५ |
| २५ शुक्ररूपस्याग्नेरुत्पत्तिः, तस्य चयनाद् भूतोत्पत्तिश्च | १७७ |
| २६ चितेनिधेयः अमृताग्निः | १७९ |
| २७ पशु ( प्राण ) निरूपणम् ( विष्णुरिन्द्रश्च पशूनामुत्पादकौ ) | १८३ |
| २८ शिपिविष्टशब्दार्थः | १८६ |
| २९ प्राणः सर्वत्र वाङ्मयो मनोमयश्च | १९० |
| ३० त्रिषु लोकेषु अमृतमर्त्योक्थसामानि, सूर्यमण्डलस्येन्द्रगर्भत्वञ्च | १९१ |
| ३१ ऋग्यजुःसामशब्दानां वैज्ञानिकस्यार्थस्य स्पष्टीकरणम्, तत्र कोष्ठकञ्च | १९३ |

विषयाः पृष्ठानि


३२ पशुष्वपि ब्रह्मवीर्यादिकमस्ति १६६
३३ पशुषु स्त्रीपुरुषभेदः, तेषामर्द्धत्वञ्च ( तत एव तेषान्न गोलाकृतिः ) १६८
३४ पुरुषादिमेरुदण्डस्य सूर्याधिष्ठितविषुवद्वृत्तादुत्पत्तिः। १६६
३५ स्त्रीपरिग्रहादात्मनः पूर्णत्वम् २०६
३६ मनुशब्दार्थविवरणम् वैज्ञानिकम् २०८
३७ विराट् शब्दार्थविवरणम् विस्तृतम् ( मध्ये गोशब्दाद्यर्थविवरणमपि )
( पृथिवी-सूर्य-रसविवरणाद्यपि रहस्यमयम् ) २१६
३८ दशावयववती विराट्। यज्ञस्य विराट्त्वम्, तस्य दशावयवानां पद्यैर्विव
रणञ्च रहस्यमयम् ( ऋक्सामादिरहस्यं विष्णोस्त्रिविक्रमणादिरहस्यं
चाप्यत्रैव ) २२५
३९ पारावतप्राणनिरूपणम्, अत्रैव श्रुतिसंवादेन सौम्यचतुर्थलोकस्थापनञ्च २४६
४० इन्द्राग्निसोमा इति त्रिवृत्कृतं प्राजापत्यं सर्वम् २५४
४१ सोमस्याग्निरूपताप्राप्तिः २५८
४२ भर्ग-महः-यशः शब्दार्थः २५९
४३ पिण्डानां बीजेन सादृश्यम् २६२
४४ वाच इन्द्ररूपता २६४
४५ अमृतेन्द्रविशेषा देवाः २६५
४६ मर्त्येन्द्ररूपाणि भूतानि २६६
४७ इन्द्रब्रह्मतो वेदसृष्टिः (वैज्ञानिका वेदाः) २६७
४८ वेदत्रये सहस्रशब्दः २७०
४९ अन्तःपृष्ठं बहिःपृष्ठं च २७३
५० प्रजापतेर्दश व्यूहाः। २७३
५१ दशप्रजापतिकोष्ठकम् २७५
५२ त्रिविधा मुख्याः प्रजापतयः २७६
५३ सृष्टिप्रकरणनिष्कर्षः २७७
५४ हिरण्यगर्भविवरणम् २७८
५५ हिरण्यगर्भ एवोपास्यः सर्वेषाम् २८१
५६ शरीरे यत् किञ्चित्, तत्प्राणप्रभवम् ( भूतमात्रादिविभागः ) २८३
५७ ब्रह्माण्डे सर्गमृषिरूपप्राणायत्तम् २८४
५८ मनुप्रोक्ता सृष्टिप्रक्रिया। २८५
५९ हिरण्यगर्भविराड्भेदः। विराजोऽङ्गानि दश ऋषयश्च २८७
६० अध्यात्मं दशानामृषीणां कार्याणि प्रत्यक्षरूपाणि २८८
६१ सप्तर्षयः २९०
६२ हिरण्यगर्भविराजोर्भेदाभेदौ। २९०
६३ उपसंहारः २९१

## संस्कृतटीकायाः विषयानुक्रमणिका ।

[ तत्र मूलोक्ता विषयाः सर्वेऽपि टीकायां प्रस्फुटीकृता एव, ये तु प्रसक्ता विषयाष्टीकायां विस्तरेण व्याख्याताः, तानिहोदाहरामः ]


विषयाः — पृ०

१ ब्रह्मणश्चतुर्णां पादानां तदन्तर्गतानामव्ययादिपुरुषाणां तत्कलानां च विवरणम् — ४

२ प्राणतत्त्वविवरणम्, तत्र श्रीशङ्कराचार्यप्रमाणञ्च — ६

३ ऋषीणाम् ऋतुजनकत्वम्, ऋषिपितृदेवादीनां चान्योन्यजनकत्वोपपत्तिः — १०
( साकञ्जानामिति मन्त्रस्यानेकधा वैज्ञानिकी व्याख्या ) — ११

४ शरीरे चतस्रो गुहाः, तासु प्रत्येकं सप्त प्राणाश्चेति विवरणम् — ,,

५ देवादीनामपि प्राणरूपता श्रुतिसिद्धा, तथापि ऋषिभ्यस्तेषां भेदः । — १४

६ स्वर्गापूर्वदेवतादीनामपि प्रत्यक्षस्य सम्भवोपपादनम् तत्रान्योन्याश्रयपरिहारश्च — ३२

७ वाचः परा-पश्यन्तीत्यादिभेदचतुष्टयप्रदर्शनम्, वेदस्य पौरुषेयत्वापौरुषेयत्ववादिनां सूक्ष्मतरो भेदश्च — ३५

८ शब्दात्मकवेदानां पौरुषेयत्वे महाभाष्यकैयटनिरुक्तादिसम्मतिः — ४१

९ निरुक्तमपौरुषेयत्वं सर्वसम्मतमित्युपपादनम् — ४२

१० ऋग्यजुःसामशब्दानां वैज्ञानिकोऽर्थः । (त्रिलोकीदुग्धसमुद्रादिव्याख्याप्यत्र) (रथन्तरशब्दार्थश्च) — ४४

११ वेदा यज्ञाज्जाताः, ब्रह्मरूपा ब्रह्मणो निःश्वासरूपा अपीति विस्तरेण सामञ्जस्योपपादनम् — ४६

१२ वेदकर्तृत्वविषये त्रयाणां शिष्टसम्मतानां वादानां सर्वात्मना सामञ्जस्यप्रदर्शनं विस्तरेण, वेदशब्दार्थनिरूपणञ्च बहुभिः प्रकारैः, वेदवेदाङ्गक्रमश्च — ६३

१३ वैज्ञानिकेष्वपि वेदेषु त्रयोऽपि वादाः सम्भवन्ति, समञ्जसाश्च — ६८

१४ मन्त्राणामर्थनिर्वचनकाले ऋषीणामेव वक्तृत्वमनुसन्धेयं भवतीति विस्तरेणोपपादनम् — ७०

१५ किं यशोनामेति स्पष्टीकरणम् — ८६

१६ वंशनामापि ऋषीणां प्रसिद्ध्यतीति सप्रमाणं समर्थनम् — ९१

इति प्रथमं प्रकरणम्

### द्वितीयं प्रकरणम्

१७ ब्रह्मशब्दनिष्पत्तौ भाषाशास्त्रनियमप्रदर्शनम् — ९८

१८ अन्तर्यामादिषड्विधसंबन्धविवरणम् — १०४

१९ सामविवरणम् — १०८,१११

२० सजातीयाकर्षणस्फुटीकरणम् — ११७

२१ वित्तपर्यन्तमात्मनः पञ्च कलाः — १२१

२२ वेदान्तन्यायाभ्यां संवादः — १२२

| विषयाः | पृष्ठानि |
|---|---|
| २३ जलस्य फेनाद्यवस्थाः कथमित्युपपादनं वैज्ञानिकम् | १२६ |
| २४ चैतन्यस्य व्यापकत्वेऽपि जडचेतनव्यवहारोपपत्तिः | १३३ |
| २५ ब्रह्मणो दिग्देशकालानवच्छेदे युक्तिः | १३६ |
| २६ बलस्य संख्याकृतमानन्त्यम , तत्र सांख्यवेदान्तसंवादश्च | १३७ |
| २७ त्रयाणां पुरुषाणां तत्कलानाञ्च विवरणम् | १४३ |
| २८ ऋषीणां क्षरपुरुषकलास्वन्तर्भावः | १४८ |
| २९ पञ्चानां क्षरकलानां पञ्चधा रूपाणि | १५१ |
| ३० ब्राह्मणादिवर्णव्यवस्थायाः जन्मसिद्धत्वोपपादनम् विस्तरेण, तत्रोत्पद्यमानानां प्रश्नानां समाधानानि च | १५७-१६५ |
| ३१ 'प्रजापतिश्चरति गर्भे' इति मन्त्रेण वैज्ञानिककेन्द्रशक्तिप्रतिपादनमवतारप्रतिपादनञ्च | १६६ |
| ३२ पशुपदार्थस्पष्टीकरणम् | १८४ |
| ३३ रथन्तरसामस्पष्टीकरणम् | १९२ |
| ३४ विषुवद्वृत्तस्य, मेरुदण्डस्य तत उत्पत्तेश्च स्पष्टीकरणम । | २०१ |
| ३२ हिरण्यगर्भविराडादिनिरूपणं वेदान्तप्रक्रियया । | २१६ |
| ३३ विराजो दशावयवत्वस्पष्टीकरणम् | २२६ |
| ३४ स्तोमविवरणम् | २२९ |
| ३५ ऋतुनिरूपणम् | २३२ |
| ३६ छन्दोवेदस्पष्टीकरणम् ( दूरस्थस्य वस्तुनो लघुत्वदर्शनमप्यत्रोपपादितम् । ) | २३८,२४१ |
| ३७ नेत्रस्य विषयदेशगमननिराकृतिः । | २४३ |
| ३८ वैद्युतपुरुषस्य पूर्वाचार्यमतेन साधनम्, जलनिरूपणं आधुनिकमतनिराकरणं च । | २५६ |
| ३९ बीजादङ्कुराद्युत्पत्तिविज्ञानम् | २६३ |
| ४० शब्दतत्त्वनिरूपणम् | २६५ |
| ४१ हिरण्यगर्भस्वरूपप्रतिपादनम् | २७७ |
| ४२ प्रादेशमात्रान्तराणि देहे षट् चक्राणि | २७८ |
| ४३ उपास्यमूर्तयः, शालग्रामरहस्यं च | २८० |
| ४४ मनुस्मृतेः सृष्टिप्रतिपादकपद्यस्पष्टीकरणम् | २८५ |


[ हिन्दी भाषाटीका में मूलोक्त और संस्कृतटीकोक्त ही सब विषय प्रायः उनहीं पृष्ठोंमें आये हैं, अतः उसकी विषयसूची पृथक् आवश्यक नहीं है । ]

## मूलस्य शुद्धिपत्रम्

विशेषनो द्रष्टव्यम्—१८४ पृष्ठे अन्तिमा तृतीया पङ्क्ति प्रथमपङ्क्तिरूपेण पाठ्या, ततः पश्चात्प्रथमा द्वितीया च पङ्क्तिः पाठ्या। अन्या अपि भ्रमोत्पादिका अशुद्धयोऽत्र शोध्यन्ते। यन्त्रालयकृता मात्रा-रेफ-बिन्दु-विसर्गादित्रुटीस्तु पाठकाः स्वयमेव शोधयिष्यन्तीति उपेक्ष्यन्ते।

| पृ० | प० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २४ | ५ | क्रतरिति | क्रतुरिति |
| २६ | ८ | ब्रह्मशब्श्च | ब्रह्मशब्दश्च |
| ३४ | ४ | तैत्तिरीयब्राह्मणे | तैत्तिरीयब्राह्मणे |
| ५६ | १ | श्रुतिनिर्दशनेषु | श्रुतिनिदर्शनेषु |
| ८२ | ३ | य ई | य ईं |
| ८७ | ५ | स्वार्थानीप्सिताम् | स्वार्थानीप्सितानि |
| ,, | ६ | द्रष्टणाम् | द्रष्टॄणाम् |
| १०२ | १ | सृष्टिबन्धभोक्ता | सृष्टिबन्धमोक्ता |
| १२१ | १२ | विरिच्यमाणम् | विरिच्यमानम् |
| १२७ | ३ | तमभ्यश्नुते | तमभ्यश्नुते |
| १८५ | १ | भपृष्ठे | भूपृष्ठे |
| १६६ | ६ | विषवन्म | विषुवन्म |
| २०६ | १ | चतुधं | चतुर्धा |
| २१६ | २ | कैषीतकि | कौषीतकि |
| २२१ | २ | सवभागानां | सर्वभोगानां |
| २२४ | ५ | अन्नं वै व्रतम् ( ) | अन्नं वै व्रतम् ( शत.७।५।१।२५) |
| २२४ | ८ | दशाक्षरा विराट् ( ) | दशाक्षरा विराट (ऐत. ब्रा.-६।२०, गो. पू. ४।२४ ) |
| २३२ | २ | तारम्या | तारतम्या |
| २३६ | २ | नाभिभागतो | नाभिमागतो |
| २४२ | ६ | ( प्रकोष्ठके ) गृहः | ग्रहाः |
| २४६ | ४ | यदुपस्पृधेथाम् | यदपस्पृधेथाम् |
| २५४ | ३ | इतीत्थं त्रिवृत्कृतानि | इतीत्थं त्रिवृत्कृतमिदं |
| २५५ | १ | इन्द्रस्यात्मनाग्नि | इन्द्रस्यात्मनोऽग्नि |
| २५७ | ३,४ | ता इन्द्रोऽभवत् | तता इन्द्रोऽभवत् |
| २५७ | ७ | सत स्तूयसे | सन् स्तूयसे |
| २५६ | १ | सामाहुतिः | सोमाहुतिः |
| २६५ | २ | तमिन्द्रमाकाशं | (१३) तमिन्द्रमाकाशं |
| २६७ | १ | प्रतिष्ठमाने | प्रतिष्ठामाने |

| पृ० | प० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २६८ | २ | विद्या | विद्यां |
| २७४ | १ | नम्यो | नभ्यो |
| ,, | ,, | अस्माङ्ग | आत्माङ्ग |
| २८३ | ६ | पितृन् | पितृन् |
| २८६ | ६ | ग्रथेषु | ग्रन्थेषु |

## संस्कृतटीकायाः शुद्धिपत्रम्

( इह पङ्क्तिसंख्या टीकापेक्षैव विज्ञेया )

| पृ. | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | श्रांतिसमाहृत | श्रुतिसमाहृत |
| ५ | १३ | मुपयात | मुपयति |
| ६ | ११-१२ | साम्यावस्था वृत्तिः | सामान्या वृत्तिः |
| १५ | १ | ब्रवन | ब्रुवन् |
| १८ | ३ | अथ द्वितीय प्रवृत्ति | अथ द्वितीया प्रवृत्तिः |
| २६ | ७ | उपाधिमविवक्ष्य | उपाधिमविविवक्ष्य |
| ३३ | २ | (यो. सू. ३ पा. १२०) | ( यो. सू. ३ पा. सू २० ) |
| ३५ | ४ | (गोपथब्रा. ३ प्रपा१०क.) | ( गोपथ ब्रा. ३ प्रपा. १० क. ) इत्यादिना वेदानां निमित्तत्वं स्पष्टमेवोक्तम् । |
| ३६ | ७ | एवतैः | त एव तैः |
| ३८ | ११ | पौरुषेययत्व | पौरुषेयत्व |
| ३६ | १३ | दर्शयिष्यमाणशब्द | दर्शयिष्यमाणास्मच्छब्द |
| ६६ | ११ | वेदानां इति | वेदानाम् । ( इति शब्दो द्वादश्याः पङ्क्तेरनन्तरं पठनीयः ) |
| ७६ | ६ | आहवनीयाद्यामकानि | आहवनीयाद्यात्मकानि |
| ६१ | १२ | यदि वैयक्तिकानि | यदि इमानि नामानि वैयक्तिकानि |
| १०१ | ४ | जागर्त्यामाप्तेन | जागर्यामाप्तेन |
| ११४ | १३ | विस्तरभयात् । | विस्तरभयात्, व्याख्यास्यते तु प्रकरणान्ते |
| ११६ | ११ | तस्मास्तयो | तस्मात्तयो |
| १२० | ६ | अर्काशीतिलाभो | अर्काशितिलाभो |
| १६६ | २५ | बह्वर्थगर्भितया | बह्वर्थगर्भिततया |
| १७१ | ४ | उर्ध्वं | ऊर्ध्वं |
| १७६ | १० | लोमानां | लोम्नां |
| १८४ | २ | मूलोक्तं | मूलोक्ते |
| १८४ | ११ | कलारूपेणैव | कलारूपेणेन्द्रेणैव |
| १८५ | ६ | दुर्वा | दूर्वा |
| १८७ | ३ | मण्डमलध्य | मण्डलमध्य |
| ,, | ८ | पमशुनुष्याद्या | पशुमनुष्याद्या |

| पृ० | प० | अशुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| २१८ | १० | बहवीनां | बह्वीनां |
| २२६ | १३ | तनुः शरीरादि | तनुशरीरादि |
| २२८ | ५ | साममराल | साममण्डलं |
| „ | १० | हानि | अहानि |
| २२६ | ८ | त्रयस्त्रिशवस्तोमः | त्रयस्त्रिंशः स्तोमः |
| २३२ | ५ | केन्द्रपिण्डसोमरूपाणि | केन्द्रपिण्डसामरूपाणि |
| २३३ | ८ | ऋताग्निशब्देनेह | ऋताग्निसंबन्धेनेह |
| २४३ | ५ | तस्यास्तु | तथास्तु |
| २४५ | १० | पृथिव्यन्तरिक्षादिव | पृथिव्यन्तरिक्षदिव |
| २४७ | २ | उपरि विराजमानात्तु प्रथमलोकस्थ | उपरि विराजमानस्तु प्रथग् लोकस्थ |
| २४७ | २ | तत्समानम् | तत्समाधानम् |
| २४८ | ६ | तादर्थ्यात्तच्छब्दनेयम् | तादर्थ्यात्ताच्छब्द्यम् |
| „ | ८ | प्राणरूपताप्रायणमेव | प्राणरूपताप्रापणमेव |
| २५३ | ८ | भृग्वङ्गिरस | भृग्वाङ्गिरस |
| २५४ | १ | प्रयाणैः | प्रमाणैः |
| २७१ | ५ | ओषधिवनस्पतीरुत्पाद्यताभिः | ओषधिवनस्पतीनुत्पाद्य तैः |
| २७८ | १३ | प्रतिप्रादशं | प्रतिप्रादेशं |
| २८० | २१ | निधमके | निधर्मके |

भाषाटीका की कुछ अशुद्धियां।

| | | | |
|---|---|---|---|
| ३५ | ७ | उपात्ति | उत्पत्ति |
| १०४ | ४ | अर्थरूप | अर्करूप |
| १६१ | ७,८ | अमृत एवं मर्त्यरूप | मर्त्य एवं अमृतरूप |
| १६४ | ११ | सूर्यका है | है। |
| १६५ | १४ | इस सब | इन सब |
| २१६ | ५ | किया नया है | किया गया है। |
| २४० | ३ | अग्नि सोम है, | अग्नि साम है, |
| २४२ | ६ | को ही समझना | के ही समझना |
| २४७ | १२ | विराट्की प्राप्ति | विराट्की व्याप्ति |
| २४६ | ५ | इन्दु | इन्द्र |
| २५४ | १२ | अन्नादि | अन्नाद |
| २५६ | १ | दोनों सबों | दोनों सोम |
| २६६ | ४ | विशेषण | विशेष |
| २७१ | १० | आगे तीनों | अग्नि तीनों |
| ” | ” | वे वाक् | वह वाक् |
| २८२ | २४ | शरीर ब्रह्माण्डमें चमकता | शरीर ब्रह्माण्ड में बीचमें सूर्य रहता है, और चारों ओर कृष्णवर्ण सोम। इसी प्रकार शालग्रामशिलामें— |
| २८८ | ११ | वमझते | समझने |

श्रीः

# * ब्रह्मविज्ञानशास्त्रे

## दिव्यविभूतिखण्डे

# महर्षिकुलवैभवम्

(१)

यो यज्ञो दिवि परमेष्ठिगोसवाख्यो विज्ञानं समुपदिदेश गीतया यः
आनन्दं कलयतु शाश्वतं ममायं गोविन्दः स हि मयि संनिधानमेतु

---

## संस्कृतव्याख्या

शान्ते निःसीमधाम्नि स्वरचितमखिलं स्वान्तराधाय सुप्ते
सीमानं कल्पयन्ती कलितगुणकला या प्रबोधं दधाति ।
ब्रह्माणं विष्णुमीशं सुरपतिमपि या स्वस्वकार्ये नियुङ्क्ते
चिच्छक्तिः सादिमाया वितरतु भविकं शाश्वतं वेदवेद्या ॥१॥

सर्वतन्त्रस्वतन्त्रश्रीमधुसूदनशर्मणाम् ।
सूर्याचन्द्रायितं स्वान्ते निधाय पदयुग्मकम् ॥२॥

तत्कृपापाङ्गसंपातसंप्राप्तज्ञानसंपदा ।
तच्छिक्षितेनाध्वनैव क्रम्यते ग्रन्थिमोचने ॥३॥

विलुप्तवेदविज्ञानपरिभाषासु विस्मितान् ।
विदुषोऽपि हतोत्साहान् वीक्ष्य संरम्भ एष मे ॥४॥

* **ब्रह्मविज्ञान इति** । सर्वमिदं ग्रन्थविभागादिकमुपोद्घाते स्फुटीकृतमिति तत्रैवालोच्यम् ।

**यो यज्ञ इति** । भगवान् श्रीकृष्णो महाव्याहृतिषु 'जनः' इति

---

## भाषाटीका

### भाषानुवाद का कारण

विज्ञानस्यास्य लाभात्तु मा भूवन् केऽपि वञ्चिताः ।
इति प्रसिद्ध्या हिन्दीभाषयाप्यनुवाद्यते ॥

### मङ्गलाचरण पद्य का अनुवाद

द्युलोक के परमेष्ठिमण्डल में जो गोसव यज्ञ के नाम से प्रसिद्ध हैं, और जिन ने भवद्गीता के द्वारा विज्ञान का उपदेश किया है, वे गोविन्द मुझ को शाश्वत

(२)

**यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।**
**यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् ब्रह्मविज्ञानमिदं विमृश्यताम् ॥**

संस्कृतव्याख्या

व्याख्यातस्य पञ्चमलोकस्य परमेष्ठिमण्डलस्याधिष्ठातुर्भगवतो विष्णोरवतार इति ग्रन्थकृतानेन गीताविज्ञानभाष्ये आचार्यकाण्डे विस्तृतं व्याख्यातम् । स एवायं जनलोकः पुराणेषु 'गोलोकः' इति ख्याप्यते, यज्ञप्रक्रियायाञ्च 'गोसवः' इति स एव लक्ष्यीक्रियते । तदेव तत्त्वमिह मङ्गलाचरणे सांकेतितं द्रष्टव्यम् । दिवि द्युलोके, परमेष्ठिमण्डले, तद्रूपसंपत्तिप्रयोजकः, योऽयं गोसवाख्यो यज्ञः स एव गोविन्दः । "यज्ञो वै विष्णुः" (शत.१।१।४।९) इति श्रुतेः । स्फुटमन्यत् ।

**यत्र प्रदर्श्या इति** । पुरातनी सूत्ररूपेण प्रतिपादनशैली नाधुनाल्पमतीनां विस्मृतवैदिकविज्ञानानां जनानां हितायेति तां विहाय, नवीनां विस्तृतोक्तिशैलीमालम्ब्य पुरातना वैदिका एव विषया इह प्रदर्श्यन्ते, न तु स्वकपोलकल्पितं किञ्चिदुच्यते । किञ्च, श्रद्धामयजीवनानां श्रुतिः परमं प्रमाणमिति न तत्र युक्त्यपेक्षा बभूव । इदानीन्त्वल्पश्रद्धा जनाः श्रुत्युक्तेष्वप्यर्थेषु मानसपरितोषाय युक्तोरपेक्षन्त इति श्रुतिसमाहृतयुक्तिभिन्नापि तर्कापर-

भाषाटीका

आनन्द प्रदान करें, और सदा हमारे हृदय में संनिहित रहें ।

[ ग्रन्थकार ने भगवद्गीता के विज्ञान-भाष्य के आचार्य काण्ड में विस्तार से निरूपण किया है कि सात व्याहृतियों के नाम से प्रसिद्ध सात लोकों में पाचवें 'जन' लोक, जिस की 'परमेष्ठीमण्डल' नाम से श्रुतियों में व्याख्या की गई है, उस के अधिष्ठाता भगवान् विष्णु के अवतार भगवान् कृष्ण हैं । इस ही जनलोक का पुराणों में गोलोक नाम से व्यवहार किया गया है, और याज्ञिकों की प्रक्रिया में इस को गोसव यज्ञ कहा है । यज्ञ ही विष्णु का रूप है, यह बात श्रुतियों में बहुधा वर्णित है । इसी सब तत्त्व का संक्षिप्त संकेत इस पद्य में किया गया है । परमेष्ठी मण्डल आदि की व्याख्या उपोद्घात में देखिये । ]

द्वितीय प्रतिज्ञापद्य का अनुवाद

जिस ग्रन्थ में प्रतिपादन तो पुराने विषयों का है, किन्तु प्रतिपादन की शैली नवीन है, और जिस में श्रुति और युक्ति दोनों प्रमाणों के आधार पर विषय का विवेचन किया गया है, उस ब्रह्म-विज्ञान नामक ग्रन्थ पर विद्वान् विचार करें ।

[ प्राचीनशैली में विषयों का प्रतिपादन सूत्र रूप से संक्षेप में किया गया है, किन्तु जब वैदिक विज्ञान को लोग भूल चुके हैं और आर्य संस्कृति के अनुसार बुद्धि का बहुत ह्रास हो चुका है, तब संक्षिप्त प्रकिया उपयुक्त न होगी, इस विचार

## अथ ऋषिनिर्वचनम्

(१) ऋषिशब्दस्य चतुष्टयी प्रवृत्तिः—असल्लक्षणा, रोचनालक्षणा, द्रष्टृलक्षणा, वक्तृलक्षणा चेति ।

---

संस्कृतव्याख्या

पर्याया युक्तिरिह तत्र तत्र समर्थनाय समादृता । अयमेवात्र ब्रह्मविज्ञानशास्त्रे विशेष इति भावः । विज्ञानपदमुपोद्घाते निरूपितमिति कृतमिह पुनरुक्त्या ।

### ऋषिनिर्वचनम् ।

वैदिकेऽत्र विज्ञाने प्राणमूलके ऋषिप्राणो मूलतत्त्वमिति प्रदर्शितमुपोद्घाते । तदिह विस्तरेण व्याख्यायते । न च ऋषिपदस्य, ऋषिविशेषवाचकानां कश्यपात्रिवसिष्ठादिपदानां च केवलं तन्मूलतत्त्वमेव सर्वत्र वाच्यं भवितुमर्हति, ताराविशेषाणां, व्यक्तिविशेषाणामपि च तत्पदाभिधेयतया प्रसिद्धेः । ईदृशेष्वेव विषयेषु निर्धारयितुमशक्नुवन्तो मुह्यन्ति सुधियोऽपीति तद्विवेचनमेव तावदावश्यकम् । तत्रापि च सामान्यज्ञानपूर्वकत्वाद् विशेषज्ञानस्य ऋषिसामान्यमेव प्रथमं विवेचयितुमुपक्रम्यत इति भावः । तदित्थं प्राणविशेषाणां मनुष्यविशेषाणाञ्चेत्युभयविधानामृषीणामिहाख्यानादस्य ग्रन्थस्य वैज्ञानिकत्वमैतिहासिकत्वञ्च सम्मिश्रितं द्रष्टव्यम् ।

---

भाषाटीका

से इस ग्रन्थ में आधुनिक विस्तारशैली का अवलम्बन किया गया है । पुराने समय के समान श्रद्धा भी आज जनता में नहीं है, केवल श्रुति प्रमाण से जनता सन्तुष्ट नहीं होती, इसलिये युक्तिवाद का आश्रयण भी इस ग्रन्थ में है । किन्तु विषय कोई नवीन नहीं है, ऋषिप्रोक्त प्राचीन सिद्धान्तों का विशद रूप से वर्णन है । विज्ञान शब्द की व्याख्या उपोद्घात में विस्तारपूर्वक कर दी गई है । ]

### ऋषि शब्द की निरुक्ति

[ प्राणमूलक वैदिक विज्ञान में ऋषिप्राण सब का मूलतत्त्व है—यह उपोद्घात में कहा जा चुका है । यहाँ उस ही ऋषि प्राण की विस्तार पूर्वक व्याख्या की जाती है । ऋषिशब्द और ऋषिविशेषवाचक कश्यप अत्रि वसिष्ठ आदि शब्द केवल उस मूलतत्त्व के ही बोधक हों—ऐसा भी नहीं है, अपि तु ये शब्द कहीं कहीं ताराविशेष एवं व्यक्तिविशेष के भी बोधक हैं । इस ही कारण इस प्रकार के ऋषि आदि शब्दों में विद्वानों को भी भ्रम हो जाता है, अतः उसका विवेचन आवश्यक है । ]

(१) ऋषि शब्द के चार प्रकार के अर्थ प्रसिद्ध हैं—असद् रूप, रोचनारूप, द्रष्टारूप और वक्तारूप ।

✓(२) इह हि सच्चासच्च सदसच्चेति त्रिविधं ब्रह्म । सदिति वाचमाह, असदिति प्राणम्, सदसत्तु मनः । तान्येतानि वाक्प्राणमनांस्येव सर्वाणीमानि कर्मब्रह्माणि ।

---

संस्कृतव्याख्या

**इह हि** । असल्लक्षणं स्वोक्तं व्याकर्तुमुपक्रमते ।

**त्रिविधम्** । ब्रह्मपदेन सद्, असत्, सदसदिति त्रितयमपि क्रोडीक्रियते । नातिरिच्यते किमपीति भावः ।

**कर्मब्रह्माणि** । कर्मसंपादकानि ब्रह्माणि, कार्यब्रह्माणीति वा ।

अन्यत्र सृष्टिप्रक्रियाप्रतिपादकेषु 'ब्रह्मविनया'दिग्रन्थेषु ग्रन्थकृताऽनेन चतुष्पाद् ब्रह्म व्याख्यातम्-निर्विशेषः, परात्परः, पुरुषः, सत्यः (प्रजापतिः) इति चत्वारः पादाः । तत्र सर्वथा प्रसुप्तबलं रसमात्रं वाङ्मनसातीतं निर्विशेषः, उद्बुद्धबलमपि निःसीमं परात्परः । इमे एव वेदान्तशास्त्रे शुद्धब्रह्म-विशिष्टब्रह्मपदाभ्यामभिलप्येते । उद्बुद्धबलेन मायाभिधानेन मितौ कृतायां ससीमाः परिच्छिन्नाः पुरुषास्तृतीयः पादः; जगन्मूलं जगद्रूपेण

---

भाषाटीका

(२) जगत् के मूलकारणभूत ब्रह्म के तीन रूप प्रसिद्ध हैं—सत्, असत् और सदसत् । सद्ब्रह्म वाक्स्वरूप है, असद्ब्रह्म प्राणरूप और सदसद् ब्रह्म मन रूप । वाक्, प्राण और मन ये तीनों कर्मब्रह्म के नाम से प्रसिद्ध हैं

[ कर्मसंपादन करने वाले ब्रह्म को कर्मब्रह्म वा कार्यब्रह्म कहते हैं । ग्रन्थकार ने अपने 'ब्रह्मविनयादि' सृष्टि-प्रक्रिया-प्रतिपादक ग्रन्थों में ब्रह्म को चतुष्पाद् ब्रह्म कहा है । निर्विशेष, परात्पर, पुरुष और सत्य ये चार रूप ब्रह्म के होते हैं—ये ही चार पाद हैं ।

जगत् की उत्पत्ति के कारण ब्रह्म और माया हैं, जिनका रस तथा बल शब्द से श्रुतियों में व्यवहार किया गया है । बल (माया) ब्रह्म (रस) से कभी पृथक् नहीं होता, किन्तु कभी सुप्त कभी उद्बुद्ध और कभी कुर्वद्रूप (काम करता हुवा) रहता है । जिसमें बल सर्वथा सुप्त रहता है, ऐसा रस निर्विशेष ब्रह्म कहलाता है और वह मन या वाणी द्वारा किसी प्रकार व्यक्त नहीं किया जा सकता । उद्बुद्धबल वाले निःसीम ब्रह्म को परात्पर ब्रह्म कहते हैं । वेदान्तशास्त्र में निर्विशेष को शुद्धब्रह्म और परात्पर को विशिष्टब्रह्म कहा है । उद्बुद्धबल जब निःसीम ब्रह्म को सीमाबद्ध (परिच्छिन्न) बना देता है—वह तीसरी अवस्था होती है, जिसे पुरुष कहा जाता है । इस के अनन्तर जब जगत् की उत्पत्ति होने लगती

संस्कृतव्याख्या

विवर्तमानं तु उपादानं प्रकृतिरिति सत्यमिति चतुर्थः पादः ।

तत्र तृतीये पादे अव्ययम्, अक्षरः, क्षर इति त्रयः पुरुषाः । तत्राव्ययः पुरुषः कार्यकारणातीतः केवलमालम्बनं साक्षीत्युच्यते । अक्षरो निमित्त-कारणम्, क्षरस्तूपादानं जगतः । त्रयाणामेषामव्यतिरिक्तत्वादभिन्ननिमित्तो-पादानवादो वेदान्तिनां न विरुध्यते ।

तेषामेषां त्रयाणां प्रत्येकं पञ्च कलाः, एका च परात्परस्येति षोडशक-लात्मकः षोडशी पुरुषः श्रूयते तत्र तत्र । तासु आनन्दः, विज्ञानम्, मनः, प्राणः, वाग्-इत्यव्ययस्य पुरुषस्य पञ्च कलाः । तत्रादिमास्तिस्रो मुक्ति-साक्षिण्यः, अन्तिमास्तु तिस्रो मनःप्राणवाचः सृष्टिसाक्षिण्यः, मनस उभयान्वयित्वमत्र द्रष्टव्यम् । मनोऽत्र ज्ञानशक्तिमत्, प्राणः क्रियाशक्तिमान्, वाक् तु अर्थशक्तिमती । एतावदेव जगत्-ज्ञानं क्रियार्थाश्चेति, तन्मूलमियं त्रितयी-मनः प्राणा वागिति । जडकारणवादे सांख्ये एतान्येव सत्त्वरज-स्तमांस्युच्यन्ते । तानि ज्ञानादिशक्तिरूपाणि । चेतनं ब्रह्म जगत्कारणमुपयति वैदिके तु दर्शने ज्ञानादिशक्तिमान् पुरुषः । अथवा अक्षरः शक्तिरूपः, अव्ययस्तु तदालम्बनं शक्तिमत् । सांख्या अव्ययपर्यन्तं न गच्छन्तीति शक्तावेव विश्राम्यन्तीत्यन्यत्र विस्तरः ।

आसु चतुर्थीं कलां प्राणमालम्ब्याक्षरपुरुषस्य विकासः, पञ्चमीं वाचमालम्ब्य तु क्षरपुरुषस्य ।

---

भाषाटीका

है, तो वही ब्रह्म सत्य वा प्रकृति नाम से कहाने लगता है, यह चतुर्थ अवस्था है ।

इनमें प्रसिद्ध तृतीय अवस्था के तीन भेद हैं—जो कि अव्यय, अक्षर और क्षर नाम से विख्यात हैं । अव्यय पुरुष कार्यकारणातीत एवं सबका आलम्बन साक्षी रूप है । अक्षर पुरुष संसार का निमित्त कारण है और क्षर पुरुष संसार का उपादान कारण ।

अव्ययादि तीनों पुरुषों की प्रत्येक को पाँच पाँच कलाएं होती हैं और परात्पर ब्रह्म की एक कला—इस प्रकार सोलह कला वाले पुरुष का वर्णन हम को स्थान स्थान पर मिलता है । आनन्द, विज्ञान मन, प्राण और वाक् ये पाँच कलाएँ अव्यय पुरुष की होती हैं । इन में आदि से तीन कलाएं मुक्ति की साक्षी और अन्तिम तीनों-मन, प्राण और वाक् सृष्टि की साक्षी कहलाती हैं । मन नाम की मध्यम कला का दोनों भागों में संबन्ध माना जाता है ।

इन में चतुर्थ प्राण नामक कला के आधार पर अक्षर पुरुष का विकास होता है और पंचम प्राण नामक कला के आधार पर क्षर पुरुष का ।

संस्कृतव्याख्या

क्षरः पुरुषो द्विविधः — अमृतक्षरः, मर्त्यक्षरश्च । मर्त्यक्षर एव प्रकृतिरूपेण विकसति । तदनु प्राकृते प्रपञ्चे त्रिवृत्कृतानि तेजोवन्नानीव परस्परं संमिश्रिता इमे वैशेष्यात्स्वनामभाजो मनःप्राणवाचोऽध्यात्ममधिदैवमधिभूतं च सृष्टिप्रक्रियानिर्वाहकं स्वरूपं दधते । सोऽयं प्राण एवात्र ऋषिपितृदेवासुरमनुष्यरूपेण पञ्चधा व्याख्यायते । वाक् तु भूतभौतिकरूपेण परिणमति । इयं भूतभौतिकप्रपञ्चमूलभूता वाक् सर्वथा प्राणायत्तात्मलाभा प्राणायत्तजीवना च । "प्राणे सर्वं प्रतिष्ठितम्" । अस्यैव प्राणस्य मुख्यमधिष्ठानं सूर्यः "प्राणः प्रजानामुदयत्येष सूर्यः" । अत एव देवानामृषिप्रभृतीनामपि च सूर्यमण्डलमेवाधिष्ठानत्वेन श्रूयते "चित्रं देवानामुदगादनीकम्" इत्याद्यासु श्रुतिषु पुराणेषु च । इमं प्राणमध्यात्मं वायुरिति वैशेषिकाः प्रतिपन्नाः, अन्तःकरणत्रितयस्य साम्यावस्था वृत्तिः क्रियारूपेति च सांख्याः । ते उभे अपि मते "न वायुक्रिये पृथगुपदेशात्" ( वे. सू. २।४।९ ) इति वेदान्तसूत्रकृता निराकृते । प्राणस्यास्य स्वरूपं "वलविधारणे प्राणशक्ती" इत्येवं ग्रन्थकृतानेनान्यत्र प्रदर्शितम् । वाचमयमेव विधरति, निष्प्राणा हि काष्ठप्रस्तरादयः सर्व एव शीर्यन्ते । बलं च सर्वत्र वाचि प्राणसंबन्धादेव प्रतीयते ।

---

भाषाटीका

क्षर पुरुष भी दो प्रकार का है—अमृतक्षर और मर्त्यक्षर । इन में मर्त्यक्षर ही प्रकृति रूप से विकसित होता है । इस सब के अनन्तर प्रकृति के प्रपञ्च में परस्पर संमिश्रित मन, प्राण और वाक् पुनः अपने नवीन रूप धारण करते हैं, जो कि अध्यात्म, अधिदैव तथा अधिभूत नाम से विख्यात होकर भिन्न भिन्न कार्य किया करते हैं । इन ही को प्रकृत में कर्म ब्रह्म कहा है । इसको यों समझिये कि ज्ञान, क्रिया और अर्थ ( मैटर ) ये तीन वस्तु हमको जगत् में प्राप्त होती हैं । इनमें से ज्ञान का मूल है मन, क्रिया का प्राण और अर्थ का मूल वाक् है । इस प्राण की व्याख्या भिन्न भिन्न शास्त्रों में अनेक रूप से की गई है ।

संक्षेप में इसका स्वरूप यही है कि जो वाक् ( भूतों ) को धारण करता है, और उस में बल देता है वह प्राण है । स्थानावरोधक ( जगह रोकने वाला ) नहीं होता, न उसमें रूप रस गंध आदि गुण होते हैं, इसलिये वह इन्द्रिय- ग्राह्य भी नहीं होता । किन्तु उस ही के संबन्ध से घनीभूत होकर वाक् ( भूत या मैटर ) इन्द्रियग्राह्य होते हैं । जैसे हजारों परमाणुओं का पुंज एक लकड़ी है, उन सब परमाणुओं को प्राण ने परस्पर संबद्ध कर रक्खा है । इसलिये यदि हम लकड़ी के एक अंश को उठावें, तो सब लकड़ी उठ आती है । किन्तु जब उसमें से प्राण निकल जाता है, वह बेदम हो जाती है, तब जितना अंश उठावेंगे-उतना ही उठेगा । अवयवों का परस्पर संबन्ध टूट जायगा । यही प्राण का विधारण संसार

(३) प्राणसंयुक्तानां हि लोके सत्ता दृश्यते । प्राणस्त्वयमप्राणः,

---

संस्कृतव्याख्या

तदित्थं रूपरसादिगुणरहितः स्थानानवरोधकः शक्तिरूपोऽयं प्राणः, शक्तिरेव च क्रमेण भूतभौतिकादिरूपेण परिणतेति वैदिकः पन्थाः ।

श्रीशङ्करभगवत्पादा अपि बृहदारण्यकोपनिषद्भाष्यद्वितीयाध्यायस्यावतरणिकायाम् "स च व्याख्यातोऽविद्यावद्विषयः सर्व एव द्विप्रकारः —अन्तःप्राण उपष्टम्भको गृहस्येव स्तम्भादि-लक्षणः प्रकाशकोऽमृतः । बाह्यश्च कार्यलक्षणोऽप्रकाशक उपजनापायधर्मकस्तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्यः । तेनामृतशब्दवाच्यः प्राणश्छन्न इति चोपसंहृतम् । स एव च प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः । प्राण एको देव इत्युच्यते" इत्यादिना ग्रन्थेन प्राणतत्त्वं संक्षेपेण व्याचख्युः । अविद्यावद्विषयत्वेन विस्तरस्तैरुपेक्षितः । सृष्टिप्रलयादिप्रतिपादकः कर्मप्रधानो ब्राह्मणभागस्तु विस्तरेण प्राणतत्त्वं व्याचष्टे ।

तत एव प्राणविशेषाणां देवादीनां जगज्जनकत्वं जगन्नियामकत्वं च श्रूयते स्मर्यते च । बहव आधुनिका वैज्ञानिका अपि भूतभौतिकेषु "मैटर" पदम्, तन्नियामिकायां शक्तौ च "फोर्स" पदम्, "एनर्जी" पदं वा प्रयुञ्जानाः फोर्सपदवाच्यायाः शक्तेरेव मैटरपदवाच्यानि भूतभौतिकानि विकारा इति श्रौतमेवार्थमनुगच्छन्तीवेति दिक् । तत्राव्ययपुरुषकलारूपा मूलतत्त्वभूता मनःप्राणवाचः कर्मभूतसृष्ट्युन्मुखानि ब्रह्मरूपाणीति कर्मब्रह्माणि । अवरा मनःप्राणवाचस्तु कार्यब्रह्माणीति शक्यमुपगन्तुम् । सर्वमिदं प्रकृते ग्रन्थेऽपि सृष्टिप्रस्तावे विस्तरेण मूल एव प्रतिपादयिष्यते—इत्यलं विस्तरेण ।

---

भाषाटीका

की सब वस्तुओं में प्रत्यक्ष-सिद्ध है । इतना ही नहीं, वैदिक सिद्धान्त तो यहाँ तक पहुँचता है कि प्राण ही भूत और भौतिक पदार्थों का जनक है। जगद्गुरु श्री शङ्कराचार्य प्रभृति प्राचीन आचार्यों ने भी प्राण तत्त्व की संक्षिप्त व्याख्या की है [ संस्कृत टीका में देखो ]

बहुत से आधुनिक वैज्ञानिक भी मानते हैं कि फोर्स वा एनर्जी से ही मैटर बनता है। यह फोर्स वा एनर्जी हमारी प्राणशक्ति है। यह प्राण ही वैदिक विज्ञान का आधारस्तम्भ है। इस ही के ऋषि, पितृ, देव आदि भेद हैं। जैसा कि मूल ग्रन्थ में क्रमशः स्पष्ट होगा ]

(३) संसार में प्राणवाले पदार्थ ही सत् कहे जाते हैं। प्राण में ( अतिरिक्त )

**तस्मादसच्छब्दः ।**

**(४) नानाजातीयाश्चैते प्राणाः । तेषां घने पुरुषशब्दो रूढः । स द्विविधः—नानाजातीयप्राणनिकायात्मा च, विजातीयास्पृष्टैकजातीयघनश्चेति । तत्राद्ये देवशब्दो द्वितीये त्वेष ऋषिशब्दो रूढः ।**

**(५) "असद्वा इदमग्र आसीत् । किं तदसदासीदिति । ऋषयो वा व तेऽग्रेऽसदासीत् । के ते ऋषय इति प्राणा वा ऋषयः"।**

---

संस्कृतव्याख्या

**तस्मादसच्छब्दः** । यथा वैशेषिके मते सत्ता द्रव्यगुणकर्मस्वेव समवेतेति द्रव्यादीनि सत्पदेनोच्यन्ते । सत्तायां तु न सत्तान्तरमिति सत्तासमवायनिमित्तः सच्छब्दो न तत्र प्रवर्तते । तथैव रीत्यात्र द्रष्टव्यम्—प्राणसंबन्धाद् वाक् सती, प्राणस्तु प्राणान्तरासबन्धान्न सत् । सत्पदबोध्याया वाचः, असत्पदबोध्यस्य प्राणस्येत्युभयोरालम्बनत्वान्मनः सदसदिति द्रष्टव्यम् ।

ऋषीणां प्राणरूपतायां श्रुतीः प्रमाणयति—**असद्वा इदमग्र आसीत् ।** अत्र सृष्टेः पूर्वम् 'असदेव' इति उक्त्वा, बौद्धानामिवात्राप्यसद्वाद इष्ट इति भ्रमं निरसितुम्–असच्छब्दार्थजिज्ञासामुपन्यस्य—ऋषय एवासच्छब्दार्थ

---

भाषाटीका

प्राण नहीं रहता, इस कारण वह सत् नहीं कहा जाता, सत् न होने से उसका नाम 'असत्' है

[ वैशेषिक न्याय के मत से द्रव्य, गुण और कर्म में सत्ता ( जाति ) रहती है, इससे इन तीन को ही सत् कहते हैं। सत्ता में कोई पृथक् सत्ता नहीं रहती, इससे सत्ता को सत् नहीं कहते । उसी प्रकार वाक् में प्राण होने से वह ( वाक् ) सती वा सत् ( सत्ता वाली ) कहलाती है, किन्तु स्वयं प्राण में प्राण न होने से वह 'असत्' कहलाता है । ]

(४) ये प्राण अनेक प्रकार के होते हैं। प्राणों के समूह को भी पुरुष कहते हैं। वह समूह दो प्रकार का होता है—भिन्न भिन्न जाति के प्राणों का समुदाय और एक जाति के प्राणों का समुदाय। नानाजातीय प्राण-समुदाय को देव कहते हैं और एकजातीय प्राण समुदाय को ऋषि।

(५) ऋषि कहने में श्रुति का प्रमाण दिखाते हैं। शतपथ-ब्राह्मण में सृष्टि की आरम्भावस्था क्या थी, इसका उत्तर देते हुए कहा है—आदि में यह सारा सृष्टिप्रपञ्च असत् था। असत् का क्या अर्थ ? यह जिज्ञासा उठा कर उत्तर

( शत. ६।१।१।१ ) इति श्रुतेः ।

**(६) साकञ्जानां सप्तथमाहुरेकजं षडिद् यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ ( ऋक्० १।१६४।१५ ) इति मन्त्रवर्णाच्च ।**

---

संस्कृतव्याख्या

इत्युत्तीर्य ऋषिशब्दार्थमपि प्रश्नविषयीकृत्य प्राणा ऋषिशब्दवाच्या इति स्पष्टं प्रतिपादितम् । तेन ऋषिशब्दवाच्यानां प्राणानामेव भूतसृष्टेः प्राक् सत्ता प्रबोधितेति सुस्पष्टार्थम् ।

**साकञ्जानाम् ।** माधवीये भाष्ये मन्त्रोऽयमृतुपरत्वेन व्याख्यातः । साकंजानाम्-कालरूपेण सहैवोत्पन्नानाम्, ऋतूनां मध्ये षडेव ऋषयः-गमनशीलाः, देवजाः-आदित्याद्देवादुत्पन्नाः, ऋतवः, यमाः-युग्मकाः, मासद्वयात्मका भवन्ति, सप्तथम्-सप्तमम्, अधिकमासं (स्वयं पृथग् ऋतुरूपन्तु), एकजम्-एक एव जायत इत्येकजः, तथाभूतम्, एककमेव आहुः । तेषाम् ऋतूनां स्वरूपाणि, इष्टानि-सर्वलोकाभिमतानि, धामशः-तत्तत्स्थाने, विहितानि-पृथक पृथक स्थापितानि, रूपशः-रूपभेदेन-रसयवाद्युत्पादकत्वेन विकृतानि-विविधा-

---

भाषाटीका

दिया कि असत् शब्द का अर्थ यहां ऋषि है । अर्थात् सृष्टि की पूर्वावस्था में केवल ऋषि ही थे । फिर प्रश्न किया-ऋषियों का क्या स्वरूप है ? उत्तर दिया कि प्राण ही ऋषि कहे जाते हैं । इस से ऋषियों की प्राणरूपता और उन का असत् नाम से कहा जाना दोनों बातें स्पष्ट हो जाती हैं ।

(६) आगे ऋग्वेद-संहिता के 'साकंजानां' इत्यादि मन्त्र को भी प्रमाण रूप से उपस्थित किया है । उस मन्त्र का अर्थ—

भाष्यकार श्री माधवाचार्य ने ऋतुपरक व्याख्यान किया है, वह इस प्रकार है कि इस जगत में कालरूप से साथ साथ उत्पन्न होने वाली छह ऋतुएं हैं जो कि ऋषि-अर्थात् गमनशील हैं और देव ( सूर्य ) से उत्पन्न हुई हैं । ये प्रत्येक ऋतुएं युग्मरूप हैं अर्थात् दो दो मास की एक ऋतु होती है । जब कभी अधिक मास होता है तो वह सातवीं ऋतु है, जो कि एकाकी है, अर्थात् एक मास के रूप में है । इन ऋतुओं का भिन्न भिन्न कार्य है—अर्थात् किसी ऋतु में यवादि उत्पन्न होते हैं, किसी ऋतु में उनमें रस होता है और किसी ऋतु में पकते हैं । इस प्रकार इन ऋतुओं के भिन्न भिन्न रूप हैं और ये ऋतुएं चक्रवत् घूमा करती हैं । अर्थात् एक

संस्कृतव्याख्या

कृतियुक्तानि, स्थात्रे—अधिष्ठात्रे—उपभोक्त्रे, रेजन्ते-चलन्ति, पुनः पुनरावर्तन्ते-इति तद्व्याख्यानसारः।

अत्राधिभौतिकमृषित्वम्-ऋतूनामुक्तम्। यद्यपि ऋतूनाम् "ऋतवः पितरः" (शत. २।६।१।४२) "षड्तूँश्च नमस्कुर्यात् पितॄनेव च धर्मवित्" (मनुः ३ अ.) इत्याद्यासु श्रुतिस्मृतिषु पितृत्वमाख्यातम्, तथापि ऋषिभ्य एव पितरो जायन्ते, ऋषय एव पितृरूपेण परिणमन्तीति ऋतुमूलभूतानि तत्त्वानीह ऋतुशब्देनोपलक्षणीयानि, ते च ऋषय एवेत्यत्र न विवादः। व्याख्यास्यते चाप्यत्रैव ग्रन्थेऽग्रे सृष्टिप्रक्रियानिरूपणे ऋषीणामेव पितृत्वमिति तत्रैवावलोक्य निरसनीयः संशयः।

यदपि च देवजनकपितृजनकानामपि ऋषीणामिह देवजत्वमुक्तम्, तदपि वैज्ञानिके पथि न दोषाय। यथा हि तन्तुनिर्मितादपि पटात् पृथङ् निःसार्यमाणास्तन्तवो जायन्त इव, मृदा निर्मितादपि च कुड्यात् पुनर्मृन्निःसार्यते, तथैव ऋषिप्राणादेवं समुत्पन्नेभ्यः पितृभ्यो देवेभ्यो वा पुनः पृथग्भूय निःसरन्त ऋषयः पितृजा इव देवजा इव भवन्तीति कोऽत्र विस्मयः। अविकृतोपादानोपादेयभागे सर्वत्र व्यवस्थेयं वैज्ञानिकाभिमता। अत एव निरुक्तकृता भगवता यास्केनापि दैवतकाण्डे देवस्वरूपविचारे "अन्योऽन्यजन्मानो भवन्ति, इतरेतर प्रकृतयः" (निरुक्त. अ. ७) इति स्फुटमुक्तम्। तुल्यन्यायात् पितृषु ऋषिष्वपि च तदनुसन्धेयम्। किं च सृष्टिविस्तारकाले नासंमिश्रिता एकका: प्राणाद्याः स्वस्वकार्यं सम्पादयितुमीशते—अपि तु मिश्रितैर्देवादिप्राणैः संहता एव निर्वाहयन्ति सृष्टिप्रक्रियाम्। तत एव देवैः संगत्य कार्यकर्तार ऋषयो देवजा अप्याख्यातुं शक्यन्ते—वृत्तिलाभे देवापेक्षणात्। स्पष्टं चेदं देवसहकारित्वमग्रे सृष्टिविवरणे मूले एव।

किं च बह्वर्थगर्भिता निगममन्त्रा अतिगभीरा भवन्तीति ग्रन्थकृतात्र आध्या-

---

भाषाटीका

के बाद दूसरी आया करती है। यह क्रम सर्वदा चला करता है।

उक्त मन्त्र में ऋतुओं का ऋषि शब्द से व्यवहार किया गया है। यद्यपि अन्यत्र श्रुति और स्मृति में ऋतुओं को 'पितर' कहा गया है, किन्तु ऋषियों से ही पितरों की उत्पत्ति होती है, वा ऋषि ही पितृरूप से परिणत हो जाते हैं—यह श्रुति-स्मृति सिद्ध है, जो कि आगे मूल ग्रन्थ में स्पष्ट हो जायगा। अतः ऋतुओं के उत्पादक 'मूलतत्त्व' यहाँ ऋतुपद से विवक्षित हैं और वे मूल तत्त्व ऋषिप्राण ही हैं—इससे ऋतुओं को ऋषि कहने में कोई विरोध नहीं समझना चाहिये।

वेद मन्त्रों में अनेक भाव निगूढ रहते हैं। तदनुसार इस मन्त्र का आध्यात्मिक

संस्कृतव्याख्या

त्मिकोऽप्यर्थः परिगृहीतः । 'सप्त शीर्षण्याः प्राणाः' इत्यादि बहुधा श्रूयते । तत्रेदं रहस्यम्—मनुष्यशरीरेऽत्र चतस्रो गुहाः ( निगूढानि स्थानानि ) शिरोगुहा, उरोगुहा, उदरगुहा, बस्तिगुहा चेति । तासु प्रत्येकं सप्त प्राणायतनानि कार्य-सम्पादकानि स्थानानि, इन्द्रियनाम्नाप्येतानि व्यवह्रियन्ते । सप्तस्वपि शक्तिप्रद एको मुख्यः केन्द्रभूत इन्द्रः । तेषु च सप्तसु षड् द्वन्द्वक्रमेण तिष्ठन्ति, अन्तिमं तु एकमेव । यथा शिरोगुहायाम्—श्रोत्रे द्वे, चक्षुषी द्वे, नासिके द्वे—इति षट् । सप्तमं मुखबिलं त्वेकम् । केन्द्रभूतश्च ब्रह्मरन्ध्रगतो मुख्यो ज्ञानशक्तिप्रदः प्राणः । द्वितीयायामुरोगुहायाम्—द्वौ बाहू, द्वौ फुप्फुसौ, द्वौ स्तनौ, हृदयं तु सप्तममेककम् । केन्द्रभूतोऽत्र कण्ठकूपः पराक्रमशक्तिप्रदः । तृतीयायामुदर-गुहायाम्—यकृत्प्लीहे, आमाशयपक्वाशयौ, वृक्कौ, सप्तमी नाभिस्त्वेका । केन्द्रभूतमत्र हृदयमेव पूर्वगुहाया अन्तिमं स्थानमन्नसंग्रहविभजनादि-शक्तिप्रदम् । अथ चतुर्थ्यां बस्तिगुहायाम्—पादौ, मूत्रवीर्योत्सर्गच्छिद्रे, अण्ड-कोशौ च, सप्तमी तु एका गुदा । केन्द्रभूतात्र नाभिरेव पूर्वगुहाया अन्तिमं स्थानं शरीरकर्मनिर्वाहकोत्सर्गादिशक्तिप्रदम् ।

---

भाषाटीका

अर्थभी हो सकता है । उसका प्रकार यह है—प्राणों के विषय में बहुधा मिलता है कि मस्तक में सात प्राण हैं, उस उक्तिके आधार पर इस मन्त्र का आशय यह है कि—

मनुष्य-शरीर में चार गुफाएँ होती हैं—शिरोगुहा, उरोगुहा, उदरगुहा और बस्तिगुहा । प्रत्येक गुफा में कार्य-सम्पादन करने वाले सात प्राणों के स्थान होते हैं, जिनका इन्द्रिय नाम से भी व्यवहार किया जाता है । इन सातों का केन्द्र एक मुख्य प्राण है, जो कि सातों को शक्ति देने वाला है, वह इन्द्र कहा जाता है । इन में छह तो द्वन्द्व रूप से ( दो दो का युग्म बन कर ) रहते हैं-और सातवाँ एकाकी रहता है । जैसे शिरोगुहा में—दो कान, दो आँख, दो नाँक-ये छह युग्म रूप से हैं, सातवाँ मुख एकाकी । इन में मुख्य प्राण केन्द्रभूत ब्रह्मरन्ध्र में रहता है और वह ज्ञानशक्ति का देनेवाला है । दूसरी उरोगुहा में दो हाथ, दो फुप्फुस, दो स्तन और सातवाँ एक हृदय है । इनका केन्द्रभूत मुख्य प्राण कण्ठकूप है, जो कि पराक्रम शक्ति देता है । तीसरी उदरगुहा में यकृत् और प्लीहा दो, आमाशय और पक्वाशय दो, वृक्क दो और सातवीं एक नाभि । इन का केन्द्रभूत मुख्य प्राण हृदय ही है, जो कि पूर्वगुहा का अन्तिम स्थान है और अन्न संग्रह तथा उसके विभाजन की शक्ति देने वाला है । चौथी बस्तिगुहा में-दो पैर, मूत्र और वीर्य निकलने के दो छिद्र, दो अण्डकोश, सातवीं गुदा । इनका केन्द्रभूत इन्द्र-प्राण नाभि है, जो कि पूर्व गुहा का अन्तिम स्थान है और शरीरक्रम के निर्वाह के लिये उत्सर्ग शक्ति देनेवाली है ।

संस्कृतव्याख्या

एतच्छरीरविज्ञानमूलकमेव विराजः शरीरे ब्रह्माण्डे चतुर्धा विभक्तशक्तिकं चातुर्वर्ण्यं प्रवर्तते । ज्ञानशक्तिप्रधाना ब्राह्मणाः, पराक्रमशक्तिप्रधानाः क्षत्रियाः, संग्रह-विभजनादिशक्तिप्रधाना वैश्याः, सर्वकार्यनिर्वाहकसेवाशिल्पादिशक्ति-प्रधानास्तु शूद्रा इति । तेष्वपि चावान्तरशक्तिविभागजन्य उपजातिविभाग इति अलमिह प्रसक्तानुप्रसक्त्या । तदिदं प्रतिशरीरं विद्योतमानशक्तिमूलप्राण-विज्ञानमिह मन्त्रे समाम्नातम्—

साकंजानाम्—सहैव प्रतिशरीरमुत्पन्नानां प्राणानां मध्ये सप्तमम् एकमाहुः । षडेव ऋषयः प्राणाः, यमा—युग्मकरूपेण स्थिताः । ते च देवजाः—तेभ्यस्तेभ्यो देवेभ्य उत्पन्नाः, यथा आदित्याच्चक्षुषी, दिग्भ्यः श्रोत्रे, अश्विभ्यो घ्राणे-इत्यादिः शरीरविज्ञानप्रपञ्चः । तेषां स्वरूपाणि सर्वेषां प्राणिनामिष्टानि पृथक् पृथक् स्थानेषु स्थापितानि, रूपभेदेन विकृतानि-विविधकार्यसम्पादकानि च अधिष्ठात्रे रेजन्ते—कम्पन्ते-सचेष्टानि तिष्ठन्तीति अस्मिन् पक्षे मन्त्रपदार्थः ।

एवमेव तारामण्डलगतेषु सप्तर्षिषु षड् युग्मरूपेण परस्परसांमुख्येन

---

भाषाटीका

[ इस शरीर विज्ञान के आधार पर ही विराट् के ब्रह्माण्ड रूप शरीर में भी शक्ति के चार विभाग कर, उन के आधार पर चातुर्वर्ण्य माना गया है ।

जिन में ज्ञानशक्ति प्रधान हो वे ब्राह्मण, जिन में पराक्रमशक्ति प्रधान हो वे क्षत्रिय, जिन में धन-धान्यादि-संग्रह और उन के उचित विभाजन की शक्ति प्रधान हो वे वैश्य, और जिन में सब की सेवा तथा शिल्पकला की शक्ति प्रधान हो वे शूद्र हैं । जैसे इन शक्तियों के सात-सात आयतन अभी बताये गये हैं, उसी प्रकार ब्रह्माण्ड में अन्य उपजातियां भी हैं, किन्तु प्रसङ्ग न होने से उनका विस्तृत व्याख्यान यहां नहीं किया जा सकता । ] यों प्रत्येक प्राणी के शरीर में रहनेवाले शक्ति के मूलभूत प्राण का विज्ञान इस मन्त्र में बताया गया है ।

मन्त्र का अक्षरार्थ यह है कि प्रत्येक शरीर में साथ ही उत्पन्न होने वाले प्राणों में सातवां प्राण एकाकी है, और शेष छह प्राण युग्म रूप से अर्थात् दो-दो मिल कर रहते हैं । इन सब प्राणों की उत्पत्ति देवताओं से है, जैसे-सूर्य से नेत्र, दिशाओं से कान और अश्वि से नाँक उत्पन्न हुए हैं । इन प्राणों का स्वरूप संघटन सब भोक्ता प्राणियों का अभिमत है, और ये प्राण (पृथक्-पृथक्) अपने अपने स्थानों में प्रतिष्ठित हैं । प्रत्येक प्राण के भिन्न-भिन्न कार्य होने से इनके स्वरूप भी भिन्न-भिन्न प्रकार के हैं, और ये सदा क्रियाशील रहते हैं । यह दूसरी व्याख्या हुई ।

इसी प्रकार सप्तर्षि तारामण्डल में भी छह तारा युग्म रूप से ( एक दूसरे के

(७) "प्राणो वै वसिष्ठ ऋषिः । यद्वै नु श्रेष्ठस्तेन वसिष्ठः । अथो यद् वस्तृतमो वसति तेनो एव वसिष्ठः" ( शतप. ८।१।१।६ )

(८) "मनो वै भरद्वाज ऋषिः । अन्नं वाजः । यो वै मनो बिभर्ति सोऽन्नं वाजं भरति । तस्मान्मनो भरद्वाज ऋषिः" ( शत. ८।१।१।६ )

---

संस्कृतव्याख्या

तिष्ठन्ति, सप्तमं त्वेककं पृथगिव स्थितमित्याद्यपि योज्यम् । तदित्थं प्राणतत्त्वस्य कात्स्न्येन निरूपकोऽयं मन्त्रः ।

ब्राह्मणेष्वपि तत्र तत्राध्यात्मं श्रुतं प्राणरूपाणामिन्द्रियाणां तत्तदृषित्वं स्मारयति–'प्राणो वै वसिष्ठ ऋषिः' । स्पष्टप्रायाणि वाक्यानीमानि । एवमेव छान्दोग्ये बृहदारण्यके च प्राणोपासनायामनेकत्र द्रष्टव्यम् । क्वचित् मुख्यस्य प्राणस्यैव वसिष्ठादीनि नामानि व्युत्पादितानि, क्वचिच्च पृथक् पृथगिन्द्रियाणां पृथङ् नामानि व्युत्पादितानि । सर्वथापि तु ऋषीणां प्राणरूपतायां प्रमाणभूतान्येवेति ।

---

भाषाटीका

अभिमुख ) रहते हैं और सातवां अकेला । यह व्याख्यान भी मंत्र का हो सकता है । यों प्राणतत्त्व का संपूर्ण वर्णन उक्त मंत्र में आ जाता है ।

(७) ब्राह्मणों में कई जगह भिन्न-भिन्न इन्द्रिय आदि प्राणों को भिन्न-भिन्न ऋषि नाम से संबोधित किया गया है उनका भी प्रमाण देते हैं–"प्राणो वै वसिष्ठ ऋषिः" इत्यादि। इन श्रुतियों का यह अर्थ है कि मुख्य प्राण वसिष्ठ ऋषि है । वह श्रेष्ठ है इसलिये वसिष्ठ है । 'वसु' शब्द का यहाँ प्रशस्य अर्थ माना गया, उससे 'इष्ठन्' प्रत्यय करने पर 'अत्यन्त प्रशस्य' अर्थात् सबसे श्रेष्ठ अर्थ हुआ । अथवा वस् धातु के निवास अर्थ के आधार पर 'वस्तृ' शब्द से 'इष्ठन्' प्रत्यय मानकर दूसरी व्याख्या करते हैं कि प्राण सब इन्द्रियों को शरीर में वास देता हुआ स्वयं वसता है, बिना प्राण के कोई इन्द्रियां नहीं ठहर सकतीं–यह उनिषदों के दूसरे प्रकरणों में स्पष्ट है । इस लिये सबसे अधिक निवासशक्ति होने के कारण 'वसिष्ठ' है ।

( ८ ) मन 'भरद्वाज' ऋषि है । वाजनाम अन्न का है और मन अन्न का ही परिणाम है, "अन्नमयं हि सोम्य मनः" ( छान्दोग्य उप० ) । तब जो मन को धारण करता है, वह अन्न का अवश्य भरण ( भोजन ) करता है, इस लिये 'भरा जाता है अन्न जिसके लिये' वह मन 'भरद्वाज' सिद्ध हुआ ।

(९) "चक्षुर्वै जमदग्निर्ऋषिः । यदनेन जगत्पश्यति, अथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः ( शत. ८।१।२।३ )

(१०) "श्रोत्रं वै विश्वामित्र ऋषिः । यदेनेन सर्वतः शृणोति । अथो यदस्मै सर्वतो मित्रं भवति । तस्माच्छ्रोत्रं विश्वामित्र ऋषिः" ( शत. ८।१।२।६ )

(११) "वाग् वै विश्वकर्म ऋषिः। वाचा हीदं सर्वं कृतम्। तस्माद् वाग् विश्वकर्म ऋषिः"। ( शत. ८।१।२।९ ) इत्यादि चयनश्रवणाच्च

(१२) प्राणा एव देवाः, प्राणा एव ऋषयः । किन्तु

---

संस्कृतव्याख्या

**प्राणा एव देवाः ।** शतपथब्राह्मणस्य चतुर्दशे काण्डे बृहदारण्यकोपनिषदि तृतीयेऽध्याये नवमे ब्राह्मणे जनकयज्ञोपाख्याने 'कति देवाः ? इति शाकल्यस्य प्रश्ने 'एकः' 'अध्यर्धः' 'द्वौ' 'त्रयः' 'षट्' 'त्रयस्त्रिंशत्' 'त्रयस्त्रिंश-

---

भाषाटीका

( ९ ) चक्षु 'जमदग्नि' ऋषि है। 'जमत्' शब्द 'जगमत्' से गकार का लोप होकर बना है, 'जगमत्' अर्थात् जगत् को जिससे पहचाना जाय, वह 'जमत्' हुआ यों 'चक्षु' ( आँख ) 'जमत्' भी है, और प्रकाशशील ( चमकदार ) होने के कारण 'अग्नि' भी है, देखने के कारण ऋषि है ( ऋषिर्दर्शनात् ) इस प्रकार चक्षु 'जमदग्नि ऋषि' हुआ ।

(१०) श्रोत्र ( कान ) विश्वामित्र ऋषि है, क्यों कि कान से सबकी बात सुनी जाती है, जिसकी बात सुनते हैं, वह अपना मित्र हो जाता है, अतः विश्व को मित्र बना देनेवाला कान विश्वामित्र हुआ ।

(११) वाक् विश्वकर्मा ऋषि है। कारण यह कि वाक् से ही सब जगत् बनाया जाता है ( देखो मन प्राण, वाक् का निरूपण ) अतः 'विश्व है कर्म जिसका' वह वाक् विश्वकर्मा हुई । इन चयन-प्रकरण की श्रुतियों से भी ऋषियों की प्राणरूपता सिद्ध होती है, यों ऋषियों की प्राणरूपता सिद्ध हुई ।

(१२) प्राण ही देव रूप भी हैं ।

शतपथ ब्राह्मण के चौदहवें काण्ड में बृहदारण्यकोपनिषद् के तीसरे अध्याय के नवें ब्राह्मण में जनक के यज्ञ के उपाख्यान में शाकल्य ऋषि ने याज्ञवल्क्य ऋषि से प्रश्न किया है कि-कितने देवता हैं ? याज्ञवल्क्य ने क्रमशः

संस्कृतव्याख्या

त्सहस्राणि' इत्यादीनि विभिन्नान्युत्तराणि ब्रुवन् भगवान् याज्ञवल्क्यस्तदुपपादनावसरे प्राण एको देवः, योऽयं पवते (देवरूपो वायुः) सोऽध्यर्धः, अन्नं च प्राणश्चैतौ द्वौ, तत्प्रपञ्चभूताः पृथिव्यन्तरिक्षद्युलोकाः स्थानभूतास्त्रयः, स्वस्थानिभूतैः - स्वजनकैः—अग्निवाय्वादित्यैः सहैत एव षड्, तेषां प्रपञ्चभूता अष्टौ वसवः (अग्नेः प्रपञ्चः) एकादशरुद्राः (वायोः प्रपञ्चः) द्वादशादित्याः (आदित्यप्रपञ्चः) इन्द्रश्च प्रजापतिश्च—इति त्रयस्त्रिंशत्, तन्महिमभूताश्च त्रयस्त्रिंशच्छतानि तावन्ति सहस्राणि चेति व्याचक्षाणः स्पष्टं प्राणस्यैव देवत्वमुपदिशति । अन्यत्रापि च "तेजोरसो निरवर्ततानिः, स त्रेधात्मानं व्यकुरुत, आदित्यं तृतीयं, वायुं तृतीयम्—स एष प्राणस्त्रेधा विहितः" ( बृह. अ. १ ब्रा. ३।२-३ क. ) इत्यादिषु अग्निवाय्वादित्या देवाः प्राणरूपतयैवाख्याताः ।

न च प्राणा एव देवा—नान्ये सन्ति देवा इति भ्रमितव्यम् । तारामण्डलेऽपि सन्ति देवाः, लोकान्तरवासिनो जीवविशेषा अपि सन्ति देवाः, भूस्वर्गवासिनो मनुष्यविशेषा अपि च देवाः, इहापि च विद्वांसो देवाः—इत्येवं भेदनिरूपणे अष्टविधा देवाः संपद्यन्ते । ते ग्रन्थान्तरेषु सृष्टिप्रक्रियाप्रतिपादकेषु, भगवद्गीताविज्ञानभाष्यादिषु, जगद्गुरुवैभवादिषु

---

भाषाटीका

उत्तर दिया एक, डेढ़, दो, तीन, छह, तेतीस और तेतीस हजार । इस तरह विभिन्न प्रकार के उत्तरों का उपापादन करते हुए ऋषि ने कहा-प्राणरूप देवता एक है, वायु देवता जो प्राण का मूल है वह, अध्यर्ध[1] है अन्न और प्राण ये दो देव हैं, पृथिवी अन्तरिक्ष और द्युलोक ये तीन देव हैं, इन के अधिष्ठाता अग्नि, वायु और सूर्य को पृथक् गिनने से छह हो जाते हैं। इनके ही प्रपञ्चभूत आठ वसु, एकादश रुद्र, द्वादश आदित्य, इन्द्र और प्रजापति यों तेतीस देवता होते हैं। इनके कार्य के विस्तार से इनकी ही महिमारूप तेतीस सौ और तेतीस हजार हो जाते हैं। इस व्याख्यान में महर्षि याज्ञवल्क्य ने स्पष्ट कहा है कि प्राण मुख्य देव है ।

किन्तु इससे यह न समझना चाहिये कि और कोई देवता हैं ही नहीं—तारामण्डल में भी अग्नि इन्द्र आदि देव हैं, दूसरे लोक में ( सूर्यमण्डल, तारामण्डल आदि में ) रहने वाले प्राणिविशेष भी देव हैं, सुमेरु प्रान्त के स्वर्ग में रहने वाले मनुष्य विशेष भी देव हैं, और इस भारतवर्ष के विशिष्ट विद्वान् भी देव कहे जाते हैं। सब मिलाकर

---

[1]'अध्यर्द्ध' डेढ़ को कहते हैं किन्तु यहां अध्यर्द्ध का अर्थ लिया है जिसमें रहते सब तत्त्व बढ़ते रहें । और इससे यह भी आशय समझ लेना चाहिए कि वायु के आश्रित तत्त्व आधा और वायु एक यों डेढ़ हुआ ।

**न देवा ऋषयः, न ऋषयो देवाः ।**

**(१३) यत्र तु देवानामिन्द्रादीनामृषित्वं क्वचिदुपचर्यते, तत्र वक्तृत्वलक्षणं तत्स्याद्, नत्वसल्लक्षणमिति विवेक्तव्यम् ।**

---

संस्कृतव्याख्या

च व्याख्याताः, नात्र तत्प्रपञ्चावसरः ।

**न देवा ऋषयः ।** यथा हि सुवर्णमेव कटकम्, सुवर्णमेव च कुण्डलम् तथापि न कटकं कुण्डलम्, न वा कुण्डलं कटकम् । अवस्थाभेदेन तत्तदवस्थावोधकानां शब्दानामन्यत्राप्रवृत्तेः । तथैव प्राणरूपत्वे समानेऽपि अवस्थाभेदाद् देवा ऋषयश्च पृथक् पृथगेवोच्यन्त इति भावः ।

**वक्तृत्वलक्षणम् ।** चतुर्थविधम् ऋषित्वमिदमग्रे व्याख्यास्यते । तच्च देवानामपि संभवति—ततश्चेन्द्रादीनां तथाविधमृषित्वं बोध्यम्, न तु प्राणरूपत्वं प्रथमविधम् । देवानामपि मन्त्रेषु वक्तृत्वरूपेण कल्पना दृश्यते-ततस्तेऽपि चतुर्थविधा ऋषयः संभवन्ति । भूस्वर्गवासिनामिन्द्रादीनां तृतीयविधं द्रष्टृत्वलक्षणमपि ऋषित्वं संभवतीति जगद्गुरुवैभवे प्रपञ्चितम् ।

---

भाषाटीका

आठ प्रकार के देव हैं, जिनका विस्तृत विवरण भगवद्गीता-भाष्य, जगद्गुरुवैभव आदि दूसरे ग्रन्थों में किया गया है । अस्तु

इस प्रकार सिद्ध हुआ कि देवता प्राणरूप हैं और ऋषि भी प्राणरूप, किन्तु देव ऋषि नहीं होता और न ऋषि देवता होता है । देवता और ऋषि दोनों हैं पृथक्-पृथक्, जिस तरह एक ही सुवर्ण के कुण्डल-कटकादि आभूषण बनाये जाते हैं, किन्तु वे एक नहीं कहे जाते, अवयव-संनिवेश-भेद से परस्पर सब भिन्न-भिन्न होते हैं । उस ही प्रकार देव और ऋषि में अवस्था भेद समझना चाहिये ।

(१३) यद्यपि इन्द्र आदि देवों का भी कई स्थानों में ऋषिशब्द से व्यवहार किया गया है, किन्तु उनका वह ऋषिव्यवहार अन्य प्रकार का है । अर्थात् ऋषि शब्द के चार प्रकार के व्यवहार जो बताये जा रहे हैं, उनमें इन्द्रादि को चतुर्थ प्रकार ( वक्तृत्वलक्षण ) में समझना चाहिये । मन्त्रों में कई जगह इन्द्र आदि देवों को भी वक्ता माना गया है, इसलिये ये चौथे प्रकार के ऋषि सिद्ध होते हैं । इस प्रथम प्रकार में इन्द्रादि देवता नहीं आ सकते । अर्थात् असत् शब्द से कहे जाने वाले प्राणों में देवों की गणना नहीं हो सकती ।

(१४) यत्तु वाजसनेयश्रुतौ–"योऽयं मध्ये प्राण एष एवेन्द्रः" इत्येवमृषेरिन्द्रत्वमाख्यातम्, तत्तस्य नानापुरुषरसग्राहितया देवत्वसापेक्षं स्यात् ।

(१५) बृहस्पतिस्त्वेष देववर्गे श्रूयते, पितृवर्गे च, ऋषिवर्गे च । स भिन्नभिन्नोऽर्थः स्यात्, समानशब्द इति न दोषः । एवमन्यत्रा-

---

संस्कृतव्याख्या

**नानापुरुषरसग्राहितया ।** मध्ये स्थितः केन्द्रप्राणो हि सर्वतो विसृत्वरस्य 'सर्वप्रजापतेः' आदानप्रदानरूपयज्ञप्रक्रियया रसग्राहीति अग्रे सृष्टिप्रस्तावे स्फुटीभविष्यति । तया प्रक्रिययायं मध्येप्राणो नानाप्राणानां प्राणसमूहानां च रसग्राहितया नानाप्राणसमष्टिरूपतामेवाप्त इति ऋषेरपि तस्य देवत्वमुपचाराद् व्यवह्रियते । तस्माद् देवप्रधानेन्द्रशब्देन तद्व्यवहार उपपद्यत इति भावः ।

**बृहस्पतिस्त्वेषः ।** अत्र सुप्रसिद्धे देवानामृषीणां च परस्परं भेदे क्वचिद् बृहस्पत्यादौ देवत्वमृषित्वं च यदि विभिन्नप्रकरणे श्रूयते, तर्हि एकेनैव नाम्ना प्राणव्यक्तिद्वयं तदित्येवाकलनीयम् । देवो बृहस्पतिर्भिन्नः, ऋषिस्तु बृहस्पति-

---

भाषाटीका

(१४) वाजसनेयश्रुति में–यह जो मध्य में रहने वाला प्राण है, वह इन्द्र है–इस प्रकार मौलिक ऋषिरूप प्राण को इन्द्र कहा है, उसका अभिप्राय यह है कि मध्य-( केन्द्र ) स्थित प्राण संपूर्णमण्डल-स्थित प्राणों का वा प्राणसमूह देवों का रस यज्ञ-प्रक्रिया से लेता वा देता रहता है इसलिये यह विशुद्ध प्राण भी प्राणसमूहरूप माना जा सकता है । भिन्न-भिन्नजातीय प्राणसमूह को ही 'देव' कहते हैं । इसलिये उस मध्य प्राण का देवाधिपति इन्द्र नाम से व्यवहार किया गया है ।

(१५) इस के अतिरिक्त बृहस्पति का नाम देववर्ग में आता है, साथ ही पितृवर्ग में और ऋषिवर्ग में भी, किन्तु वहाँ बृहस्पति शब्द भिन्न-भिन्न अर्थ में आया है–यही मानना होगा । अर्थात् 'बृहस्पति' नाम से अनेक प्राण विवक्षित हैं । कहीं देवरूप, कहीं पितृरूप, और कहीं ऋषिरूप भी । एक ही बृहस्पति भिन्न-भिन्न स्थानों पर लिया जा सके यह संभव नहीं । इस प्रकार जहाँ एक ही नाम भिन्न-भिन्न समुदाय में आवे, वहाँ एक नाम के भ्रम से सब जगह उस ही व्यक्ति को न समझना

न्यत्र देवतास्वरूपनिर्वचने विरोधाभासाः पराकार्याः ।

इति प्रथमा प्रवृत्तिः ।

—:o:—

## अथ द्वितीया प्रवृत्तिः

(१) अथ या एताः 'रोचन्ते रोचना दिवि' यासु ऋक्षनक्षत्रतारकादयः शब्दाः प्रसिद्ध्यन्ति, तास्वेनमृषिशब्दमुपचरन्ति स्म पूर्वे महर्षयः। तथा च श्रूयते—

'एकं द्वे त्रीणि चत्वारीति वा अन्यानि नक्षत्राणि। अथैता एव भूयिष्ठा यत् कृत्तिकाः।...ऋक्षाणां ह वा एता अग्रे पत्न्य

---

संस्कृतव्याख्या

भिन्न इत्येव तत्र मन्तव्यं स्यात्, गत्यन्तराभावादिति ।

इति प्रथमा प्रवृत्तिः ।

—:o:—

अथ द्वितीय प्रवृत्ति

अथ दिवि या द्युतिमत्यः प्रकाशन्ते ताराः, तास्वपि बहुत्र ऋषिशब्दप्रयोगं प्रदर्शयितुमुपक्रमते—"रोचन्ते रोचना दिवि।" श्रुतिखण्डमिदं स्ववाक्यान्वयित्वेन समुपात्तम्।

द्वे त्रीणि चत्वारि। अस्मिन् ब्राह्मणे कृत्तिकानक्षत्रस्य बहुतारासमूहता-

---

भाषाटीका

चाहिये, अपि तु एक नाम वाले भिन्न-भिन्न व्यक्ति वहाँ मान लेने चाहियें। यह ऋषि शब्द की प्रथम व्याख्या संक्षेप से की गई।

—:o:—

### ऋषि शब्द का दूसरा अर्थ

(१) अब ऋषि शब्द का दूसरा अर्थ बताते हैं कि—आकाश-मण्डल में चमकनेवाले ऋक्ष नक्षत्र तारा आदि नाम से प्रसिद्ध बिम्बों में पूर्व महर्षियों ने ऋषिशब्द से व्यवहार किया है। शतपथ श्रुति में कहा गया है कि—'अन्यान्य नक्षत्रों में एक, दो, तीन, या चार तारे हैं, किन्तु कृत्तिका में ही बहुत तारे हैं। पहले भालू के समान आकारवाले ऋक्ष नाम के नक्षत्रों की ये पत्नियाँ थीं। यह जो सप्तर्षिमण्डल है, इन

आसुः। सप्तर्षीनु ह स्म पुरर्क्षा इत्याचक्षते।... अमी ह्युत्तरा हि सप्तर्षय उद्यन्ति पुर एताः-(शत. २।१।२।१-४) इति। तत्र—

(२) "जज्ञानः सप्तमातृभिर्मेधामाशासत श्रिये।

---

संस्कृतव्याख्या

मुपपाद्य तत्र ऋक्षपत्नीत्वमारोप्य सप्तर्षय एव ऋक्षा इत्युपसंहृतम्। सप्तर्षयश्चेमे ध्रुवसमीपवर्तिन इत्यग्रिमेण मन्त्रेण समर्थ्यते।

**जज्ञानः।** यद्यपि पवमानमण्डलस्थो मन्त्रोऽयमृग्वेदे सोमदेवतापरत्वेन, सामवेदे चाग्निदेवतापरत्वेन भाष्यकृता श्रीसायणमाधवाचार्येण व्याख्यातः, ध्रुवशब्दार्थश्च सोमोऽग्निर्वा तेन विवक्षितः, तथापि मन्त्रा बह्वर्थगभीरा भवन्तीति अनेन ग्रन्थकृता ध्रुवशब्दस्य मुख्यार्थं ध्रुवतारां गृहीत्वा तत्परत्वेनैव मन्त्रोऽयं गृह्यते। तत्र ऋग्वेदे 'जज्ञानं सप्तमातरः' इति पाठः। अत्र तु सामवेदे दृष्ट एव पाठो निवेशितः। सप्तमातृभिः—सप्तर्षिनामिकाभिः सप्तता-

---

भाषाटीका

सप्तर्षियों को ही पुराने समय में ऋक्ष कहते थे। सप्तर्षिमण्डल ध्रुवतारा के सन्निकट उत्तर दिशा में है, और ये कृत्तिका के तारे पूर्व में हैं। "जज्ञानः" आदि आगे के मन्त्र में भी यही बताया गया है।

(२) यद्यपि पवमानमण्डल के इस मन्त्र का व्याख्यान भाष्यकार श्री सायणमाधवाचार्य ने ऋग्वेद में सोमदेवतापरक और सामवेद में अग्निदेवतापरक किया है, और ध्रुव शब्द का अर्थ उनने अग्नि व सोम माना है, किन्तु मन्त्रों के अर्थ बहुत गम्भीर हुआ करते हैं—मन्त्रों में अनेक आशय रहते हैं, अतः ग्रन्थकार ने यहां उक्त मन्त्र का व्याख्यान ध्रुवतारापरक ही किया है, क्योंकि ध्रुव शब्द का प्रसिद्ध एवं मुख्य अर्थ तारा ही है।

"जज्ञानः" आदि मन्त्र का भाव है कि—सप्तर्षि नाम से प्रसिद्ध सात तारे, जो कि जगत् के उत्पादक होने के कारण माता का स्थान ले लेते हैं, इन मातृ-रूप सात नक्षत्रों के साथ ध्रुव सृष्टि के आदि में उत्पन्न हुआ है, यह ध्रुव कर्मकर्त्ता यजमान को श्रीसंपन्न करता है, धनादि वितरण करना भलीभाँति जानता है। इस मन्त्र में मातृ शब्द से जिन सात नक्षत्रों का उल्लेख है, आकाशमण्डल में उन ताराओं का सन्निवेश भालू के आकार के समान दिखाई देता है। आकार की समानता के

अयं ध्रुवो रयीणां चिकेतदा"। ( साम. सं. प्र. २—मं. ९ )
इति मन्त्रोपलक्षिता विष्णुपदसप्तमातृका एव ऋक्षाख्यसप्तमृगाकारेण निवेशिता इह ऋक्षाः स्युः, तत्रैव चायमृषिशब्दोपचारः ।

(३) अपि च—

---

संस्कृतव्याख्या

राभिः, लोकानामुत्पादकत्वेन मातृस्थानीयाभिः सह, जज्ञानः-प्रादुर्भूतः, अयं ध्रुवः-ध्रुवनक्षत्रम्, कर्मणो विधातारं यजमानं श्रिये अशासत श्रिया योजयतीत्यर्थः। यतोऽयं ध्रुवः, रयीणां—धनानाम्—दानम्, आचिकेतत्—सम्यग् जानाति। अत्र मन्त्रे मातृपदेन याः सप्त ताराः श्रुताः, ता एव सन्निवेशसास्येन ऋक्षत्वमारोप्य 'सप्तर्षीनुह' इत्यादि पूर्वोक्तब्राह्मणे ऋक्षपदेन व्यवहृताः। सप्तर्षिपदेन च स्पष्टमेव तत्र ऋषित्वं व्यवहृतम्। विष्णुपदशब्देन च ध्रुवं केन्द्रीकृत्याभितश्चतुर्विंशत्यक्षांशपरिमितः प्रदेशो गृह्यते, यः 'कदम्बवृत्तम्' इत्याधुनिके ज्यौतिषशास्त्रे व्यवह्रियते ।

य इमा विश्वा । एषामपि मन्त्राणां व्याख्यानं यद्यपि माधवोव्वटमहीधरादिभाष्येषु विभिन्नयैव शैल्या लभ्यते, तथापि स्वारस्येन ग्रन्थकृताऽत्र तारामण्डलपरतयैव मन्त्रा इमे गृहीताः ।

---

भाषाटीका

कारण इन नक्षत्रों में ऋक्ष ( भालू ) का आरोप कर 'सप्तर्षीनुह' इत्यादि पूर्वोक्त ब्राह्मण-भाग में ताराओं का ऋक्ष ( भालू ) पद से व्यवहार किया गया है। सप्तर्षि पद से इन नक्षत्रों को स्पष्ट ही ऋषिशब्द से कहा गया है। ध्रुवतारा को मध्यकेन्द्र में मानकर उसके चारों तरफ के चौबीस-चौबीस अक्षांश परिमित प्रदेश को 'विष्णुपद' कहते हैं। इस विष्णुपद को आधुनिक ज्यौतिष में 'कदम्बवृत्त' कहा गया है, उस वृत्त में ये सप्तर्षि आते हैं।

(३) आगे और भी मन्त्र इस विषय में प्रमाणरूप से उपस्थित किये गये हैं। श्री माधव-उव्वट और महीधर आदि वेद के भाष्यकारों ने उक्त मन्त्रों का व्याख्यान भी अन्य प्रकार से किया है, किन्तु ग्रन्थकार ने यहाँ इन को तारामण्डल के संबन्ध में ही उद्धृत किया है।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यषीदत् पिता नः
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश ।
ऋक्० १०।८१।१

---

संस्कृतव्याख्या

तत्र 'य इमा विश्वा भुवनानि' इति मन्त्रे 'ऋषि'पदेन ध्रुवो विवक्षितः । स हि विश्वानि-सर्वाणि भुवनानि, जुह्वत् आह्वयत्, न्यषीदत् स्थितो वर्तते । ध्रुवस्यैवाकर्षणे सर्वं सौरं जगत् स्थितं तमेव परिक्रामतीति पुराणेषु स्पष्टमाख्यातम् । तदेवाकर्षणमिहाह्वानपदेन विवक्षितम् । अत एव स होता-सर्वेषां देवानामाह्वाता । ध्रुवस्याधस्तात् सुमेरुपर्वत एव देवा निवसन्तीत्यपि स्पष्टं पुराणेषु । स च द्युलोकाधिष्ठातृत्वात्, नः-अस्माकं सर्वेषां, पिता । 'द्यौः पितः पृथिवि मातः' इत्यनेकत्र श्रवणात् । स यजमानाय आशिषा द्रविणं-धनम्, इच्छमानः-प्रयच्छन्, प्रथमच्छत्-सर्वप्रथमश्छादयिता । ध्रुवो हि सर्वेभ्य उत्तरः, उत्तरा च दिग् उच्चैर्मन्यते वैदिकपरिभाषायाम् । ततः सर्वोच्चत्वात् पुराणाकाशस्य-सौरजगतः सर्वप्रथमच्छादकत्वमस्योक्तम् । एवं विधोऽयमवरान् स्वस्मादवरे स्थितान्-सर्वान् लोकानाविशतीव स्वप्रभावेण सर्वत्र स्थित इव ।

---

भाषाटीका

"य इमा विश्वा"-इत्यादि मन्त्र में कहे गये ऋषिशब्द का अर्थ ध्रुव नक्षत्र है। यह ध्रुव सब भुवनों का आकर्षण किये खड़ा है। संपूर्ण सौर जगत् ध्रुव के आकर्षण पर ही अवलम्बित है, और ध्रुव के चारों तरफ घूमा करता है-यह पुराणों में प्रसिद्ध है। उक्त मन्त्र में आह्वान का अर्थ आकर्षण ही है। आगे के 'होता' पद का अर्थ भी बुलाने-वाला अर्थात् आकर्षण करनेवाला ही है। ध्रुव के नीचे सुमेरु पर्वत पर सब देवताओं का निवास है यह भी पुराण-सुप्रसिद्ध है। यह ध्रुव द्युलोक का अधिष्ठाता ( स्वामी ) है, अतः हमारा पिता है। स्वर्ग पिता और पृथ्वी माता है-यह स्थान स्थान पर श्रुति में मिलता है। ध्रुव नक्षत्र यजमान को आशीर्वाद के द्वारा धनादि देता रहता है, और यह ही सौर जगत् का सर्वप्रथम आच्छादक है। ध्रुव सबसे उत्तर दिशा में है, और उत्तर दिशा को वैदिक परिभाषा में सबसे ऊँचा माना गया है। इसलिये सिद्ध हुआ कि पुराणाकाश ( सौर जगत् ) का यह ध्रुव सर्वप्रथम आच्छादक है। इस प्रकार यह ध्रुव अपनेसे नीचेवाले लोकों को अपने प्रभाव से आकर्षण में रखता है, और संसार की प्रत्येक वस्तु में सतत वर्त्तमान रहता है अर्थात् सबसे संबन्ध रखता है।

(४) विश्वकर्मा विमना आद् विहाया विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् परमेकमाहुः ।
ऋक् सं०—१०।८२।४

(५) त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।

---

संस्कृतव्याख्या

विश्वकर्मा विमना, इत्यादिमन्त्रे च विश्वकर्मा-कश्यपः, विमनाः-इन्द्रः, (आद्-तदन्तरे) विहाया-अग्निः, धाता विधाता इति सर्वा इमास्ताराः। तत्र कश्यपः ६८ अंशोपरि स्थितः, (इप्सलाइ) इत्याङ्गलेषु प्रसिद्धः। इन्द्रश्च चित्रानक्षत्रे 'उलूक'सदृशाकारः प्रसिद्धः। अग्निः ब्रह्महृदयेन प्रजापतिना च सह त्रिकोणं निर्मिमाणः ८० अंशोपरि मिथुनराशौ स्थितः। धाता, विधाता च ध्रुवसन्निधौ लघुसप्तर्षिषु प्रसिद्धौ। अत एवोक्तम्—अनयोः संदृक्-सम्यग् दर्शनम्, परमा-सर्वोच्चैर्भूतम्। तत्सविधे च परे स्थाने सप्तर्षीन् एकरूपेण स्थितानाहुः। एतद् द्रष्टॄणामिष्टानि इच्छया अन्नेन वा मदन्ति तृप्तानि भवन्तीति।

**त आयजन्त।** पूर्वे ऋषयः-तारारूपाः, असूर्ते-अतप्ते-सूर्याद् दूरदेशे, सूर्ते-तप्ते, सूर्योपगृहीते च, रजसि-लोके, जरितारो न-स्तोतार इव, भूना-भूम्ना,

---

भाषाटीका

(४) 'विश्वकर्मा विमना' आदि मन्त्र में विश्वकर्मा नाम से कश्यप तथा विमना नाम से इन्द्र का ग्रहण है। इनके ही आस-पास विहाया अर्थात् अग्नि और धाता, विधाता आदि सब तारा हैं। इनमें 'कश्यप' ६८ अंश पर वर्तमान है और 'इप्सलाइ' नाम से योरोपीय जगत् में प्रसिद्ध है। इस ही तरह 'इन्द्र' चित्रा नक्षत्र में वर्तमान 'उल्लू' पक्षी के समान आकार वाला है, और अग्नि, ब्रह्महृदय एवं प्रजापति के साथ त्रिकोण बनाता हुआ ८० अंश पर मिथुन राशि में वर्तमान है। धाता, विधाता ध्रुव के समीप लघु सप्त ऋषियों में प्रसिद्ध हैं। अतएव इनके विषय में 'संदृक्' कहा गया है। अर्थात् ये दोनों सबसे ऊँचे हैं। इस सर्वोच्च स्थान में इनके समीप ही सातों ऋषि हैं—जो सर्वदा एक स्वरूप से स्थित रहते हैं। ये देखनेवालों के लिये बड़े लाभदायक होते हैं और श्रद्धायुक्त भावना मात्र से, अथवा अन्न आदि से तृप्ति-लाभ कराते हैं।

(५) "त आयजन्त" आदि मन्त्र में कहा है कि तारारूप में वर्तमान ऋषिगण—सूर्योपताप से रहित अर्थात् सूर्यमण्डल से दूर एवं सूर्योपताप में संगृहीत

असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥
(सं.१०।८२।४)

इत्यादिमन्त्रेषु ध्रुवतारायाम्, तदासन्नसप्ततारासु तदन्यतारकासु चायमृषिशब्दोपचारो दृश्यते।

(६) आसु सप्तसु तारासु चत्वारश्चतुरस्रक्षेत्रकोणस्थाः। ततोऽन्ये त्रयः पूर्वतो निविष्टाः। तेषु त्रिषु यः सर्वतः प्राच्यां दृश्यते स मरीचिः। यः पश्चिमश्चतुरस्रसन्निहितः सोऽङ्गिराः। तयोर्मध्यतो वसिष्ठोऽरुन्धतीसहितः।

(७) चतुरस्रे त्वङ्गिरसः सन्निधावत्रिः। ततोऽन्ये पुलस्त्य-पुलह-

---

संस्कृतव्याख्या

निषन्ते-निषीदन्ति। ते, समस्मै-सर्वस्मै जनाय, द्रविणं-धनम्, आयजन्त-ददति। ये च इमानि भूतानि-समकृण्वन्-विरचयन्ति। तारामण्डलस्यैव सर्वलोकानुग्राहकत्वादिति।

---

भाषाटीका

अर्थात् समीप दोनों प्रदेशों के लोकों पर अपने तेज से परिवेष्टित रहते हुए विराजते हैं, जैसे कि यज्ञ में स्तोता लोग चारों ओर बैठते हैं। ये नक्षत्र रूप ऋषि समस्त जगत् को धनधान्य से पूर्ण करते हैं और ये ही सब भूतों के रचयिता हैं, क्योंकि तारामण्डल को ही सब प्राणियों का उपकारक वा उत्पादक माना गया है।

(६) इस प्रकार उपरोक्त तीनों मन्त्रों के अर्थ से स्पष्ट हुआ कि ध्रुव तथा उसके समीप की सात ताराओं में और इतर तारागण में भी ऋषिपद का व्यवहार श्रुति में देखा जाता है।

(७) इन सात ताराओं का सन्निवेश इस प्रकार है कि इनमें से चार चौकोर रूप में चारों कोनों में स्थित हैं, और इनके अतिरिक्त तीन पूर्व दिशा में क्रमशः वर्तमान हैं। पूर्व की तरफ सब से आगे दिखाई देनेवाले "मरीचि" हैं, और सबसे पश्चिम चौकोर क्षेत्र के पास जिसकी स्थिति है वह "अङ्गिरा" है, इन दोनों के मध्य में साध्वी अरुन्धती के साथ ऋषि वसिष्ठ विराजमान हैं।

इस ही प्रकार चोकोर क्षेत्र में अङ्गिरा के समीप अत्रि और इनके आगे क्रमशः पुलस्त्य, पुलह और क्रतु की स्थिति है, यह पुराणों में स्पष्ट है। इसके

क्रतव इति पौराणिका आहुः। तदनुसारेण ज्योतिर्विदोऽप्येवमाहुः। यथा बृहत्संहितायाम् ( अध्याय-१३ )—

"पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥

पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः ।
अत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी ॥"

(९) एवमन्येऽप्युत्तरस्यां दिशि मार्कण्डेयकश्यपादयः, मध्याकाशे बृहस्पतिमत्स्यादयः, अवाच्यामगस्त्यादयस्ताराविशेषा ऋषित्वेनेष्यन्ते ।

(१०) अन्यत्रापि च मत्स्यागस्त्यवसिष्ठा आपोऽपां वत्सा भृग्वत्र्यङ्गिरसो मार्कण्डेयादयो ज्योतिर्विशेषा उच्यन्ते—इति नक्षत्रविद्यायां विस्तरः ।

---

भाषाटीका

अनुसार ही ज्यौतिष शास्त्र भी मानता है, जैसा बृहत्संहिता नाम के ज्यौतिष-ग्रन्थ में कहा है कि-पूर्व दिशा में सब से आगे भगवान् मरीचि हैं, इनके समीप में ऋषि वसिष्ठ हैं, और इनके समीप अङ्गिरा हैं, अङ्गिरा के समीप अत्रि और इनके अनन्तर क्रमशः पुलस्त्य, पुलह और क्रतु वर्तमान हैं, इन सब में ऋषिप्रवर वसिष्ठ के साथ भगवती अरुन्धती सदा विराजती हैं।

( ६ ) इस ही प्रकार उत्तर दिशा में और भी मार्कण्डेय, कश्यप आदि, मध्य आकाश में बृहस्पति, मत्स्य आदि, एवं दक्षिण दिशा में अगस्त्य आदि विशिष्ट तारागण ऋषिरूप में माने जाते हैं।

(१०) अन्यान्य ग्रन्थों में भी मत्स्य, अगस्त्य, वसिष्ठ, आप, अपांवत्स, भृगु, अत्रि, अङ्गिरा और मार्कण्डेय आदि नामों से अनेक नक्षत्रों का व्यवहार है—यह नक्षत्र-विद्या के ग्रन्थ में विस्तार से बतलाया जायगा।

(११) अत्र मतम्—सूर्यरश्मिप्रतिष्ठाः सर्वे प्राणा देवाः। चन्द्रांशुप्रतिष्ठाः सर्वे प्राणाः पितरः। ऋक्षरोचनाप्रतिष्ठाः सर्वे प्राणा ऋषय इति। सेयं द्वितीया प्रवृत्तिः।

इति द्वितीया प्रवृत्तिः।

—:o:—

## अथ तृतीया प्रवृत्तिः।

(१) अथ प्राणानां देवानां भूतानां भौतिकानां चार्थानां नियतः

---

संस्कृतव्याख्या

नेदं द्वितीयविधमृषित्वं पूर्वस्मादत्यन्तं भिन्नम्, अपि तु तत्सांवाद्येवेति मतमाह-**अत्र मतम्**। तथा च प्राणानामेवात्रापि ऋषित्वमुक्तं भवति। यस्मिन् यस्मिन्नक्षत्रे यद्यदृषिप्राणस्य प्राधान्यम्, तत्तन्नक्षत्रं तत्तदृषिनाम्ना व्यवहृतमिति निरूपितं ग्रन्थकर्त्राऽन्यत्र।

इति द्वितीया प्रवृत्तिः

—:o:—

तृतीया प्रवृत्तिः

द्रष्टृत्वलक्षणं तृतीयमृषित्वं निर्वक्तुं किं नाम द्रष्टृत्वमिति व्याख्यान-

---

भाषाटीका

(११) यहाँ एक यह भी मत है कि प्राणरूप ऋषि और तारारूप ऋषि सर्वथा भिन्न नहीं हैं। वास्तव में प्राण-तत्त्व ही ऋषि है, सूर्य की किरणों में रहनेवाले संपूर्ण प्राण देव, चन्द्रमा की किरणों में रहनेवाले सब प्राण पितर और ऋक्षरूप वाले चमकते नक्षत्रों में रहनेवाले सभी प्राण ऋषि कहलाते हैं। जिस जिस नक्षत्र में जिस जिस ऋषि-प्राण की प्रधानता है, उस नक्षत्र का उस ऋषि के नाम से व्यवहार किया गया है। इसका स्पष्ट निरूपण ग्रन्थकार ने अन्यत्र किया है। इस प्रकार ऋषिशब्द के दूसरे अर्थ का व्याख्यान संक्षेप में किया गया।

—:o:—

### ऋषिशब्द का तीसरा अथ

(१) ऋषिशब्द के तीसरे प्रकार के व्याख्यान में ऋषिशब्द का अर्थ तत्त्वद्रष्टा बतलाया जाता है। इस व्याख्या से पूर्व यह जानना आवश्यक है कि विद्या, ब्रह्म और वेद ये तीनों समानार्थक-से शब्द हैं। परस्पर अर्थों में किञ्चित् मौलिक भेद रहते हुए भी व्यवहार में एक के स्थान में दूसरे का प्रयोग देखा जाता है।

कार्यकारणभावो विद्या । नियतं सत्यं याथातथ्यम्, सा विद्या, तद् ब्रह्म, स वेदः ।

(२) यद्यपि गृह्यमाणधर्मेणाऽभिनीयमाना नियतिर्ब्रह्म, गृहीतपूर्वाहितसंस्कारेणाभिनीयमाना नियतिर्विद्या, वाचाभिनीयमाना नियतिर्वेदः, इत्येवमेषां व्यवस्थितविषयत्वमिष्टम्, तथाप्येषु व्यवहारसाङ्कर्येण प्रवर्त्तन्ते प्राञ्चः । अनपेक्ष्यैव तु धर्मसंस्कारवाग्-

---

संस्कृतव्याख्या

मुपक्रमते—**अथेति** । तत्र विद्या-ब्रह्म-वेदपदानां भिन्नार्थत्वेऽपि परस्परसाङ्कर्येण व्यवहारं तावदुपपादयति—

**नियतमिति** । नियतिर्नियतम् । नियतिज्ञानं यद्यपि ब्रह्म-विद्या-वेदपदेषु समानम्, तथाप्यस्त्ययमवान्तरो भेदः, यत् कार्यकारणभावादितत्तद्धर्माणां प्रत्यक्षीकरणं ब्रह्मपदवाच्यम् । पूर्वगृहीतानां धर्माणां संस्कारजन्यं स्मृतिज्ञानं विद्या । शब्दजन्यं तज्ज्ञानं तु वेद इति । तदित्थं ज्ञानस्य सर्वत्र वाच्यत्वेऽपि जनकोपाधिकृतो भेदः । क्वचित्तु उपाधिमविवक्षय ज्ञानरूप एवार्थे शब्दा इमे पर्यायेण व्यवहृता इति भावः । विद्यावेदशब्दावत्र भावसाधनौ व्याख्यातौ ।

---

भाषाटीका

प्राण, देव, पञ्चभूत और भौतिक पदार्थों का जो नियत कार्य-कारण-भाव है अर्थात् किससे कौन उत्पन्न हुआ, किस में किस प्रकार के गुण-धर्म हैं इत्यादि सब बातों के ज्ञानको विद्या कहते हैं । जो नियत है, सत्य है और वास्तविक है वही विद्या है, वही ब्रह्म है, और वह ही वेद है ।

(२) इनमें सूक्ष्म भेद इतना है कि पदार्थों में वर्तमान नियत कार्य-कारणभाव ( गुण-धर्म ) के प्रत्यक्ष ज्ञान को ब्रह्म कहते हैं, जिन गुण-धर्मों का प्रत्यक्ष पूर्व में हो चुका हो उस ज्ञान के संस्कार से होने वाले आगे के ज्ञान को विद्या कहते हैं, और शब्द द्वारा होने वाले उस ही ज्ञान को वेद कहते हैं । इस प्रकार तीनों का मुख्यार्थ यद्यपि यथार्थ ज्ञान ही है, तथापि ज्ञान कराने के साधन भिन्न-भिन्न होने से इन में अवान्तर भेद माना जाता है । किन्तु कहीं साधन के भेद पर दृष्टि न रखते हुए—केवल ज्ञानरूप अर्थ में ही वेद, विद्या और ब्रह्म—इन तीनों शब्दों का पर्याय से प्रयोग प्राचीन आचार्यों ने किया

विषयत्वमुपचरन्ति स्म पूर्वे—त्रया वेदाः, त्रयी विद्या, त्रयं ब्रह्मेति ।

(३) अपि च शब्दोपपादितं देवताविज्ञानं वेदः, देवताविज्ञानोपपादकशब्दो मन्त्रः, इत्येवं वेदमन्त्रशब्दयोर्व्यवस्थितविषयत्वेऽपि संज्ञासंज्ञिनोस्तादात्म्योपचारात् तयोः संकीर्णो व्यवहारः

"प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता" ॥

इत्यत्र शब्दाभिप्रायेण वेदशब्दप्रयोगात्,

---

संस्कृतव्याख्या

करणसाधनौ तु तादृशज्ञानजनके संस्कारे, शब्दे चापि व्यवह्रियेते इत्यप्यनुसन्धेयम् ।

अपि च । न केवलं ब्रह्मवेदविद्यापदानां पृथगर्थत्वेऽपि व्यवहारसाङ्कर्यम्, अपि तु वेद-मन्त्रशब्दयोरपि पृथगर्थयोर्व्यवहारसाङ्कर्यमेवेति उपपादयति—

---

भाषाटीका

है । जैसा कि तीन वेद, तीन विद्या और तीन ब्रह्म ऐसा व्यवहार बहुधा प्राचीन ग्रन्थों में देखा जाता है ।

(३) इन तीनों शब्दों का ही समानार्थ में व्यवहार हुआ हो—ऐसा नहीं है, अपि तु वेद और मन्त्र इन शब्दों में मौलिक भेद रहने पर भी दोनों का समानार्थ में व्यवहार हुआ है । जैसा कि शब्द द्वारा जाने गये देवता-विज्ञान का नाम वेद और देवता-विज्ञान को बतानेवाले शब्दों का नाम मन्त्र है—इस प्रकार वेद और मन्त्र शब्दमें अर्थभेद रहने पर भी संज्ञा और संज्ञी (नाम-नामधारी) के अभेद-व्यवहार की तरह इनका भी समानार्थ में व्यवहार होता है । जैसा कि—

"प्रत्यक्ष अथवा अनुमान से जो तत्त्व न जाना जा सके—वह वेद से जाना जाता है यही वेद का वेदपन है"

यहाँ वेद शब्द अपने मुख्य अर्थ ज्ञान में प्रयुक्त न होकर केवल शब्द के अभिप्राय से प्रयुक्त हुआ है । इस ही तरह—

"ऋषयो मन्त्रद्रष्टारः", "साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् प्रादुः" ( निरु. अ. १ ) इत्यादिषु विद्याभिप्रायेण मन्त्रशब्दप्रयोगाच्च ।

(४) अथवा भवति हि—शब्दस्तदर्थश्चान्योऽन्यव्यासक्तौ मन्त्रशब्दप्रदेशः । ततश्चेह दैवतविज्ञानं देवताशीश्च मन्त्रपदार्थान्तर्भूते । व्यासज्यवृत्त्या च समुदाये दृष्टाः शब्दा अवयवेऽपि प्रवर्तन्ते, यथा हि सीमापरिच्छिन्नप्रदेशानुगतशालासमुदायस्थजनसमुदाये निरूढोऽयं ग्रामशब्दोऽस्ति, प्रदेशे च प्रयुज्यते, शालासमुदाये च, जनसमुदाये च। तथा देशविशेषे रूढः पञ्चालशब्दस्तदवयवेऽपि प्रयुज्यते—पूर्वे पञ्चालाः, उत्तरे

---

संस्कृतव्याख्या

ग्रामशब्दोऽस्ति । "ग्रामशब्दोऽयं बह्वर्थः" (महाभाष्ये आ. ५-सू. २१) इति महाभाष्यस्याप्ययमेवाभिप्रायः । संभवत्यनुगतार्थत्वे विशृङ्खलनानार्थताया गौरवग्रस्तायाः स्वीकारानर्हत्वात् । पृथगर्थताया उदाहरणानि तु–'ग्रामो लब्धः'

---

भाषाटीका

"ऋषि मन्त्रद्रष्टा होता है", "पहिले सब वस्तु धर्मों का प्रत्यक्ष ज्ञान प्राप्त करनेवाले ऋषि हुए, उन साक्षात् द्रष्टा ऋषियों ने उन मनुष्यों को, जो वस्तु तत्त्व का प्रत्यक्ष करने में असमर्थ थे—उपदेश द्वारा मन्त्र दिये" इन निरुक्त के वाक्यों में मन्त्र अपने मुख्य अर्थ शब्द को छोड़कर, देवता-विज्ञान रूप अर्थ में प्रयुक्त हुआ है। क्योंकि ऋषि वस्तु-तत्त्व के द्रष्टा हैं और वह तत्त्वज्ञान ही वे दूसरों को देते हैं।

(४) अथवा यों समझिये कि शब्द और अर्थ सम्मिलित ही मन्त्र-शब्द का अर्थ है इसलिये यहाँ मन्त्रशब्द से देवता के विज्ञान और शब्द दोनों का ग्रहण होता है। लोक में भी समुदायवाचक शब्दों का अवयवार्थ में प्रयोग होता है, जैसे एक सीमा में घिरे हुए घरों के रहनेवाला जनसमूह ग्रामशब्द का मुख्य अर्थ है, किन्तु इसके अन्तर्गत अवयवरूप-प्रान्त (भूभाग) में, गृह-समुदाय में अथवा केवल जनसमुदायमात्र में भी ग्रामशब्द प्रयुक्त होताहै। जैसा कि 'ग्राम में प्रविष्ट हो गया' इस वाक्य में सीमाबद्ध भूभाग ही ग्रामशब्द का अर्थ है। 'गाँव जल गया' इस वाक्य में घरों का समूह ही ग्रामशब्द का अर्थ है, और 'सब गाँव आगया' इस वाक्य में

पञ्चाला इति। एवमयं शब्दोपदिष्टविज्ञाने निरूढो मन्त्रशब्दः शब्देऽपि प्रयुज्यते, विज्ञाने च।

(५) मन्त्रसमानार्थो ब्रह्मशब्दोऽप्यस्ति तस्याप्यत एव द्वैभाव्यमाचष्टे—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ इति ॥

शब्दात्मकब्रह्मवेद्यमेवैतद् विज्ञानात्मकं परं ब्रह्म। तदेवं वाक्यविद्यैतदुभयव्यूहे निरूढोऽयं ब्रह्मशब्दश्च मन्त्रशब्दश्चेति सिद्धम्। तथा च ब्रह्मैव वेदः, ब्रह्मणो वा विद्या वेदः।

---

संस्कृतव्याख्या

'ग्राम आगतः' 'ग्रामे प्रविष्टः' 'ग्रामो दग्धः'—इत्यादीनि महाभाष्य एव स्फुटानि।

तदित्थं वेदस्वरूपं संक्षेपतो निर्दिश्य वेदशब्दार्थान्तर्गतानि विज्ञानानि संक्षेपेण निर्दिशति—**तथा च ब्रह्मैव वेदः।**

---

भाषाटीका

जनसमुदाय ही ग्राम शब्द का अर्थ है। इस ही तरह एक प्रदेश-विशेष में प्रसिद्ध 'पञ्चाल' शब्द अपने अवयव 'पूर्व-पञ्चाल' 'उत्तर-पञ्चाल' आदि भागों में भी व्यवहृत होता है। ठीक ऐसे ही शब्द के द्वारा प्रतिपादित देवता-विज्ञानरूप अर्थ में प्रसिद्ध मन्त्र-शब्द केवल शब्द में भी प्रयुक्त होता है और केवल विज्ञान अर्थ में भी।

(५) मन्त्र के समान अर्थ वाला ब्रह्मशब्द भी है, जो कि इस ही तरह उभयार्थक है।

"शब्दब्रह्म और परब्रह्म ये दोनों ब्रह्म जानने योग्य हैं, इनमें शब्दब्रह्म का ज्ञान हो जाने पर, परब्रह्म का ज्ञान होता है"। भाव यह है कि शब्दब्रह्म द्वारा जानने योग्य वस्तु विज्ञानरूप परब्रह्म ही है।

इस प्रकार सिद्ध हुआ कि मन्त्र और ब्रह्म दोनों शब्द समानरूप से वाक्य और देवता-विज्ञानरूप संमिलित अर्थ में व्यवहृत होते हैं। यह भी सिद्ध हुआ कि ब्रह्म ही वेद है, अथवा ब्रह्मविद्या का नाम वेद है।

(६) ब्रह्म हि यज्ञमात्मानं कुर्वत् तेनैव रूपेणेदं सर्वमभवच्च, भवति च, भविष्यति च। यज्ञ एवेदं समभवच, भूतं च, भविष्यच्च।

(७) तदिदं यज्ञविज्ञानं वेदः। यज्ञोऽयमुच्यते धर्मः। "चोदना-लक्षणोऽर्थो धर्मः" इति जैमिनिना यज्ञस्य धर्मत्वप्रतिपादनात्। तस्माद्धर्मविज्ञानं वेदः।

यज्ञशरीरे च निहिताः सर्वे देवाः तेन यज्ञविज्ञानादेते सर्वे देवा विज्ञाता भवन्ति। तस्माद्दैवतविज्ञानं वेदः।

(८) सर्वेषां च देवानां प्रधानः प्रजापतिः। प्रजापतिप्रभ-

---

संस्कृतव्याख्या

**यज्ञमात्मानं कुर्वत्।** 'द्रव्य-देवता-त्यागा यागः'-इति मीमांसकानां परिभाषा। त्रयमपीदं ब्रह्मण एव विवर्त्त इति भागवतादौ स्पष्टम्। अत्र प्रकरणे निर्दिष्टानां यज्ञ-देव-प्रजापत्यादिशब्दानामर्था अग्रे सृष्टिप्रक्रियायां मूल एव प्रपञ्चिताः स्युरिति नात्र विस्तरः क्रियते।

---

भाषाटीका

(६) वह ब्रह्म स्वयं अपने आपको यज्ञरूप बनाता हुआ, सब कुछ बना है, सब कुछ बनता है, और सब कुछ बनेगा। यह जो कुछ है, यज्ञरूप ही था, यज्ञरूप ही है और यज्ञरूप ही होगा। भावार्थ यह है कि भूत, भविष्यत् और वर्तमान तीनों कालों में सब पदार्थ यज्ञरूप ही हैं। मीमांसकों ने द्रव्य, देवता और द्रव्य का त्याग तीनों संमिलित रूपमें यज्ञशब्द का अर्थ होते हैं ऐसा माना है, और ये तीनों ब्रह्म के ही रूप हैं यह भागवत आदि में स्पष्ट है।

इस प्रकरणमें आये हुए यज्ञ, देव, प्रजापति आदि शब्दों के अर्थ आगे सृष्टि-निरूपण में स्पष्ट किये जावेंगे।

(७) तब कहा जा सकता है कि यज्ञ का विज्ञान ही वेद है। यज्ञ को धर्म कहते हैं—मीमांसा में जैमिनि मुनि ने यज्ञ को धर्म कहा है, इससे धर्म-विज्ञान वेद है—यह सिद्ध हुआ। यज्ञ के शरीर (स्वरूप) में सब देवता आ जाते हैं, यज्ञ के ज्ञान से देवताओं का ज्ञान हो जाता है, अतः सिद्ध हुआ कि देवता-विज्ञान वेद है।

(८) सब देवताओं में प्रधान देवता प्रजापति हैं, और प्रजापति से ही यज्ञ की उत्पत्ति होती है, प्रजापति के आधार से ही यज्ञ स्थित है और प्रजापति में ही

वश्चायं यज्ञः, प्रजापतिप्रतिष्ठः, प्रजापतिपरायणः । स प्रजापत्य-विनाभूतो यज्ञोऽपि प्रजापतिरेव । तदेतत्प्रजापतिविद्या वेदः ।

(९) अनन्ताः प्रजापतयः । अनन्ताश्चैते यज्ञाः । तेषु सर्वेषु प्रधानः सर्वेषामात्मायं भगवान् सूर्यः । तस्मादेतत् सूर्यविज्ञानं वेदः । सूर्यस्यैव याथातथ्येन विज्ञानात् सर्वे देवाः, सर्वे यज्ञाः सर्वे प्रजापतयः सुविज्ञाता भवन्ति । तदित्थमेष सूर्यवेदश्च भवति, दैवतवेदश्च, धर्मवेदश्च, यज्ञवेदश्च, प्रजापतिवेदश्च, ब्रह्मवेदश्च ।

(१०) अथवायं साधारण्येन सर्ववेदो भवति, तस्मात् सामान्येन वेदशब्दः प्रयुज्यते । नत्वायुर्वेद-पशुवेद-वृक्षवेदादि-वदयं केनचिद् विशिष्यते ।

ततश्च पुरात्वे तं तमर्थं दृष्ट्वा दृष्ट्वा यैरिदं विज्ञानमुपदिष्टम् त एते वेदाचार्या ऋषय आख्यायन्ते ।

---

भाषाटीका

लीन होता है । यज्ञ प्रजापतिरूप ही है, अतः प्रजापति-विज्ञान वेद है—यह भी कहा जा सकता है ।

(६) ये प्रजापति अनन्त हैं, और यज्ञ भी अनन्त, इन सब में प्रधान, सब के आत्मारूप ये भगवान् सूर्य हैं, अतः वेद को सूर्य-विज्ञान भी कह सकते हैं । सूर्य के ही वास्तविक ज्ञान से सब देवता, यज्ञ और समस्त प्रजापति जान लिये जाते हैं । इस प्रकार सूर्य-वेद, दैवत-वेद, धर्म-वेद, प्रजापति-वेद और ब्रह्म-वेद आदि पृथक् पृथक् नाम से वेद का व्यवहार किया जा सकता है ।

(१०) वास्तविक विचार करने पर यही कहना होगा कि यह 'सर्ववेद' है । सब ही ज्ञान इस में निहित हैं । इसमें कोई एक विशेषण लगाना व्यर्थ है । केवल 'वेद' शब्द से सब का बोध हो जाता है—इसलिये सामान्यतः केवल वेद-शब्द का ही व्यवहार सब वेदों के लिये होता है । आयुर्वेद, वृक्षवेद, पशुवेद आदि की भांति किसी विशेषण के लगाने की यहाँ आवश्यकता नहीं होती ।

इस प्रकार के इस सर्वविद्या-भण्डार वेद को जिनने प्रकट किया अर्थात्—सृष्टि की आरम्भावस्था में तपस्या द्वारा ईश्वरानुग्रह प्राप्त कर, सूक्ष्म, व्यवहित, विप्रकृष्ट प्रत्येक पदार्थ के गुण-धर्मों को प्रत्यक्ष देख कर, जिनने इस विज्ञान का अन्य सब को उपदेश किया है, वे ही वेद के आचार्य ऋषि कहे जाते हैं ।

(११) तथा चैषामृषीणां शब्दरचनाकर्तृत्वाभिप्रायेण मन्त्रकर्तृत्वम्, देवतादिविज्ञानसाक्षात्कर्तृत्वाभिप्रायेण तु मन्त्रद्रष्टृत्वमित्युभयं समञ्जसं भवति।

---

संस्कृतव्याख्या

तथा चैषामृषीणाम् । तपसा संपादितेनेश्वरानुग्रहेण सामान्यजीवपरोक्षानपि स्वर्गापूर्वदेवतादीन् प्रत्यक्षीकृत्य तद्वाचकाः शब्दाः स्वयमृषिभिरुच्चारिताः, त एव मन्त्रा इति ग्रन्थकर्तुरभिप्रायः ।

न च स्वर्गापूर्वदेवतादीनां स्वभावतः परोक्षाणां कथं प्रत्यक्षसम्भव इति शङ्कनीयम्, स्वर्गादिषु ईश्वरप्रत्यक्षविषयतायाः सर्वैरीश्वरवादिभिरभ्युपगतत्वात्, ईश्वरप्रेरणयैव ऋषीणां तत्प्रत्यक्षस्येहाप्युच्यमानत्वात् ।

योगशास्त्रेऽपि सूक्ष्म-व्यवहित-विप्रकृष्टविषयाणां योगजशक्त्या प्रत्यक्ष-

---

भाषाटीका

(११) इन महर्षियों ने वेदमन्त्रों की शब्द-रचना की है—इसलिये ये मन्त्रों के कर्ता, तथा इनमें निहित मूलभूत विज्ञान का ईश्वरानुग्रह से दर्शन करने के कारण द्रष्टा माने जाते हैं। सिद्ध हुआ कि ये वेद के आचार्य ऋषिगण मन्त्रकर्ता भी हैं और मन्त्रद्रष्टा भी। दोनों बातें इनमें उपपन्न हैं।

ग्रन्थकार का आशय यह है कि तपस्या द्वारा परमेश्वर का अनुग्रह प्राप्त करके इन महर्षियों ने, उन स्वर्ग, अपूर्व और देवता आदि का एवं सब जगत् के मूलतत्त्व का प्रत्यक्ष किया, जिनका प्रत्यक्ष सामान्य मनुष्य नहीं कर सकते। अनन्तर उन तत्त्वों का अपने शब्दों द्वारा उपदेश किया। जिन शब्दों से उनका वर्णन किया है-वह शब्दसमुदाय ही मन्त्र हैं।

स्वर्ग आदि विषय तो स्वभावतः परोक्ष हैं-उनका प्रत्यक्ष हो जाना सर्वथा असंभव है, जिन वस्तुओं को वर्तमान युग के हम लोग नहीं देख सकते, उनको पूर्वकाल में किसी ने देखा था-यह कैसे मान लें-यह सन्देह करना उचित नहीं है, क्योंकि स्वर्ग आदि सब सूक्ष्म तत्त्वों का ईश्वर को स्वयं प्रत्यक्ष होता है—इस तथ्य को सभी ईश्वरवादियों ने स्वीकार किया है और इन महर्षियों को भी ईश्वर के अनुग्रह से ही उन सब विषयों का प्रत्यक्ष हुआ यह हम भी मानते हैं, फिर इसमें विरोध क्यों ?

योगशास्त्रों में लिखा है कि—अतिसूक्ष्म वस्तु अथवा किसी दूसरी चीज से

संस्कृतव्याख्या

विषयतोपपाद्यते । "प्रवृत्त्या लोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्" ( यो. सू. ३ पा. १ २० ) "प्रातिभाद्वा सर्वम्" ( यो. सू. ३।३२ ) इत्यादिसूत्रैः । नैयायिका अपि च योगजं प्रत्यक्षं लौकिकप्रत्यक्षाद् भिन्नमेवातिष्ठन्ते अलौकिकप्रत्यासत्तिनिरूपणे ।

ननु सूक्ष्मभूतधर्मप्रत्यक्षे सति तपोयोगादौ प्रवृत्तिरुपपद्यते, अन्यथा तपोयोगादिक्रियायास्तादृशसामर्थ्यकारणताग्रहणासंभवात्, सत्यां च तपोयोगादिसिद्धौ सूक्ष्मभूतधर्मप्रत्यक्षसंभव इत्यन्योन्याश्रयप्रसंग इति चेत् । सत्यम् । पूर्वकल्पानुभूतकार्यकारणभावस्मरणेन कल्पादावुद्भूतानामृषीणां प्रवृत्तिसंभवात् ।

"यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ।"

( मनु.अ.१ श्लोक ३० )

इत्यादिभिः पूर्वकल्पस्मृत्यैव तत्तत्कार्यप्रवृत्तेः स्मृतिपुराणादिषूपपादितत्वात् । अतएव सनत्कुमाराणां जन्मसिद्धं ज्ञानं पुराणेषूच्यमानमुपपद्यते,

---

भाषाटीका

ढकी हुई वस्तु, एवं सैकड़ों कोस परे की वस्तु का भी प्रत्यक्ष योगी अपनी योगशक्ति से कर लेता है । नैयायिकों ने भी अलौकिक प्रत्यक्ष के निरूपण में योगज प्रत्यक्ष को लौकिक-प्रत्यक्ष से विलक्षण माना है ।

यहाँ यह शङ्का हो सकती है कि योग वा तप के द्वारा सूक्ष्मभूतों के धर्म का प्रत्यक्ष होता है–यह सिद्धान्त 'अन्योन्याश्रय'-दोष से दूषित है–क्योंकि योग, तप आदि के द्वारा सिद्धि मिलती है इस सिद्धान्त को भी आरम्भ के लोगों ने पहिले कैसे समझा ? और बिना समझे उन कामों में उनकी प्रवृत्ति कैसे हुई ? सूक्ष्म पदार्थों के प्रत्यक्ष के अनन्तर ही—तपस्या या योग आदि में मनुष्य की प्रवृत्ति हो सकती है—और तपस्या अथवा योग के बिना सूक्ष्म धर्मों का प्रत्यक्ष असंभव है । यही अन्योन्याश्रय कहलाता है, जो कि महान् दोष है ।

किन्तु इस प्रकार की शंका करने वालों को समझना चाहिये कि पूर्वकल्प में जिन महर्षियों को गुणधर्मों का प्रत्यक्ष हो चुका था, वह पूर्वकल्पानुभूत ज्ञान का संस्कार स्मृतिरूप में रहता हुआ, दूसरे कल्प में भी उनकी तपस्या आदि कार्यों में प्रवृत्ति करा देता है । मनुस्मृति में भी कहा है कि–एक ऋतु के अनन्तर जो दूसरी ऋतु आरम्भ होती है—उस आरम्भ होने वाली ऋतु की सब रचना ठीक पूर्व वर्ष की रचना के समान ही होती है । यही क्रम मनुष्य वर्ग में भी है, अर्थात् पूर्वकल्प में

(१२) तत्र—

“यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण ।
तां दैवीं वाचं हविषा यजामहे, सा नो दधातु सुकृतस्य लोके ।”
इति ( तैत्तिरीयब्राह्मणे २-७-७ )

“नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो
मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादु-
र्माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादाम् ।”
( तैत्तिरीयारण्यके ४-१-१ )

---

संस्कृतव्याख्या

पूर्वकल्पकृताभ्यासेनैव तत्संभवात् । “अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्, तद् ऋषीणामृषित्वम्” ( तैत्ति. आ. २।९ ) इत्याद्या श्रुतिश्च वेदाधिगमात्पूर्वमेव ऋषीणां तपःप्रवृत्तिं स्पष्टं श्रावयतीति नात्र विवदितव्यं श्रुतिश्रद्धालुभिः ।

**यामृषयो०** । अत्र मन्त्रपदं वेदमन्त्रार्थपरमेव श्रीमाधवाचार्यैर्व्याख्या-

---

भाषाटीका

किये गये कर्मों के संस्कार ही मनुष्य को दूसरे कल्प में उन ही कर्मों में प्रवृत्त कर देते हैं। यही बात पुराणों में भी प्रतिपादित है। सनत्कुमारों को जन्म से ही ज्ञानोदय था—इत्यादि पुराणोक्त उपाख्यान भी उपर्युक्त सिद्धान्त पर ही अवलम्बित है। 'अजान् ह वै' इत्यादि श्रुति से भी स्पष्ट होता है कि—महर्षिगण आरम्भ से ही तपस्या में प्रवृत्त थे और तपस्या के फलस्वरूप ही उनके हृदय में वेदों का आविर्भाव हुआ था। इसलिये श्रुति पर श्रद्धा रखनेवालों को तो ऐसी शङ्का का अवसर ही नहीं आना चाहिये।

(१२) अस्तु, पूर्व कहा जा चुका है कि ऋषि मन्त्रकर्ता भी कहे जाते हैं और मन्त्रद्रष्टा भी। 'यामृषयः' और 'नम ऋषिभ्यः' आदि श्रुतियों में स्पष्ट ही ऋषियों को मन्त्रों का कर्त्ता कहा है—

'यामृषयः' इत्यादि श्रुति का अर्थ यह है कि—मन्त्रों के बनानेवाले, मन को रोकने में समर्थ, देवभाव को प्राप्त ऋषियों ने अपने तप और श्रम से जिस दैवी वाणीको प्रकट किया, उस दैवी वाणी का हम हवि के द्वारा यजन ( पूजन ) करते हैं, वह हमें पुण्यकर्ताओं के लोक में ले जावे।

इत्यादिश्रुतिषु मन्त्रकृत्त्वमृषीणां श्रूयते ।

(१३) देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचानाः, तदीया हीयं वाक् ।

(१४) युक्तं चैतत्, न ह्येषा वाक्यरचना स्वतः संभवति । शरीरबुद्धीन्द्रियोपपाद्यत्वात् ।

---

संस्कृतव्याख्या

तमिति नार्थान्तरकल्पनावकाशः । तथैव गोपथश्रुतावपि 'इमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः स संस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः" । ( गोपथब्रा. २ प्रपा. १० क. )

**देवा इह पारोवर्यविदः** । तथा च शतपथश्रुतौ "द्वया वै देवाः, देवा अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः" ( शत. २।२।२।६ ) तेन विशिष्टविदुषां मनुष्याणामपि देवशब्देन व्यवहारः सिद्ध्यति ।

**न ह्येषा वाक्यरचना** । ननु वैखर्यामेव वाचि शरीरेन्द्रियादिप्रयत्नोऽपेक्ष्यते, परा, पश्यन्ती, मध्यमेति त्रिविधास्तु वाचो न शरीरेन्द्रियप्रयत्नमपेक्षन्त इति ता एव वेदपदवाच्या भवन्त्वपौरुषेय्यः ।

---

भाषाटीका

दूसरी 'नम ऋषिभ्यः' आदि 'श्रुति का अर्थ है कि 'मन्त्रों के बनानेवाले मन्त्रों के स्वामी ऋषियों को मेरा प्रणाम है। मत्रों के स्वामी ऋषि मुझे अपने से दूर न करें—अर्थात् मुझे अपना ज्ञान दें और मैं भी उन मन्त्रों के बनानेवाले और मन्त्रों के स्वामी ऋषियों को दूर न करूं—अर्थात् उनका स्मरण करता हुआ उनसे सदा ज्ञान लेता रहूँ ।

'गोपथ ब्राह्मण' में भी कल्प, रहस्य, ब्राह्मण आदि तेरह अङ्गों ( अवयवों ) सहित वेदों को निर्मित कह कर उनकी उत्पत्ति स्पष्ट की है, इससे भी शब्दराशि वेदों की अपौरुषेयता सिद्ध नहीं होती।

(१३) यहाँ पहली 'यामृषयः' आदि श्रुति में जो वेदवाणी को 'दैवी वाक्' कहा गया है, उसका भी तात्पर्य यही है कि तत्त्वों का पारावार देखनेवाले, वेदों का अध्ययन, अध्यापन करनेवाले विशिष्ट विद्वान् भी 'देव' कहे जाते हैं—उनकी वाणी होने के कारण यह वेदवाणी 'दैवी वाक्' है ।

(१४) यही मत युक्तियुक्त भी है। वेद बिना पुरुष-व्यापार के ही बन गये—ऐसा कहनेवाले 'अपौरुषेय-वादियों' का मत युक्तियुक्त नहीं हो सकता। क्योंकि वाक्य-रचना शरीर, बुद्धि, और इन्द्रिय के व्यापार से ही होती हुई देखी जाती है, वह बिना पुरुष-व्यापार के स्वयं नहीं हो सकती ।

संस्कृतव्याख्या

किं च दैवतादिविज्ञानमीश्वरानुग्रहेण ऋषीणां बुद्धौ प्रादुर्भूतमिति भवद्भिमतेऽपि—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते । (वाक्यपदीय)

इति अनुभवसिद्धाभियुक्तवचनाद् विज्ञानबोधकास्ते शब्दा अपि ऋषीणां बुद्धौ प्रादुर्भूताः स्युः, ते च न तत्तदृषिप्रयत्नसाध्या इत्यपौरुषेया एव एव तैः प्रकटिता मन्त्रादिरूपेणेदानीमप्युपलभ्यन्त इति ग्रन्थरूपाणामपि वेदानां कृतकत्वं न विचारसहं भवतीति चेत्सत्यम् ।

वैखर्या वाचा निबद्धानां बिल्म[1]भूतानामेव वेदानां पौरुषेयत्वापौरुषेयत्वविवादविषयता, न तु परा, पश्यन्ती वा केनापि पौरुषेयी वक्तुं शक्या । परायाः स्वरूपज्योतीरूपत्वात्, पश्यन्तीस्वरूपसंघटनेऽपि च पुरुषप्रयत्नस्य नितान्तमस्पर्शात् । तदेतद् ग्रन्थकृतैव जगद्गुरुवैभवे ऐतिहासिकसृष्टिविभागप्रकरणे वेदस्य पौरुषेयापौरुषेयताविचारे स्पष्टमुक्तम्—

---

भाषाटीका

उपर्युक्त सन्दर्भों से ज्ञात हुआ कि मन्त्रकर्त्ता ऋषि ही थे—क्योंकि इस प्रकार की एक क्रमबद्ध वाक्यरचना अपने आप ही बिना किसी पुरुष-प्रयत्न के हो सके, यह संभव नहीं । शब्दरचना शरीर, बुद्धि और इन्द्रिय के द्वारा ही की जा सकती है, वह अपौरुषेय नहीं हो सकती ।

[यहाँ यह शङ्का हो सकती है कि शास्त्र में वाणी के चार भेद माने गये हैं—परा, पश्यन्ती, मध्यमा और वैखरी । परावाणी आत्मस्वरूप वा ब्रह्मस्वरूप है । पश्यन्ती में शब्द और अर्थ एकरूप में मिले रहते हैं । जो मन-मन में ही शब्दों द्वारा विचार होता रहता है, उसे मध्यमा कहते हैं, और जो बोली जाती है, जिसे दूसरे लोग भी सुन सकते हैं—वह वैखरी है । इनमें वैखरी में मनुष्य के प्रयत्न की आवश्यकता स्पष्ट है । मध्यमा भी बुद्धिप्रेरणा से होने के कारण 'पौरुषेयी' कहला सकती है । किन्तु परा और पश्यन्ती में पुरुष का कोई प्रयत्न नहीं होता, इसलिये सब ही वाणी पुरुष-प्रयत्न-साध्य नहीं कही जा सकती । तब पश्यन्ती वाक् में स्थित वेदों को अपौरुषेय कहने में क्या आपत्ति है ।

---

[1] पश्यन्त्याद्यासु वाक्षु भासितो योऽर्थो वैखर्या प्रकटीक्रियते स एव बिल्मपदेनोच्यते, वैखर्यामेव वर्णभेदस्योदितत्वात् । तदुक्तं निरुक्ते "बिल्मं भिल्मं भासनमितिवा" (निरु-१-४) भेदेन ज्ञानं स्पष्टं प्रतिभासनं वा बिल्ममित्यर्थः ।

संस्कृतव्याख्या

"आसां पराऽस्तीयमपौरुषेयी त्रैलोक्यविभ्वी पुरुषेऽपि नित्या ।
अन्यास्तु यत्नात् पुरुषस्य साध्यास्तिस्रस्ततरता इह पौरुषेय्यः ।८।"

"इच्छावशाद् वायुगतः प्रयत्नो यः पूरुषस्यासनि वा पुरो वा ।
वर्णत्मवीचिः श्रुतिमेत्य तस्माच्छब्दो भवेद्गीरिति पौरुषेयी ।९।"

अत्र यत्तिसृणां वाचां पौरुषेयीत्वमुक्तम्, तन्मतान्तरपरतया नेयम् । मातृकास्तुतिप्रभृतिषु तन्त्रग्रन्थेषु तु पश्यन्त्यपि न पुरुषप्रयत्नापेक्षा, तत्र शब्दार्थावविभक्तौ तिष्ठतः, आत्मसमीहारूपा च सा । तदन्वात्मनियुक्तेन मनसा हृदये मध्यमा समुत्पाद्यते—यत्र शब्दार्थयोर्विभागो भवति, तत्र वर्त्तमानाः शब्दा अपि बुद्धेरेव भागाः, न तु वागिन्द्रियनिष्पाद्याः । सा च, वैखरी च पौरुषेयी शक्यते वक्तुम् । तदेतन्मुख्यं मतमपि जगद्गुरुवैभवे उक्तश्लोकटिप्पण्यां स्पष्टीकृतम् । 'न सोऽस्ति प्रत्ययो लोके' इति सिद्धान्तोऽपि पश्यन्तीमेवाभिलक्ष्य बोद्धव्यः, तत्र शब्दार्थयोरविभक्तत्वात् । विभक्तयोस्तु शब्दार्थयोः पूर्वं विशुद्धार्थज्ञानम्, तदनु शब्दस्मरणमिति न्यायदर्शनस्य प्रत्यक्षलक्षणसूत्रभाष्ये वात्स्यायनेन, शब्दार्थप्रविभागसंयमसूत्रभाष्ये च योगसूत्रभाष्यकृता स्पष्टमुद्घुष्टम् । ततश्च परस्यां वाचि पश्यन्त्यां वा निहितानां वेदानाम-

---

भाषाटीका

इसका उत्तर है कि उन परा पश्यन्ती वाक् के सम्बन्ध में यहाँ विचार नहीं किया जा रहा है । वे तो सर्वथा पुरुष-प्रयत्न-साध्य नहीं हैं । किन्तु इनसे आगे की जो वैखरी रूप वाक् है—यह शरीर और इन्द्रिय आदि की अपेक्षा रखती है । इसलिये वैखरी वाक् में स्थित वेदों पर ही पौरुषेयता वा अपौरुषेयता का विचार किया जाता है, और उनको ही यहाँ पौरुषेय कहा गया है । यह बात ग्रन्थकार ने 'जगद्गुरुवैभव' में स्पष्ट कर दी है । ]

[ पुनः शङ्का होती है कि 'ईश्वर के अनुग्रह से ऋषियों की बुद्धि में वेदों का आविर्भाव हुआ' यह आप मानते हैं तो आपके मत में भी यह तो स्वीकार करना ही होगा कि कोई भी ज्ञान ऐसा नहीं है—जो विना शब्द के हो सके—संपूर्ण ज्ञान शब्द-रूप सूत्र में प्रोत ( बिधा ) रहता है—इस अनुभवी विद्वानों के मतानुसार—ऋषियों की बुद्धि में देवता विज्ञान के प्रादुर्भाव के साथ ही-उस विज्ञान की वाचक शब्दावली भी ईश्वरकृपा से अवश्य प्राभूत हुई होगी । यह शब्दावली ईश्वर की ही देन थी—ऋषियों के अपने प्रयत्न से उत्पन्न नहीं हुई थी, यह मानना ही होगा । वही शब्दावली ऋषियों ने प्रकट की । बस, ऋषियों के द्वारा प्राप्त हुई उस शब्दों की

संस्कृतव्याख्या

पौरुषेयत्वे न विवादावसरः कस्यापि। मध्यमायां वैखर्यां वा स्थितानां तु तेषां पौरुषेयत्वमत्र साध्यते – इति सुसूक्ष्ममालोच्यम्।

अथ विभक्तयोरपि शब्दार्थयोरर्थस्य पूर्वं निर्विकल्पकं ज्ञानं भवतु नाम न्याय-योगभाष्यकृतोरभिमतम्, सविकल्पके तु ज्ञानेऽवश्यं शब्दो व्याप्रियत एवेत्यनुभवसिद्धम्। शब्दार्थसम्बन्धमविदुषा बालजडोन्मत्तादीनां ज्ञानं निर्विकल्पकमेव, तत्रापि वा सामान्यशब्दाः केचन व्याप्रियन्त एवेति शिष्टसंमतः पन्थाः। न च ऋषीणां ज्ञानं बालमूकजडादिसदृशम्, अपि तु सविकल्पकमेव तत्, निर्विकल्पकस्य व्यवहारायोग्यत्वात्। ततश्च मध्यमायामपि वाचितत्तेषामृषीणां दैवतादिविज्ञानेनेश्वरप्रत्तेन सहेश्वरप्रत्ता एव शब्दा आविर्भूता इति मन्तव्यं स्यात्, त एव शब्दा वैखर्यां तैः प्रकटीकृता इति न भवति तावतापि पौरुषेयत्वमिति चेत्। तत्रोच्यते। समाहितैर्वेदा ऋषिभिर्दृष्टा इति श्रूयते स्मर्यते च। समाधौ च निर्विकल्पकमेव ज्ञानं भवतीति न तत्र शब्दानुवेधप्रत्याशा। अथ सविकल्पके समाधावेव वेदप्रादुर्भावः, न तत्र निर्विकल्पकं ज्ञानमिति चेत्, मन्यतां कथंचन मध्यमायामपि ऋषीणां तत्तद्विज्ञानसहकृतशब्दप्रादुर्भावः, तदनु तु त एव शब्दास्तैर्वैखर्यां प्रकटीकृताः,

---

भाषाटीका

आनुपूर्वी को ही आज हम वेदों के रूप में प्राप्त कर रहे हैं। इसलिये वेद पौरुषेय नहीं है—ईश्वरकृत ही हो सकता है।

इस शङ्का का उत्तर है कि यह मत (बिना शब्द के अर्थज्ञान न होने का) पश्यन्ती वाणी के संबन्ध में ही ठीक लगता है। कहा जा चुका है कि परा वाक् केवल ज्योति रूप है और पश्यन्ती शब्द और अर्थ की अविभक्त अवस्था है इसलिये पश्यन्ती में बिना शब्द के अर्थ नहीं रहता, किन्तु मध्यमा वाक् में आकर शब्द और अर्थ का जब विभाग हो जाता है वहाँ पहले अर्थ का ज्ञान होता है-उसके अनन्तर शब्द का स्मरण होता है यह बात न्यायभाष्य और योगभाष्य दोनों में स्पष्ट मानी गई है। ऐसा न मानोगे तो जिन्हें शब्द और अर्थ का संबन्धज्ञान नहीं-उन बालक, मूक, उन्मत्त वा जड़ पुरुषों को अर्थ का ज्ञान भी नहीं होता है—ऐसा मानना पड़ेगा, किन्तु ऐसा मानना अनुभव के विरुद्ध है, अर्थज्ञान अत्यन्त बालकों को भी होता है, शब्द न जानने से उसका स्मरण उन्हें नहीं होता।

कदाचित् यह कहो कि बालकों का ज्ञान 'निर्विकल्पक' है, वह व्यवहारयोग्य नहीं, तो यहाँ भी कहा जा सकता है कि ऋषियों को समाधि-दशा में वेदज्ञान की प्राप्ति होती है, और समाधि-दशा का ज्ञान निर्विकल्पक ही शास्त्रों में माना गया है—इसलिये वहाँ भी शब्द व्यापार नहीं संभव होता। यदि कहो कि समाधि भी दो प्रकार की होती है—निर्विकल्पक और

संस्कृतव्याख्या

तद्विज्ञानं परिशील्य स्वाभिप्रायेण स्वीया वा शब्दा मन्त्रादिरूपेण निबद्धा इति पुनरपि भवति विवादस्थानम् । वर्णनित्यतावादेन पदस्फोट-वाक्य-स्फोटसाधनेनापि वा नैष विवादः शमयितुं शक्यः । वर्णानां नित्यत्वेऽपि तदानुपूर्वीघटनायां पुरुषप्रयत्नापेक्षणात् । वाक्यस्फोटेऽपि तदभिव्यञ्जकप्रथम-ध्वनिकर्तुरेव तत्तन्निबन्धग्रन्थादिकर्तृताया अभ्युपगन्तुमावश्यकत्वात् । अन्यथा रघुवंशकाव्यादीनामप्यपौरुषेयत्वव्यवहारप्रसक्तेर्दुष्परिहरत्वात् । तस्मादृषीणां मनसि विज्ञानसहकारेण शब्दाः प्रादुर्भूताः, त एव च मन्त्र-ब्राह्मणरूपतामाप्ता यदि, तर्हि अपौरुषेया वेदाः । यदि तु तत्तद्विज्ञानं परिशील्य सुस्पष्टं सर्वजनबोधनायान्ये शब्दा ऋषिभिर्निबद्धाः, तदा पौरुषेया इमे शब्द-रूपा वेदा इत्येव मतभेदोऽवशिष्यते । तत्र त एव शब्दा इत्यपौरुषेयत्ववादिनां मीमांसकादीनामभिमतम् । निरुक्त-दैवतकाण्डोक्तरीत्या शपथाभिशाप-परिदेवनादिश्रवणाद्, विपक्षप्रतीकाराशंसाश्रवणाद्, ब्राह्मणे परकृति-पुरा-कल्पश्रवणाद्, अग्रे दर्शयिष्यमाणशब्दविवरणपरामर्शाच्च स्वीया एव शब्दा ऋषिभिर्निबद्धा इत्येतद्ग्रन्थकृतां मतम् । अत्र स्वमते प्राक्तनशिष्ट संमतिं दर्शयितुमाह—

---

भाषाटीका

सविकल्पक । सविकल्पक समाधि में ही वेदों का प्रादुर्भाव हुआ है, इसलिये यह ज्ञान सविकल्पक ही था और उसमें शब्द भी अवश्य प्रकट हुए थे, वे शब्द 'मध्यमा' वाक् में थे—वे ही आत्मप्रेरित मन की चेष्टा से वायु द्वारा प्रकट होकर जब वैखरीरूप में आये, जो कि वाणी का चतुर्थ रूप है, हमको उपलब्ध होने लगे—इससे शब्द-संनिवेश भी ऋषियों का बनाया सिद्ध नहीं होता । इसका उत्तर है कि ऐसा मानने पर भी जो शब्द ऋषियों की बुद्धि में आये—उनको ही उनने प्रकट किया, या सब के समझने योग्य स्पष्ट बनाने को, अपने शब्दों का प्रयोग किया । यह संदेह रह ही जाता है । वहाँ इन ग्रन्थकार का मत है कि ऋषियों ने ईश्वरप्रदत्त शब्द-अर्थ का ज्ञान समाधि-दशा में प्राप्त कर उस ज्ञान को अतिस्पष्ट सर्वोपयोगी बनाने के लिये अपने शब्दों में प्रकट किया । इसीलिये वेदों में हमें अभिलाषा, याचना, विलाप, दूसरे को शाप देना, दूसरे का खण्डन करना आदि विषय भी मिलते हैं । ये ऋषियों के वाक्यों में ही संभव हो सकते हैं ।

इस विवेचन से स्पष्ट हुआ कि ईश्वरीय अनुग्रह के रूप में दिव्य ज्योतिर्मय वेद का ज्ञान, ऋषियों को अवश्य ईश्वर द्वारा ही प्राप्त होता है, किन्तु वह ही ऋषियों द्वारा उन ऋषियों के शब्दों में प्रकाशित होकर हम लोगों को प्राप्त होता है, यह ही मानना युक्ति संगत है । ]

(१५) तथा चोक्तमभियुक्तैः—"बुद्धिपूर्वा वाक्यकृतिर्वेदे" "ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम्" (वैशे. सू.) इति ।

---

संस्कृतव्याख्या

बुद्धिपूर्वा वाक्यकृतिः । व्याख्याकृतोऽत्र सूत्रेणानेन ईश्वरबुद्धिपूर्वकत्वं साधयन्तो वेदस्येश्वरकृतत्वे सूत्रसंमतिमाहुः, उत्तरस्य च सूत्रस्य 'ब्राह्मणेषु या देवादिसंज्ञा उपलभ्यन्ते, तत्संज्ञाकरणं बुद्धिमन्तमन्तरेण न संभवतीति तदपीश्वरकृतत्वे लिङ्गम् इत्यर्थमाहुः । श्रीगुरुचरणास्तु ईश्वरसाधनस्यात्र प्रकरणे प्रसक्त्यभावाद्, अपौरुषेयत्वखण्डन एव महर्षेः कणादस्य प्रवृत्तेः, पुरुषबुद्धिपूर्वकत्वमेव सूत्रेण साधितमित्यभिप्रयन्ति । उत्तरस्य च सूत्रस्य ब्राह्मणानां 'ऐतरेयम्' 'साङ्ख्यायनम्' 'तैत्तिरीयम्' 'काठकम्' इत्याद्यानि यानि नामान्युपलभ्यन्ते, तान्यपि तत्तत्पुरुषसंबन्धं साधयन्ति—इत्यर्थमाहुः । यद्यपि मन्त्रसंहितानामपि शाकलसंहिता, वाजसनेयसंहिता—इत्यादीनि नामानि लभ्यन्ते, परं तत्र सूक्तर्षीणां मन्त्रर्षीणां वा पृथक् स्मरणात् संग्रहकर्तृत्वमेव शाकल्यादीनां शक्यते व्याख्यातुम् । ब्राह्मणानि तु एकैकस्यैव ऋषेः कृतिरिति तन्नाम्ना तत्कृतत्वमेव सिद्ध्येत्—इति ब्राह्मणानां विशेषः कणादेन दर्शितः ।

भगवता पाणिनिनाऽपि च 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (अष्टा. ४।३।१०५) इति सूत्रे ब्राह्मणेषु विशिष्य पुराणप्रोक्तत्वं नवीनप्रोक्तत्वं च व्यञ्जितम् ।

---

भाषाटीका

(१५) महर्षि कणाद ने भी वेद की अपौरुषेयता का खण्डन करते हुए कहा है कि "वेदों की वाक्यरचना बुद्धिपूर्वक की गई है, वह अपौरुषेय नहीं हो सकती" और "ब्राह्मणों की जो 'ऐतरेय ब्राह्मण' 'तैत्तिरीय ब्राह्मण' 'वाजसनेय ब्राह्मण' आदि संज्ञाएं हैं इनसे भी सद्ध है कि ये ब्राह्मण-श्रुतियाँ ऐतरेय, तित्तिरि, वाजसनि आदि ऋषियों की रचनाएँ हैं।"

[ यहाँ यद्यपि आधुनिक नैयायिक-कणाद के उक्त दोनों सूत्रों को वेदों के ईश्वर-कर्तृत्व पर लगाते हैं। उनका अर्थ है कि ऐसी अपूर्व वाक्य-रचना लौकिक-बुद्धिसाध्य नहीं है, अतः परम-बुद्धिनिधान सर्वज्ञ ईश्वर वेद का प्रणेता है। और ब्राह्मणों में देवता आदि की संज्ञा भी मिलती हैं। ये संज्ञाएं अर्थात् नाम रखना भी लौकिक मनुष्यों का काम नहीं है—अतः वेद-रचना ईश्वरकृत है। किन्तु उक्त सूत्रों के प्रसङ्ग में ईश्वर-सम्बन्धी कोई विचार न होने से नैयायिकों की कल्पना युक्तिसंगत प्रतीत नहीं होती। वेदों की अपौरुषेयता का खण्डन करते हुए ही महर्षि कणाद ने दोनों सूत्रों को उपस्थित किया है। अतः ग्रन्थकार ने इनका पूर्वोक्त अर्थ मानकर इनसे वेदों

तस्मात् कृतका एते वेदमन्त्राः । ये त्वतीन्द्रियार्थविज्ञानात्मका

संस्कृतव्याख्या

यत्वत्र "आख्या प्रवचनाद्" इतिसूत्रभाष्ये मीमांसाभाष्यकृता श्रीशबरस्वामिना "काठकम्' 'कालापकम्' इति संज्ञाः प्रवचनाज्जाताः, न तु विरचनाद्" इति समाहितम्, तत् "तेन प्रोक्तम्" ( अष्टा. ४।३।१०१ ) इति सूत्रभाष्ये महाभाष्यकृता पतञ्जलिमुनिना "ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते, न च तत्र प्रत्ययो दृश्यते" इत्यादिना निराकृतम् । तदग्रे च "कृते ग्रन्थे" इति सूत्रे एव काठकादिशब्दानां सिद्धिं प्रदर्शयता महाभाष्यकृता "ननु चोक्तं न हि च्छन्दांसि क्रियन्ते, नित्यानि च्छन्दांसि" इति शङ्कित्वा "यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी सा अनित्या । तद्भेदाच्चैतद् भवति काठकम्, कालापकम्, मोदकम्, पैप्पलादकम्" इति समादधता एतद्ग्रन्थोक्त्यैव दिगङ्कृता स्पष्टं—यद् नित्यमर्थमुपलभ्य शब्दसमूहरूपा मन्त्राद्या ऋषिभिर्विरचिता इति ।

एतद्भाष्यग्रन्थं व्याचक्षाणः कैयटः-"महाप्रलयादिषु वर्णानुपूर्वीविनाशे, पुनरुत्पद्य ऋषयः संस्कारातिशयाद् वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः" इति स्फुटमाह । "अंशेन वेदस्य नित्यत्वं स्वीकृत्य अंशेन अनित्यत्वमाह" इति विवृण्वंश्चोद्द्योतकारो नागेशभट्टोऽपि श्रीगुरुचरणोक्तप्रक्रियायामेवानुकूलः । किं च "न कदाचिदनीदृशं जगद्" इत्यभिमन्यमानाः श्रुतं स्मृतं च सृष्टिप्रलयादि प्ररोचनार्थत्वेनाप्रमाणं कथयन्तो मीमांसकाः साधयन्तु नाम वर्णानुपूर्व्या नित्यताम्, श्रुतिपुराणाद्युक्तसृष्टिप्रलयादिक्रमे विश्वसतां तु शिष्टानां नेतोऽन्या युक्त्युपेता प्रक्रिया संभवति यत्कल्पादावाविर्भूता ऋषय एवेश्वरप्रसादेन तत्तज्ज्ञानमुपलभ्य मन्त्रादीन् विरचयन्तीति । अपि च अस्मर्यमाणकर्तृकत्वाद् अपौरुषेयत्वं शब्दरचनात्मकानां वेदानां साधयन्ति मीमांसकाः, तत्र आख्यायाः प्रवचनजन्यत्वे अङ्गीकृते अस्मर्यमाणकर्तृकत्वम्, ततश्चापौरुषेयत्वम्, सिद्धे चापौरुषेयत्वे आख्यायाः प्रवचनजन्यत्वनिश्चय इति चक्रकमपि दुरुद्धरमापततीत्यपि भाव्यम् । अथ "यत्काम ऋषिर्यस्यां देवताया-

भाषाटीका

का ऋषिप्रणीत होना ही सिद्ध किया है । महाभाष्यकार पतञ्जलि और निरुक्तकार यास्क भी वेदों की शब्दरचना को स्पष्ट अक्षरों में ऋषिकृत मानते हैं—इनके प्रमाण संस्कृतटीका में विस्तार से लिखे गये हैं । यहाँ सब का अनुवाद अनावश्यक समझ छोड़ दिया गया है । ]

**वेदाः, न चैते शक्यमुत्पादयितुमनीश्वरैः, अतीन्द्रियत्वादना-**

संस्कृतव्याख्या

मार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति" "एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति" 'तयोर्भासोः संसङ्गं दृष्ट्वेत्यमवदयत्' ( दैवतकाण्डे ) "त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिवभौ, तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं च भवति" ( अ. ४ ) "उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः-वेदं च वेदाङ्गानि च" ( अ. १ )—इत्यादि बहुशो ब्रुवन् निरुक्तकृद् भगवान् यास्कोऽपि अर्थस्य दर्शनम्, शब्दानुपूर्व्याश्च विरचनं स्फुटमभिप्रैति ।

यदि तु प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं पौरुषेयत्वम् तदभावश्चापौरुषेयत्वम्, इति अभियुक्तपरिभाषितमपौरुषेयत्वं स्वीक्रियते, तदा न कस्यापि विवादः । लौकिकप्रमाणान्तरेणार्थोपलम्भस्यैतद्ग्रन्थकृतापि स्फुटं निराकृतत्वात्, तपोयोगसमाधिभिराराधितस्येश्वरस्य प्रसादेनैव दैवतविज्ञानादिप्रतिभासस्यात्र ग्रन्थे समर्थितत्वात् । एवंविधं विरचनमपि प्रवचनमेव शक्यते वक्तुम्, अर्थांशे स्वातन्त्र्यपरिहारेण विरचनशब्दार्थस्यात्रास्वारस्यात् । प्रवचनकर्ताऽपि गृहीतमर्थं स्वशब्दैर्व्याचक्षाणो नापराध्यतीति यदि मन्येत, तदा "आख्या प्रवचनात्" इतिसूत्रभाष्यादिभिरपि न विप्रतिपत्तिः कापि भवेत्, सिद्ध्येच्च निष्प्रत्यूहमपौरुषेयत्वम्—इति कृतं बहुना विस्तरेण ।

**शक्यमुत्पादयितुमनीश्वरैः** । "शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्" इति पस्पशाह्निकस्थमहाभाष्यप्रदीपे कैयटः प्रयोगानेवंविधान् समर्थयामासेति नात्र व्याकरणविरोधशङ्कोद्भावनीया ।

ज्ञानं नेन्द्रियग्राह्यम्, तस्य स्वतः-प्रकाशत्वात् । न च पुरुषप्रयत्नसाध्यं तत्, श्रुतिषु ज्ञानस्य नित्यत्वश्रवणात् । पञ्चदश्यादिग्रन्थेषु सयुक्ति

भाषाटीका

हाँ, दिव्यज्ञानरूप वेद इन्द्रियग्राह्य नहीं हो सकते । ज्ञान इन्द्रियों से गृहीत नहीं होता । वे अनादि भी हैं, क्योंकि ज्ञान नित्य है, उसका आरम्भ कहीं नहीं होता । और न ये मनुष्यों द्वारा बनाये ही जा सकते हैं—क्योंकि ज्ञान का स्वरूप पुरुष-प्रयत्न से साध्य नहीं । इसलिये वे ( ज्ञानरूप वेद ) अपौरुषेय हैं ।

यदि कहो कि ज्ञान का प्रकाशांश अनादि भले ही मान लिया जाय, जैसा कि पञ्चदशी आदि में सिद्ध किया गया है, किन्तु विषयों के स्वरूप से मिश्रित

दित्वादपौरुषेयत्वाच्च।

(१६) ननु "नित्या वागुत्सृष्टा स्वयंभुवा" इति श्रुत्या।

"अनादि-निधना नित्या वागुत्सृष्टा स्वयंभुवा,।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

इत्यादिस्मृत्या च वागात्मकस्यैव वेदस्याकृतकत्वमुपदिश्यते, इति चेत्। सत्यम्।

---

संस्कृतव्याख्या

स्पष्टमुपपादितत्वाच्च तस्मात्तदपौरुषेयमेव मन्तव्यम्। वृत्त्यात्मकज्ञानस्य वृत्त्यंशे इन्द्रियादिव्यापारजन्ये पुरुषप्रयत्नापेक्षणेऽपि नेह परमेश्वरप्रसादजन्ये ज्ञाने तदपेक्षेति भावः। अनादित्वमपि ज्ञानस्वरूपे स्वतः सिद्धम्, वृत्त्यंशे तु प्रवाहनित्यतयोपपाद्यम्, एवं विधस्य ज्ञानस्य प्रतिकल्पम् ऋषिभिः प्रापणीयत्वादितिभावः।

---

भाषाटीका

ज्ञान—जिसे शास्त्र में 'वृत्त्यात्मक ज्ञान' कहते हैं, वह तो इन्द्रिय आदि में उत्पन्न होता है, उसे तो पौरुषेय ही मानना पड़ेगा—तो उत्तर है कि वेदज्ञान के संबन्ध में यह बात भी नहीं घट सकती। क्योंकि देवता आदि अतीन्द्रिय पदार्थों का ज्ञान इन्द्रियों से नहीं हो सकता। वह तो ईश्वरप्रसाद से होता है। इसलिये इस ज्ञानको पौरुषेय किसी प्रकार नहीं कहा जा सकता।

(१६) अब यहाँ शङ्का करते हैं कि 'नित्या वाक्' इत्यादि श्रुतियों में और 'अनादिनिधना'—इत्यादि स्मृतियों में स्पष्ट रूप से वाक् (वाणी) को ही अपौरुषेय कहा है।

श्रुति का अर्थ है कि—"नित्य वाक् को स्वयम्भू (ब्रह्मा) ने उत्सृष्ट (अवर लोगों में प्रकट) किया"। स्मृति का अर्थ है कि "यह वेदमयी दिव्य वाक् नित्य है, इसका न कभी आरम्भ है, न अन्त। यह सदा ऐसी ही रहती है। स्वयम्भू (ब्रह्मा) इसे अवर लोकों में प्रकट करते हैं, और जगत् की सब क्रिया इसके ही अवलम्ब से प्रवृत्त होती हैं।" तब केवल ज्ञानरूप वेदों को अपौरुषेय मान लेने से श्रुति स्मृति का प्रत्यक्ष विरोध होगा। श्रुति स्मृति के अनुसार तो वाक् (शब्द) रूप वेद को भी नित्य (अपौरुषेय) ही कहना चाहिये।

(१७) "यदि वै प्रजापतेः परमस्ति वागेव तत्" (श० त० ८।१।३।११)
इति वाजपेयश्रुतौ श्रुतां काञ्चिद्वाचमुपलक्ष्य तथा श्रवणात् ।

---

संस्कृतव्याख्या

श्रुतां काञ्चिद्वाचम् । ग्रन्थारम्भ एव मनः प्राणवाचां संक्षिप्तं विवरणमस्माभिरुपन्यस्तम्, सैवात्र वाङ्नित्या विवक्षितेत्यनुसन्धेयम् । सा वागेव ऋक्सामयजूरूपेण त्रेधा भिद्यते—इति वैदिकं रहस्यमग्रे सृष्टिविवरणप्रकरणे भृग्वङ्गिरःप्रकरणे च ग्रन्थकृतैव व्याख्यास्यते। ग्रन्थान्तरेषु च सुस्पष्टं प्रकटीकृतम् । उपपादितं चस्माभिरुपोद्धाते ।

अयन्तु संक्षेपः—यद् रूपिद्रव्यस्य चक्षुषा यावत् स्वरूपमुपलभ्यते, सा ऋक् । यावद्दूरं तद् द्रव्यं शक्यते द्रष्टुम्–तदन्तिमं मण्डलं साम ।

---

भाषाटीका

(१७) इसका उत्तर देते हैं कि ऐसा प्रश्न करनेवालों को समझना चाहिये कि यहाँ जिस वाक् को नित्य कहा गया है, वह कानों से सुनी जाने वाली वाक् नहीं है, यह और ही वाक् के लिये कहा गया है। यह तो वही 'वाक्' है, जिसे हम आरम्भ में ही 'मन, प्राण, वाक' के रूप में सब जगत् का मूल तत्त्व कह आये हैं। वह 'विज्ञान' वेदरूप है, और उसके भी 'ऋक्, यजुः और साम' रूप होते हैं यह उपोद्घात में स्पष्ट किया जा चुका है। श्रुतियों में उस वाक् का वर्णन बहुत मिलता है। इसका रहस्य आगे सृष्टि प्रक्रिया और भृगु-अङ्गिरा के प्रकरण में इस ग्रन्थ में भी प्राप्त होगा। श्री गुरुजी ने अपने अन्य ग्रन्थों में भी इस विषय का स्पष्टीकरण किया है।

इसका संक्षेप इस प्रकार है कि रूपवाले द्रव्य का जो स्थूल स्वरूप हमें आँख से देख पड़ता है—वह उसकी ऋक् है, और यह रूपवाला द्रव्य जितनी दूर से दिखाई पड़े (जहाँ से आगे न देखा जा सके) वह अन्तिम मण्डल उस द्रव्य का साम है। इन दोनों के (स्थूलरूप और अन्तिम मण्डल के) मध्य में उस द्रव्य से निकलनेवाले प्राण भरे रहते हैं, वे सब यजु हैं। इस ही प्रकार अन्य इन्द्रियों से गृहीत होनेवाले द्रव्यों में भी समझ लेना चाहिए। ये वितानवेद कहे जाते हैं। अन्य छन्द आदि रूप भी वेद हैं। उन सब का रहस्य श्री गुरु जी के अन्यान्य ग्रन्थों में देखना चाहिये। यहाँ इतने विस्तार का स्थान नहीं है।

इसमें श्रुतियों के प्रमाण दिये जाते हैं। शतपथ ब्राह्मण के वाजपेय प्रकरण की श्रुति में कहा गया है कि "प्रजापति से भी पर यदि कोई वस्तु है, तो वह वाक् ही है"। इस ही 'वाक्' को अनादिनिधन वा नित्य, पूर्व की श्रुति-स्मृतियों में कहा गया है।

**न च सा वागियमेवेति भ्रमितव्यम् । तस्याः सर्वलोकात्मकतया, त्रैलोक्यात्मकतया, सूर्यात्मकतया चान्यत्रान्यत्र बहुधा श्रूयमणत्वात् ।**

**तथाहि "वागेवेदं सर्वम्" इत्यैतरेयश्रुतिः सर्वात्मकत्वमाचष्टे वाचः ।**

**(१८) "त्रयं वै विद्या ऋचो यजूंषि सामानि ।" "इयमेवर्चः, अन्तरिक्षमेव यजूंषि, द्यौः सामानि ।" "तद्वा**

---

संस्कृतव्याख्या

अनयोर्मध्ये तु यावन्तस्तद्द्रव्यसंसक्ताः प्राणाः, तद्यजुरित्यादि एवमेवेन्द्रियान्तरग्राह्येषु पदार्थेष्वप्यनुसन्धेयम् । इमे वितानवेदा इत्युच्यन्ते, अन्यदपि छन्दोवेदादिरूपमृग्यजुः साम्नां रहस्यमस्तीति तत्तेभ्यो गुरुचरणग्रन्थेभ्यएवावसेयम् । न विस्तरभियात्र प्रपञ्च्यते ।

**इयमेवर्चः** । इयमितीदंशब्देन पुरो दृश्यमाना पृथिवी निर्दिश्यते । अस्याः पृथिव्याः किरणाः प्राण-मनोतादिपदाभिधेयाः सूर्यमण्डलपर्यन्तं गच्छन्ति । सूर्यमण्डले स्थित्वा यदि कश्चित् पश्येत्, तर्हि सूक्ष्मताराकारा

---

भाषाटीका

कोई आग्रह करे कि इस कान से सुनी जानेवाली वेद-ग्रन्थों की वाक् को ही प्रजापति से पर बताया गया है, तो यह उसका भ्रममात्र है । क्योंकि वह नित्य वाक् तो 'सर्व लोक रूप है' 'त्रिलोकी रूप है' वा 'सूर्य रूप' है । ऐसा वर्णन श्रुतियों में अनेक स्थानों में अनेक रूप से प्राप्त होता है ।

संसार में जो भी कुछ है—सब वाक् ही है । अर्थात स्थावर जंगम-पदार्थ मात्र वाक् का ही प्रपञ्च है—यह ऐतरेय ब्राह्मण की श्रुति में स्पष्ट कहा गया है । इससे वह नित्या वाक् सर्वलोकात्मक है यह स्पष्ट सिद्ध हो जाता है ।

(१८) शतपथ ब्राह्मण की पुरश्चरण श्रुतियों में कहा जाता है कि "ऋक, यजु और साम—ये तीन विद्याएँ ( अर्थात वेद ) हैं । इनमें यह सामने दिखाई देने वाली पृथ्वी ऋक् है, मध्य का अन्तरिक्ष यजु है, और द्युलोक ( सूर्यमण्डल ) साम है" । आगे

एतत् सहस्रं वाचः प्रजातम् । द्वे इन्द्रस्तृतीये । तृतीयं विष्णुः । ऋचश्च सामानि चेन्द्रो यजूंषि विष्णुः" । "तेजसो वै तत्तेजो जातम्, यदृचश्च साम्नश्चेन्द्रः । इन्द्र इति ह्येतमाचक्षते । य एव तपति" । "स हैव भर्ता" ( शत. ४।६।७।१,३,११,१९ ) इति पुरश्चरणश्रुतिस्त्रैलोक्यात्मकत्वमाचष्टे ।

---

संस्कृतव्याख्या

पृथिवीयं तेन दृश्येत, ततः परं तु न दृश्यते । अत एव पृथिव्याः 'रथन्तरम्' ( साम ) आचक्षते वैदिकाः । सूर्यरथं तरति, तस्माद्रथन्तरमुच्यते । कृष्णवर्णं सूर्यमण्डलं परितः स्थितं हिरण्यवर्णं किरणजालं च सूर्यस्य रथत्वेनोच्यते ।

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।
( ऋ. सं. )

इत्यादिषु बहुषु मन्त्रेषु "कृष्णेन रजसा" इति लोकाख्यस्य सूर्यमण्डलस्य कृष्णत्वं रथस्य च हिरण्ययत्वमर्थात् पीतत्वं श्रूयते । तत्र च

---

भाषाटीका

कहा है कि 'ये सहस्र ( अहः ) वाक् से ही उत्पन्न हुए हैं" । आगे कहते हैं कि-"दो रूप तृतीय स्थान में इन्द्र है और तृतीय रूप विष्णु है । ऋक् और साम इन्द्र हैं और यजु विष्णु है ।" आगे फिर कहते हैं कि "यह तेज से ही तेज पैदा हुआ, ऋक् और साम से इन्द्र हुआ ।" फिर आगे स्पष्ट किया कि "इन्द्र इसको ही कहते कहते हैं—जो कि यह तप रहा है" ( अर्थात् सूर्य ही यहाँ इन्द्र नाम से कहा गया है ) "यही सब का भर्ता अर्थात् भारण-पोषण करने वाला है ।" इस श्रुति में वाक् को त्रिलोकीरूप कहा गया है—इसमें कोई संदेह ही नहीं रह जाता ।

[ इस का आशय संक्षेप में यह है कि पृथिवी की किरणें—जो इसके प्राण-मनोता आदि नाम से प्रसिद्ध है सूर्य-मण्डल तक जाती हैं । यदि सूर्यमण्डल पर खड़ा होकर कोई पृथ्वी को देखे तो यह पृथ्वी छोटे से तारे के समान दिखाई पड़ेगी । सूर्यमण्डल से आगे जाने पर पृथ्वी दिखाई नहीं देगी—इसलिये वैदिक परिभाषा में पृथ्वी की अन्तिम प्राण-परिधि को 'रथन्तर साम' कहते हैं । भगवान् सूर्य की सुनहरी किरणों का जाल उनका रथ कहा जाता है । सूर्य का मण्डल काले वर्ण का है, किन्तु उनका किरण-जाल पीतवर्ण है यह मन्त्र में स्पष्ट है । पृथ्वी-प्राण का अन्तिम मण्डल ( पृथ्वी का साम ) सूर्य के रथ तक व्याप्त होने के कारण ही रथन्तर कहलाता है । प्रत्येक साम-मण्डल तक सहस्र भाग होते हैं, जिन्हें 'अहः' कहा जाता है । इस पृथ्वी-

(१९) "संवत्सर एवाग्निः" ( शत. १०।४।२।२ ) "तस्य वा एतस्याग्नेर्वागेवोपनिषत्" ( शत. १।८।१।१ ) "सा वा एषा वाक् त्रेधा विहिता—ऋचो यजूंषि सामानि । तेनाग्निस्त्रेधा विहितः" । ( शत. १०।८।१।२ ) "सा या सा वाक्, असौ स आदित्यः" । ( शत. १०।२।१।४ ) "मण्डलमेवर्चः, अर्चिः सामानि, पुरुषो यजूंषि । अथैनदमृतम् । यदेतदर्चिर्दीप्यते, इदं तत् पुष्करपर्णम्" ।

---

संस्कृतव्याख्या

पृथिवीमण्डलादारभ्य सूर्यमण्डलपर्यन्तम् 'अन्तरिक्ष' पदवाच्ये आकाशदेशे पृथिव्याः प्राणा व्याप्नुवन्ति, तैरेव च दुग्ध-दधि घृतादिसमुद्राः पुराणोक्ता अन्तरिक्ष उत्पाद्यन्त इत्यादि प्रपञ्चोऽन्येषु श्री गुरुचरणग्रन्थेष्वनुसन्धेयः । इयमेव ऋग्यजुःसामात्मिका पार्थिवी त्रिलोकीत्युच्यते वेदपरिभाषायाम् । प्रत्येकं च सामपर्यन्तं सहस्रं भागाः । सर्वमिदमग्रे मूलेऽपि स्फुटं स्यात् । इन्द्रश्च सूर्यमण्डलस्य प्राणः । सेयं त्रिलोक्यत्र श्रुतौ लक्षिता ।

**मण्डलमेवर्चः** । सूर्यमण्डलसंबन्धेन ऋग्यजुःसामानि सौरत्रिलोकीरूपाण्यत्र ब्राह्मणे व्याख्यातानि । सूर्यमण्डलस्थोऽग्निः सौरप्राणरूपो यो

---

भाषाटीका

मण्डल से सूर्यमण्डल तक बीच के आकाश में जिसको अन्तरिक्ष कहते हैं—पृथ्वी के प्राण व्याप्त रहते हैं । ये पृथ्वी के प्राण ही अन्तरिक्ष में दूध, दही और घृत के समुद्र उत्पन्न करते हैं । वैदिक परिभाषा में—इस ऋक्, यजु और सामरूप पृथ्वी को ही पार्थिव त्रिलोकी कहते हैं । सूर्य-मण्डल में व्याप्त प्रणों को इन्द्र कहा जाता है । इस ही त्रिलोकी का संकेत उक्त श्रुति में किया गया है । यह रहस्य भृगु अङ्गिरा के प्रकरण में मूल ग्रन्थ में भी स्पष्ट किया गया है । ]

(१६) शतपथ ब्राह्मण की 'अग्निचयन' प्रकरण की श्रुतियों में कहा गया है कि "संवत्सर को ही अग्नि कहते हैं" "इस अग्नि की उपनिषत् इसका (मुख्य तत्त्व) वाक् है" "यह वाक् तीन प्रकार से विभक्त की गई है—ऋक्, यजु और साम । इससे यह समझो कि वह अग्नि ही तीन प्रकार से विभक्त हुआ ।" "यहाँ जो 'वाक्' बताई गई है, वह यह सूर्य ही है ।" "इस सूर्य का मण्डल ही 'ऋक्' है । इसकी ज्वाला ( तेज की अर्थात् किरणों की अन्तिम परिधि ) 'साम' है, और पुरुष यजु है ।" "यह भी समझो कि यह अमृत है । जो यह प्रकाश चमक रहा है यह पुष्करपर्ण ( कमल

( शत. १०।५।१।५ ) यदेतन्मण्डलं तपति तन्महदुक्थम्, ता ऋचः, स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतम्, तानि सामानि स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः सोऽग्निः, ता हि यजूंषि, स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।" ( शत. १०।५।२।१,२ ) इत्यग्निचयनश्रुतिः सूर्यात्मकत्वमाचष्टे।

(२०) एतदभिप्रायेणैव—

---

संस्कृतव्याख्या

ब्रह्माण्डमभिव्याप्नोति, य एव च सर्वेषां लोक-वेद-देवभूतादीनां जनकः श्रुतिभिः प्रतिज्ञायते, सोऽत्र पुरुषपदेन यजुःपदेन च श्रुतः। सूर्यस्य साम च बृहत्सामेत्युच्यते वैदिकैः, सर्वस्यापि ब्रह्माण्डस्य तदन्तर्गतत्वात्।

---

भाषाटीका

का पत्ता है )।" "जो यह 'सूर्य' मण्डल तप रहा है, यह 'महदुक्थ' कहा जाता है इसे ही ऋक् रूप समझो। यह ऋचाओं का लोक है। और जो प्रकाश फैल रहा है, वह 'महाव्रत' कहा जाता है। उसे साम समझना चाहिये। वही साम का लोक है। और जो इस ( सूर्य ) मण्डल में पुरुष है, वह अग्नि है, उसे ही 'यजुः' समझो। वही यजु का लोक है। इस प्रकार यह त्रयी विद्या ( तीनों वेद ) ही तप रही है।"

इस अग्निचयनश्रुति में वाक् को सूर्यरूप कहा गया है। यह स्पष्ट ही है।

यहाँ सूर्यमण्डल की त्रिलोकी का संकेत है। सूर्य का मण्डल ऋक् है, उसका प्रकाश जहाँ तक फैलता है—वह प्रकाश का अन्तिम मण्डल सूर्य का साम है। इस साम को वैदिक परिभाषा में 'बृहत् साम' कहते हैं, क्योंकि संपूर्ण ब्रह्माण्ड इसके अन्तर्गत है। एक सूर्य का प्रकाश जहाँ तक पहुँचे–उसी का नाम ब्रह्माण्ड होता है–यह परिभाषा वेद, पुराण आदि में स्पष्ट है। इस संपूर्ण मण्डल (सूर्यमण्डल से लगा कर अन्तिम परिधि तक) जो सूर्यमण्डल का प्राणरूप तत्त्व व्याप्त रहता है, उसे यहाँ 'पुरुष' पद से, अग्नि पद से और संवत्सर पद से कहा गया है। वही इस ब्रह्माण्ड में वेद, देव, लोक, भूत आदि का उत्पादक है।

(२०) इस ही वाक् के अभिप्राय से 'तस्माद्यज्ञात्' इत्यादि पुरुषसूक्त के

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।
ऋ. सं. ( १०।९०।९ ) ( यजुः ३१।७ )
इति श्रुत्या ऋग्यजुःसाम्नां यज्ञप्रभवत्वमाख्यायते ।

(२१) नित्यानामप्यासां वाचां प्रजापतेर्निःश्वासरूपेण प्रादुर्भावात् । एता एव तिस्रो वाग्विधाः स्वयम्भूः ।

---

संस्कृतव्याख्या

तिस्रो वाग्विधाः स्वयम्भूः । उक्तमेतदारम्भेऽस्माभिः—ऽव्ययपुरुषकलारूपा नित्या मनःप्राणवाचः प्रकृतिसंबन्धेन पुनरपरेण रूपेण प्रादुर्भवन्तीति । सोऽयं प्रादुर्भावः 'सर्वहुत्'नामकाद् यज्ञादिति स्पष्टीकृतमुपोद्घाते । तत एव 'तस्माद्यज्ञाद्' इति मन्त्रे ऋग्यजुःसाम्नां सर्वहुतो यज्ञादुत्पत्तिराम्नाता । छन्दांस्यत्र तत्तत्पदार्थानां मर्यादाबन्धा इति निरूपितं गुरुचरणैः 'छन्दः समीक्षायाम्' । तदित्थं सर्वस्य पदार्थजातस्य नाभौ ( केन्द्रे ) यः प्रजापतिः प्रादुर्भवति; तस्य निश्वासभूताः, अर्थात् केन्द्रमभितो वितता इमा ऋगादिरूपा वाच उच्यन्ते । सर्वश्चायं मण्डलप्रजापत्यादिप्रादुर्भाव उपोद्घाते एव द्रष्टव्यः । तत्र प्रथमः प्रजापतिः 'स्वयम्भूः' इत्याख्यायते—

ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ।

( मनुस्मृ० १ अ. )

---

भाषाटीका

मन्त्र में ऋक, यजु और साम को यज्ञ से उत्पन्न कहा गया है ।

मन्त्रका अक्षरार्थ यह है कि—उस सर्वहुत यज्ञ से ( जिसका कि निरूपण इसके पूर्व मन्त्र में ( तं यज्ञं बर्हिषि प्रौक्षन् ) हो चुका है ) ऋक् और साम उत्पन्न हुए । उससे छन्द उत्पन्न हुए—और उससे ही 'यजु' भी उत्पन्न हुआ ।

(२१) यद्यपि यह वाक् और ये ऋक्, यजु, साम नित्य हैं, किन्तु प्रजापति के निःश्वासरूप से इनका पुनः प्रादुर्भाव होता है ।

यह ऋक् यजुः साम नाम की तीन प्रकार की वाक् ही स्वयम्भू है ।

[यह प्रकरण, ग्रन्थ के आरंभ में, बताया जा चुका है कि—मन, प्राण और वाक् अव्यय पुरुष की कला हैं, जो कि प्रकृति के सम्बन्ध से पुनः दूसरे रूप में प्रकट होती

### संस्कृतव्याख्या

स्वयम्भूस्वरूपमप्युपोद्घाते प्रपञ्चितमिति नेह पुनः प्रपञ्च्यते। एतत् स्वयम्भूमण्डलम्—ऋग्यजुःसामेति वेदत्रयीमयम्। अत एव ब्रह्मणः (स्वयम्भुवः) प्रादुर्भूता वेदा उच्यन्ते। ब्रह्मरूपा एवेत्यपि शक्यते वक्तुम्, एषामृग्यजुःसाम्नां कार्यब्रह्मस्वरूपानतिरेकात्। इत एव स्वयम्भूमण्डलाद् व्याख्यातपूर्वा वेदत्रयी सर्वत्र जगति प्रसरति, ऋग्यजुःसामान्येव स्वयम्भूमण्डलस्य मनोताः। यस्मान्मण्डलाद्ये प्राणाः सर्वत्र प्रसरन्ति, सर्वैश्चोपजीव्यन्ते—ते मनोता इत्युच्यन्ते। एवं च तिस्र एता ऋगादिरूपा वाच एव स्वयम्भूमण्डलमुत्पादयन्ति, एतद् वाग्रूपमेव स्वयम्भूमण्डलम्, तदनु च तस्मान्मण्डलादिमा एव (अंशरूपेण) निष्क्रम्यान्यत्र गच्छन्तीति निःश्वासभूता एता उक्ताः। प्राणो हि शरीरारम्भकः, शरीरधारकः, स एव च (अंशरूपेण) निःश्वासरूपतामापद्य शरीराद् बहिर्गच्छतीति निःश्वास-सादृश्यम्। "एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्, यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि, व्याख्यानानि" (बृहदा. उ. अ. २ ब्रा. ४)

---

### भाषाटीका

हैं। यह पुनः प्रादुर्भाव 'सर्वहुत' यज्ञ से होता है। इस ही कारण उक्त मन्त्र में सर्व-हुत यज्ञ से वेदों की उत्पत्ति बताई गई है। 'छन्द' नाम प्रत्येक पदार्थ के 'मर्यादा'-बन्ध का है, इसका विस्तृत निरूपण श्री गुरुजी की 'छन्दः समीक्षा' पुस्तक में प्राप्त होगा।

स्थूल जगत् में सब पदार्थों की नाभि (केन्द्र) में जो प्रजापति (केन्द्र शक्ति) रहता है—यह वाक् उस प्रजापति की निःश्वास रूप ही है। उस नाभि के चारों ओर यह वाक् व्याप्त रहती है। तात्पर्य यह है कि प्राकृत यज्ञ-प्रक्रिया से प्रत्येक पदार्थ के केन्द्र में से प्राणसहकृत वाक् निकलती रहती है। वही उसके पूर्वोक्त ऋक्, साम और यजु मण्डल बनाती है। भीतर से प्राण के आघात से निकलने के कारण उसे निःश्वास रूप कहा गया है। मनुष्य का निःश्वास इच्छा से नहीं निकाला जाता, स्वतः चलता रहता है। और उससे ही मनुष्य के जीवित होने का परिचय मिलता है। इस ही प्रकार ये वेद प्रजापति से (स्वतः) (इच्छा से नहीं) प्रकट होते हैं, और इनसे ही प्रजापति का परिचय मिलता है। वैसे तो प्रजापति अतीन्द्रिय है। ईश्वर का परिचय भी हमें वेदादि द्वारा ही मिलता है इससे उन्हें ईश्वर-निःश्वास कहा गया। यों निःश्वास की समता से बहुत कुछ समझाया गया है। प्रथम प्रजापति को स्वयम्भू कहते हैं, यह स्वयम्भू ऋक्-यजुः-साम रूप ही है। ऋक्, यजु साम से ही यह मण्डल बनता है और ये ही उस मण्डल में से बाहर फैलते हैं। यही कारण है कि वेदों की उत्पत्ति ब्रह्मा (स्वयम्भू) से मानी जाती है, और यह भी कहा जा सकता है कि ऋक् यजु साम ब्रह्मरूप ही है।

संस्कृतव्याख्या

इत्यत्र महद्भूतपदेन प्रजापतिरेवेष्टव्यः, तस्य प्रतिपाद्यमानात्मब्रह्मस्वरूपानतिरिक्तत्वात् । अथ यदि तत्र ऋग्वेदादिपदेन इमे प्रसिद्धा विज्ञानरूपा ग्रन्थरूपा वा वेदा गृह्यन्ते, तदा तु महद्भूतपदेन प्रक्रान्तः शारीर आत्मैव ग्रहीतुमुचितः । ब्रह्मानतिरिक्ताच्छारीरादात्मन एव विज्ञानघनाद् निःश्वासरूपेणानवरतं विज्ञानानां वृत्त्यात्मकानां प्रादुर्भावदर्शनात् । वेदादिग्रन्थानामपि च तत एव प्रवृत्तत्वात् । ईश्वरप्रेरितं वेदादिविज्ञानमस्य शारीरस्यान्तः प्रविशति, ततश्च सर्वजनबोध्यतामाप्तुं वाग्रूपेण निष्क्राम्यतीति निःश्वाससादृश्यम् । अत एव श्लोकसूत्रव्याख्यानुव्याख्यानादीनामपि महाभूतनिःश्वसितत्वमुच्यमानमाञ्जस्येनोपपद्यते । तेषामपि शारीरादात्मनः प्रादुर्भावात् ।

यत्तु श्लोकसूत्रादिकं सर्वमत्रोक्तं ब्राह्मण एवान्तर्भवतीति मतम्, तत्तु तत्तद्वेदब्राह्मणानां तत्तद्वेदस्वरूपान्तर्भावादृग्यजुःसामपदैरेव ब्राह्मणानामपि संग्रहणान्नातीव समञ्जसं प्रतीयते । अत एव च "इमे सर्वे वेदा निर्मिताः" इति पूर्वोद्धृतगोपथश्रुतौ ब्राह्मणातिरिक्तान्यपि इतिहासान्वाख्यानपुराणाद्यानि उल्लिख्यन्ते । तदित्थं वेदानामीश्वरत्वप्रवाद ईश्वरनिःश्वसितत्ववादश्च युक्त्या समर्थितः ।

द्विविधा हि अस्मदादिशरीरे क्रियाः—इच्छाजन्याः, इच्छां विनैव स्वतः प्रवर्तमानाश्च । तत्र श्वासादिकं स्वतः प्रवर्तमानासु क्रियास्वेवान्तर्भवति । तदित्थं निःश्वाससादृश्येनेदमपि विवक्ष्यते—यदिमा ऋग्यजुःसामाख्या वाचः प्रजापतेः स्वत एव यज्ञप्रक्रियया प्रादुर्भवन्ति, न तु इच्छयोत्पाद्यन्ते । यथा च निःश्वासैरेव मनुष्यजीवनस्य परिचयः, तथा एताभिर्वाग्भिरेव प्रजापतेः परिचयः, स्वतः प्रजापतेरतीन्द्रियत्वात् । महतो भूतस्यात्मनोऽपि वृत्त्यात्मकैर्ज्ञानैरेव परिचयः । परमात्मनोऽपि च तन्निःश्वासभूतैर्वेदादिभिरेव परिचय इत्यादि सादृश्यं बहुतरमुन्नेयम् ।

सर्वस्मिंश्च ब्रह्माण्डे मुख्यः प्रजापतिः सूर्यः । तत एते ऋगादिवेदाः पुनः प्रादुर्भवन्ति । अत एव मूले सूर्यप्रभवत्वमेषामुक्तम् । इमे च सूर्यमण्डलादाविर्भूता ऋगाद्याः 'गायत्रीमातृका वेदाः' इत्युच्यन्ते वैदिकपरिभाषायाम् ।

---

भाषाटीका

संपूर्ण ब्रह्माण्ड में सूर्य मुख्य प्रजापति माना गया है, अतः मूल में वेदों को सूर्य से उत्पन्न कहा गया है । नित्य वेद जब यज्ञ प्रक्रिया से पुनः प्रादुर्भूत होते हैं, तब ये वेद की परिभाषा में 'गायत्रीमातृक' वेद कहे जाते हैं । ]

(२२) ईश्वरमेवैतं वेदं मन्यन्ते, ईश्वरनिःश्वसितं वा, ईश्वरकृतं वा । तपःप्रभावात्तु स शुद्धान्तःकरणानामाविर्भूत-प्रकाशानामतीन्द्रियदृष्टिमतां हृदि स्वयमाविर्भवतीति स नित्यसिद्ध एवार्थः काले काले गृह्यते ।

(२३) तथा च श्रूयते-"तद्वा ऋषयः प्रतिबुबुधिरे, य उ तर्हि ऋषय आसुः" (शतः २।२।१।१४) इति । "मनसो वै समुद्राद् वाचाऽभ्र्या देवास्त्रयीं विद्यां निरखनन् । तदेष श्लोकोऽभ्युक्तो—

ये समुद्रान्निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः ।
सुदेवो अद्य तद् विद्याद् यत्र निर्वपणं दधुः ।

इति । मनः समुद्रः, वाक् तीक्ष्णाभ्रिः, त्रयी विद्या निर्वपणम्"

---

भाषाटीका

(२२) ये वेद ईश्वररूप हैं, ईश्वर के निःश्वास रूप हैं अथवा ईश्वर द्वारा बनाये गये हैं—ये तीनों मत प्रचलित हैं। तपस्या के द्वारा जिनका अन्तःकरण शुद्ध हो गया है, हृदय में ईश्वरीय प्रकाश का आविर्भाव जिनके हृदय में हो चुका है और अति सूक्ष्म तथा व्यवहित पदार्थों कों—जो कि सामान्य पुरुषों की इन्द्रियों से नहीं जाने जा सकते, उनके देखने की जिनमें शक्ति आगई है—ऐसे महर्षियों के हृदय में यह नित्य वेद अपने आप आविर्भूत होते हैं। अतः नित्य अर्थ का समय समय पर ( एक के बाद दूसरे कल्प के आरंभ में ) आविर्भाव होता है—यह स्पष्ट हो गया।

(२३) जैसा कि वेदों में स्पष्ट कहा जाता है—"इस ज्ञान को सब से पहले ऋषियों ने ही प्राप्त किया-क्योंकि सृष्टि के आरंभ में ऋषिगण ही उपस्थित थे। वे वेद ज्ञान प्राप्त करने के कारण ही ऋषि कहलाये।" इत्यादि। अन्यत्र भी कहा है कि-"देवताओं ने वाणी रूप खनित्र ( कुदाल ) के द्वारा मन रूप समुद्र में से त्रयी विद्या ( ऋग्-यजु-साम ) को खोद कर निकाला। इस ही आशय का एक श्लोक भी श्रुति में विख्यात है। उस श्लोक का अर्थ है कि "जिन देवताओं ने तीक्ष्ण अभ्रि ( खनित्र ) के द्वारा समुद्र से निर्वपण ( सर्वाधार भूत दान निधि ) कों—खोदा-उनने उसे जहाँ रक्खा-उसको भी सुदेव ही आज जान सकताहै।" उक्त कथन का आशय श्रुति ने ही स्पष्ट किया है कि मन एक समुद्र है-वाक् रूपी तीक्ष्ण अभ्रि ( कुदाली ) है। ऋग् यजु साम रूप तीन विद्या निर्वपण ( निधि भूत दान ) है।

( शत० ७।५।२।५२ ) इति च ।

देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचानाः ।

(२४) "अजान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयम्भु

---

संस्कृतव्याख्या

**देवा इह पारोवर्यविदः** । अत्र शतपथश्रुतिप्रमाणमुपस्थापितं प्राक् । तथा च 'ये समुद्रा' इत्यादिश्लोकस्यायमर्थो निष्पन्नः—ये देवाः-विद्वांसः, समुद्रात्-मनसः सकाशात्, तीक्ष्णाभिः अभ्रिभिः-कुशलाभिः वाग्भिः, यद् निरखनन्-अन्तःस्थितं बहिःप्रादुरभावयन्, तदेतद् निर्वपणम्—त्रयीविद्यारूपं दानम्, यत्र—ग्रन्थे, दधुः—स्थापितवन्तः । तदद्य सुदेवः-श्रेष्ठो विद्वानेव विद्यात् । स्वैः शब्दैर्ऋषिभिर्व्याख्यातमपि न सर्वैर्बोद्धुं शक्यम्-किन्तु विशिष्टप्रज्ञैर्विद्वद्भिरेवेति । विषयस्यातिगहनत्वात् ।

**अजान् ह वै पृश्नीन्** । स्वयम्भु ब्रह्म-ज्ञानरूपम्, तपस्यमानान् अजान् पृश्नीन्, अभ्यानर्षत्-प्राप्नोत् । त एव, एतेनैव ब्रह्मप्राप्तिहेतुना, ऋषयोऽभवन् । अत्र अजशब्दमेवं व्याचख्यौ भाष्यकृन्माधवाचार्यः—यत्ते तादृशा ऋषयः-( एकवारमेव सृष्ट्यादौ समुत्पन्नाः ) न भूयो भूयोऽस्मदादिवज्जगति जायन्ते–जन्ममरणप्रवाहे न पतन्ति, तेन अजा उच्यन्ते । तस्माज् ज्ञानान्मुक्ता भवन्ति, आधिकारिकरूपेण तिष्ठन्तीति वा तात्पर्यम् । यद्वा-

---

भाषाटीका

यहाँ परावर जानने वाले पूर्ण रूप से अधीतविद्य और पूर्णवक्ता विद्वानों को ही देवता पद से कहा गया है—जैसा कि पूर्व शतपथ श्रुति के प्रमाण से स्पष्ट किया जा चुका है। ऐसे ही विद्वानों ने इस विद्या को प्रकट किया, और अब भी उनके शब्दों में स्थापित उस विद्या को भी ऐसे ही विद्वान् जान सकते हैं। सामान्य मनुष्यों की गति अब भी नहीं। यह श्रुति के श्लोक का अर्थ स्पष्ट हुआ।

(२४) इस ही प्रकार अन्यत्र भी ऋषियों को ज्ञान की प्राप्ति होना बताया गया है। 'अजान् ह वै' आदि मन्त्र का अर्थ है कि—तपस्या करते हुए 'अज' और 'पृश्नि' ऋषियों के हृदय में वह ( विना इन्द्रिय आदि की सहायता के ) स्वयं प्रादुर्भूत ब्रह्मज्ञान प्राप्त हुआ, और उस नित्य ज्ञान को प्राप्त करने के कारण ही उन पुरुषों में ऋषि शब्द का व्यवहार प्रारम्भ हुआ।

अभ्यानर्षत् । त ऋषयोऽभवन् । तदृषीणामृषित्वम् ।" ( तै. आ. २।९ ) इति ।

(२५) "यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टाम्।"

---

संस्कृतव्याख्या

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
( श्वेताश्वतरोपनिषत् )

इत्यादिषु पुरुषपरत्वेन प्रसिद्ध एवाजशब्दः प्राकृतबन्धनरहितेषु विशुद्ध-ज्ञानमयत्वेन साक्षात्पुरुषरूपेषु तेषु महामहिमसु ऋषिषु प्रयुक्त इति भाव्यम् । पृश्नीन्—शुक्लान्-निर्मलानिति यावत् । यद्वा अजनाम्ना पृश्निनाम्ना च पुराणेषु केचिदृषयः प्रसिद्धाः, तदभिप्रायेणैवेदमुक्तं स्यात् । स्पष्ट मिदमग्रे मूले ।

**यज्ञेन वाचः** । अस्य मन्त्रस्योत्तरार्द्धम्—

तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि संनमन्ते । इति ।

---

भाषाटीका

[ उपर्युक्त श्रुति में अज शब्द से जो ऋषियों का व्यवहार हुआ है, वहाँ 'अज' शब्द की व्याख्या करते हुए—भाष्यकार श्री माधवाचार्य ने लिखा है कि—वे सृष्टि के आरम्भ में एकवार ही उत्पन्न होते हैं, आगे सामान्य जनों की तरह जन्म-मरण के प्रवाह में नहीं पड़ते—अर्थात् ज्ञान प्राप्त हो जाने के कारण मुक्त हो जाते हैं, वा अधिकारी पुरुष के रूप में उस ही शरीर से बने रहते हैं। इसलिये उन्हें 'अज' कहा है । अज अर्थात् आगे जन्म न लेनेवाले ।

अथवा यों समझिये कि श्वेताश्वतर उपनिषद् में यह अज शब्द विशुद्ध ज्ञानमय पुरुष तत्त्व के लिये प्रयुक्त हुआ है । पूर्वोक्त ऋषि प्रकृति-बन्धन से मुक्त हो जाते हैं, विशुद्ध ज्ञान ही उनका स्वरूप रह जाता है, अतः उनको अज कहना युक्तियुक्त ही है। पृश्नि पद भी उक्त श्रुति में ऋषियों के लिये आया है, उसका अर्थ श्रीमाधवाचार्य ने शुक्ल—अर्थात् पाप-पङ्क से रहित—किया है । अथवा पुराणों में 'अज' और 'पृश्नि' नाम के विशेष ऋषि भी वर्णित हैं । ये शब्द उनको लक्ष्य कर प्रवृत्त हुए हों–यह भी संभव है । ]

(२५) 'यज्ञेन वाचः' इत्यादि श्रुति का अर्थ है कि—धीर विद्वानों ने यज्ञ से वाणी के मार्ग ( पगडंडी ) को प्राप्त किया, और ( उस मार्ग से चलते हुए ) ऋषियों

( ऋ. सं. १०।७१।३ ) ।इति ।

(२६) "यो वै ज्ञातोऽनूचानः स ऋषिः" ( शत०४।३।४।१९ ) इति शतपथब्राह्मणश्रवणाच्च ।

(२७) किं च—

"अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ।"

( ऋ. सं. १ मं., १ सू., २ मं. )

---

संस्कृतव्याख्या

इमं मन्त्रं व्याचख्यौ भाष्यकृच्छ्रीमाधवाचार्यः—"विदितार्था धीराः पदवीयम्—पदेन यातव्यः पन्थाः पदवीयम्, तं वाचः मार्गम्, यज्ञेन आयन्—प्राप्तवन्तः। ऋषिषु—अतीन्द्रियार्थदर्शिषु, प्रविष्टां तां-वाचम्, अन्वविन्दन्-अलभन्त । अनन्तरं तां वाचम्, आभृत्य-आहृत्य, पुरुत्रा-बहुषु देशेषु, व्यदधुः-व्यकार्षुः। सर्वान् मनुष्यानध्यापयामासुरित्यर्थः । एतादृशीं वाचम्, रेभाः—शब्दायमानाः पक्षिणः-पक्षिरूपाणि गायत्र्यादीनि च्छन्दांसि, अभिसंनमन्ते—अभितः संगच्छन्ते ।" इति ।

अत्र ऋषीणां हृदयेषु ज्ञानप्रादुर्भावः, तत्कृतं वाग्रूपेण मुनीनामध्यापनम्, मुनिकृतश्च मनुष्येषु तत्प्रचारः—इति क्रमः स्पष्टमाम्नातः । चतुर्थपदोक्तं छन्दोरहस्यन्तु 'छन्दः समीक्षायाम्' द्रष्टव्यम् ।

---

भाषाटीका

में प्रविष्ट उस वाणी को प्राप्त किया। आगे उत्तरार्द्ध में बताया गया है कि—उस वाणी रूप संपत्ति को इकट्ठा कर बहुत जगह फैलाया—अर्थात् बहुत मनुष्यों को पढ़ाया। गायत्री आदि छन्द रूप पक्षी इस वाक् को चारों ओर घेरे हुए हैं। इससे भी सिद्ध है कि ऋषियों के हृदय में वेदवाक् प्रविष्ट हुई। यज्ञ आदि कर्मकलाप से विशुद्ध मुनियों ने उनसे उस वेदवाक् को प्राप्त किया, और उनके द्वारा मनुष्यों में उसका प्रचार हुआ।

(२६) शतपथब्राह्मण में और भी स्पष्ट लिखा है कि—जो विद्वान् हैं, और वक्ता ( अध्यापक ) हैं वे ही ऋषि कहलाते हैं।

(२७) ऋग्वेद के आरम्भ में कहा गया है कि—'पूर्व काल के ऋषि अग्नि की स्तुति करते रहे हैं, और नवीन ऋषि भी अग्नि की स्तुति करते हैं। वह अग्नि ही देवताओं को इस लोक में बुलावे।

इत्यादिश्रुतिनिर्दशनेषु प्रयुक्त ऋषिशब्दः पौर्वापर्यानुसन्धाना-त्साक्षात्कृतधर्मसु प्राणानां विद्वत्सु मनुष्यविशेषेष्वेव प्रवर्तत इति सुस्पष्टम् ।

(२८) स्मर्यते च—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा । इति ।

(२९) आप्तश्चैष तमर्थं यथा पश्यति, स तथा परप्रत्यायनाय वाचाऽभिनयति । तदस्य द्रष्टुर्वाक्यं श्रुतिः । तत्प्रमाणमन-पेक्षत्वात् ।

---

संस्कृतव्याख्या

**द्रष्टुर्वाक्यं श्रुतिः ।** अयमभिप्रायः-ज्ञानसामान्यार्थतया बहुत्र व्यवह्रियमाणोऽपि दृशिः प्रत्यक्षज्ञाने विशेषेण प्रसिद्धः । प्रत्यक्षं च इन्द्रियजन्यं ज्ञानमेवेति यद्यपि नैयायिका आतिष्ठन्ते, परं वेदान्तादिषु निर्मलः—सन्देह-विपर्ययादिलेशेनापि कालत्रयेऽस्पृष्टः, अशेषविशेषविषयकश्च स्फुटः प्रति-भासः प्रत्यक्षशब्देनोच्यते । अत एव मननेनोन्मूलितसंशयविपर्ययां निदिध्या-सनेन स्फुटतां गतां महावाक्यजन्यामपि तादृशीं धियं साक्षात्कारपदेनैवाभि-दधति वेदान्तनिष्णाताः । उक्तं च—

---

भाषाटीका

यहाँ 'पुराने और आज' के कह कर जो पौर्वापर्य का अनुसन्धान किया गया, उससे यह स्पष्ट सिद्ध होता है कि—वस्तुतत्त्वों का प्रत्यक्ष करनेवाले और प्राण-तत्त्वों के वेत्ता—मनुष्य-विशेषों के लिये ही यहाँ ऋषि शब्द का व्यवहार हुआ है ।

(२८) उक्त कथन में स्मृति का प्रमाण भी दिया जाता है—

युग के अन्त में अर्थात् प्रलय में—इतिहास सहित वेद विलुप्त हो जाते हैं—दूसरे युग के आरम्भ में महर्षिगण तपस्या द्वारा—ब्रह्मा की आज्ञा प्राप्त कर, उन वेदों और इतिहासों का ज्ञान प्राप्त करते हैं ।

(२९) इन सब श्रुतिवचनों से ऋषियों का ज्ञान प्राप्त करना स्पष्ट सिद्ध होता है, ज्ञान प्राप्त करने के कारण ही वे 'आप्त' कहलाते हैं । आप्त—अर्थात् प्राप्तिकर्त्ता—जिनने ज्ञान की प्रप्ति की है । वे आप्त स्वयं प्राप्त किये अनुभवों को ( जैसा देखा

**(३०) यथा हि श्रोतुर्वाक्यं स्मृतिरित्युच्यते, तच्च परतः प्रमाणं भवति, स्वप्रामाण्याय श्रुतिसापेक्षत्वात्, असाक्षात्कृतधर्मतया तत्र वक्तुः परप्रत्ययालम्बनेनैवार्थग्राहित्वात्, न तथायं साक्षात्कृ-**

---

संस्कृतव्याख्या

आविर्भूतप्रकाशानामनभिप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥

नैयायिका अपि च योगजं ज्ञानम् अलौकिकप्रत्यक्षमिति प्रतिपद्यन्ते । ततश्च तपोयोगप्रभावजनितेनेश्वरानुग्रहेणेदृशं ज्ञानं यैः प्राप्तम्—ते द्रष्टारः, त एव ऋषयः । तेभ्यश्चोपदेशेन यैर्लब्धं ज्ञानं ते भवन्ति मुनयः । ऋषीणां वाक्यं श्रुतिरिति व्यपदिश्यते, मुनीनान्तु स्मृतिरिति, तेषां साक्षाद् द्रष्टृत्वाभावात् । यद्यपि मनु-याज्ञवल्क्यादयः साक्षाद् द्रष्टार आसन्, परं मनुस्मृत्यादिषु न तेषां साक्षाद् वाक्यानि निबद्धानि, अपि तु तच्छिष्यैस्तदुपदिष्टोऽर्थो निबद्ध इति ।स्पष्टं स्मृतिपरिशीलिनाम् । तत एव श्रुतीनां स्वतः प्रामाण्यम्, स्मृतीनां तु श्रुतिमूलकतयेति निपुणं निरूपयन्ति मीमांसकाः ।

---

भाषाटीका

है—वैसा ही ) दूसरों को समझाने के लिये वाणी द्वारा प्रकाशित करते हैं । उन द्रष्टा आप्तों के वाक्यों का नाम 'श्रुति' है । प्रत्यक्ष देखनेवाले के वाक्यों में अन्य प्रमाण की आवश्यकता नहीं होती ।

[ यद्यपि न्याय मत में इन्द्रिय द्वारा किसी वस्तु का ज्ञान ही प्रत्यक्ष कहाता है, किन्तु वेदान्त में भ्रम-सन्देह-रहित, निःशेष विशेष को बतानेवाले निर्मल ज्ञान को प्रत्यक्ष कहा है । अतः तपस्या द्वारा महर्षियों को जो निर्मल ज्ञान प्राप्त हुआ—वह प्रत्यक्ष ही कहा जा सकता है । नैयायिकों ने भी योग से होनेवाले ज्ञान को अलौकिक प्रत्यक्ष माना है । अतएव ऋषियों को द्रष्टा कहा जाता है, और उनके वाक्यों को श्रुति कहा जाता है । ]

(३०) उन ऋषियों से पढ़ सुन कर आगे उपदेश वा प्रचार करनेवाले मुनियों के वाक्य 'स्मृति' कहलाते हैं, उन स्मृतिवाक्यों को कहनेवाला स्वयं प्रामाणिक नहीं होता, किन्तु जिससे वह सुनता है, वही प्रामाणिक माना जाता है । आशय यह है कि—सुननेवाला धर्म का प्रत्यक्ष नहीं करता—अतः उसके ज्ञान का आधार वह वक्ता ही होता है, जिसने उसे सिखाया है, अतः श्रोता का वाक्य 'स्मृति' स्वतः प्रमाण नहीं, वह अपनी प्रमाणता के आधार के लिये द्रष्टा के वाक्य 'श्रुति' की

तधर्मा तमर्थमाप्तः स्वोक्तिप्रामाण्याय परप्रत्ययमपेक्षते । तस्माद् द्रष्टुर्वाक्यं स्वतःप्रमाणं भवति ।

(३१) उक्तं च वात्स्यायनेन गौतमीय (न्या. सू. २ अ. १ पा.) व्याख्यायाम्–"आप्तोपदेशः शब्दः ।" 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तते–इत्याप्तः । ऋष्यार्यम्लेच्छानां समानं

---

संस्कृतव्याख्या

उक्तं च वात्स्यायनेन । तदग्रेऽपि न्यायभाष्यकारः श्रीवात्स्यायनः "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" (न्या. द. २ अ., १ पा, सू. ६१) इति सूत्रं व्याचक्षाण आह—"मन्वन्तरयुगान्तरेषु चातीतानागतेषु संप्रदायाभ्यासप्रयोगाविच्छेद इति वेदानां नित्यत्वम् । आप्तप्रामाण्याच्च प्रामाण्यम् । लौकिकेषु शब्देषु चैतत् समानमिति ।" एतेन अकृतकत्वाद् वेदानां नित्यत्वं प्रामाण्यं च सर्वथा खण्डितम् । मन्त्रायुर्वेदप्रामाण्यं यथा आप्तानां पुरुषाणां प्रामाण्यात्, तथैव वेदानामपि प्रामाण्यम् इति

---

भाषाटीका

अपेक्षा रखती है । श्रोता की तरह वक्ता को दूसरे के ज्ञान पर अवलम्बित नहीं रहना पड़ता, क्योंकि द्रष्टा वस्तुधर्मों का स्वयं प्रत्यक्ष करके-वाक्यों द्वारा उसका प्रकाशन करता है । अतः सिद्ध हुआ कि–द्रष्टा के वाक्य प्रमाणान्तर-सापेक्ष नहीं होते–अपितु स्वतः प्रामाणिक होते हैं ।

[ यद्यपि मनु, याज्ञवल्क्य आदि महर्षि भी धर्म के साक्षात् द्रष्टा थे, किन्तु मनु आदि स्मृतियों में उनके अपने वाक्य न होकर–उनके शिष्यों के वाक्य हैं । अतः वे स्मृति कहलाती हैं । मीमांसकों ने उक्त कथन की पुष्टि की है कि—श्रुति स्वतः प्रमाण–और स्मृति—मूलभूत श्रुति के आधार पर प्रमाण है । ]

(३१) वात्स्यायन मुनि ने गौतमकृत न्याय-सूत्रोंकी व्याख्या में प्रामाणिक शब्द के विषय में लिखा है कि आप्त का उपदेश शब्द है । आगे उनने आप्त का निरूपण करते हुए बताया है कि—वस्तुधर्मों का प्रत्यक्ष करने वाला, और जिस रूप में वस्तु धर्मों का प्रत्यक्ष किया हो, उनका उस ही रूप में वर्णन करने वाला, वा उपदेष्टा आप्त कहलाता है । अर्थ का साक्षात्कार ही अर्थ की आप्ति ( प्राप्ति ) कही जाती है । उस आप्ति द्वारा व्यवहार करने वाला—अर्थात् अपने निश्चित अर्थज्ञान को

लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते । स द्विविधो–दृष्टा-ऽदृष्टार्थत्वात् । यस्येह दृश्यतेऽर्थः स दृष्टार्थः । यस्याऽमुत्र प्रतीयते सोऽदृष्टार्थः । एवमृषिलौकिकवाक्यानां विभागः ।' इति ।

(३२) तदित्थमेष द्रष्टा द्विविधः सिद्धो लौकिकश्च ऋषिश्चेति । यत्रासौ श्रोतृभिरपि सर्वैः शक्यं साक्षात्कर्तुमर्थं दृष्ट्वा प्रब्रूते, नातीन्द्रियं द्रष्टुमनुमातुं वा शक्नोति, स लौकिको द्रष्टाऽऽप्तः । यस्त्वतीन्द्रियेष्वसंवेद्येष्वतीतानागतेषु च भावेष्वव्याहतप्रचारां

---

संस्कृतव्याख्या

वदंश्च सूत्रकारोऽपि ऋषिकृतत्वं वेदानां स्फुटं व्यनक्ति । आयुर्वेदस्य ऋषिप्रणीतत्वे अविवादात्, तद्वदेव च वेदप्रामाण्यस्यात्र व्यवस्थापितत्वात् । (मन्त्रा अत्र सूत्रे विषनिर्हरणाद्यर्थं प्रयुज्यमाना लौकिका ग्राह्याः ।) 'य एवायुर्वेदप्रभृतीनां प्रवक्तारः, त एव वैदिकमन्त्रादीनां द्रष्टारः, तत्प्रामाण्यादेव वेदस्य प्रामाण्यम्'—इति व्याचक्षाणश्च भाष्यकृद् ऋषिप्रणीततां स्पष्टयति—इति निपुणं भाव्यम् ।

---

भाषाटीका

प्रकाशित करने वाला ही आप्त है। जो जिस विषय को जानता है, उस विषय में वही आप्त कहा जायगा, चाहे वह कोई हो, वा किसी जाति का हो । अतः यह आप्त का लक्षण ऋषि, आर्य और म्लेच्छ–तीनों प्रकार के पुरुषों में घटित होता है, और इन्हीं आप्तों के वाक्यों को प्रामाणिक मान कर, संसार के व्यवहार चलते हैं ।

(३२) वे आप्त दो प्रकार के होते हैं—एक दृष्टार्थ ( लौकिक अर्थ ) के आप्त, और दूसरे अदृष्टार्थ ( अलौकिक अर्थ ) के आप्त । जिसके ज्ञान का विषय लौकिक हो अर्थात् जिसे दूसरे लोग भी देख सकें–वह दृष्टार्थ आप्त, और जिसके ज्ञान का विषय अलौकिक हो–अर्थात् इस लोक में सर्वसाधारण जिसे न देख सकें–परलोक सम्बन्धी विषय हो–वह अदृष्टार्थ आप्त होता है। इस विभाग से ऋषिवाक्यों और लौकिकवाक्यों का विभाग हो गया ।

इस वात्स्यायन के कथनानुसार द्रष्टा दो प्रकार का सिद्ध हुआ—लौकिक और ऋषि । जिस विषय को सुनने वाला भी देख सके–ऐसे विषय को देखकर जो उपदेश करता है, अतीन्द्रिय अर्थात् इन्द्रिय से परे के पदार्थ को देखने वा अनुमान करने की जिसकी शक्ति न हो, ऐसे द्रष्टा और प्रवक्ता को 'लौकिक द्रष्टा' कहते हैं, वह भी अपने विषय में आप्त है। किन्तु जो तप के प्रभाव से सर्वसाधारण के जानने के

तपःप्रभावजनितां दृष्टिं लब्ध्वा तेनार्षेयचक्षुषा प्रत्यक्षवत्सर्वं याथातथ्येनाधिगच्छति, स ऋषिर्द्रष्टाऽऽप्तः।

(३३) अयमेवार्थो निष्कृष्येत्थं द्रष्टव्यः। द्रष्टा, आप्तः, अनूचान इत्येकार्थाः। योऽर्थमीक्षते, अन्वीक्षते-परीक्षते—समीक्षते, स विपश्यति, स द्रष्टा। अथ चक्षुरादीन्द्रियजन्यं लिङ्गजन्यं शब्द-जन्यं वा यज्ज्ञानं तज्जन्यं पार्ष्टिकं निर्विकल्पकं ज्ञानमवगमः। सोऽधिगमः, तत्प्रत्यक्षम्, सा प्रमा, साऽर्थस्याप्तिः, तत्संपन्न आप्तः। अथ योऽर्थं दृष्टवा याथातथ्येनावगम्य यथादृष्टमन्वा-चष्टे, स उपदेष्टा, सोऽनुशास्ता सोऽनूचानः। एवमेषां सामाना-धिकरण्यं भवति।

(३४) तत्रेदं द्रष्टृदृश्यं त्रिविधम्—भौतिकं दैविकमतीन्द्रियं च। तत्र भौतिकेष्वर्थेषु ये द्रष्टार आप्ता अनूचानास्तेषु ऋषि-

---

भाषाटीका

अयोग्य अतीन्द्रिय वा अतीत अनागत पदार्थों में भी प्रवेश करने की दृष्टि प्राप्त कर, उस ऋषिजनोपयुक्त दृष्टि से अतीन्द्रियादि सब पदार्थों को प्रत्यक्ष के समान देखता है, और उस अलौकिक तत्त्व का उपदेश करता है—उस द्रष्टा को ऋषि कहते हैं। वह पूर्ण आप्त है।

(३३) इस सब का निष्कर्ष यों समझना चाहिये कि-द्रष्टा, आप्त और अनूचान ये तीनों शब्द समानार्थक हैं। जो अर्थ को देखता है, पुनः अनेक प्रकारों से देखता है, परीक्षा करता है, समीक्षा ( तुलना ) करता है और तह तक देखता है, वह उस अर्थ का द्रष्टा कहलाता है। चक्षु आदि इन्द्रियों से होनेवाले, अनुमान से होनेवाले, वा शब्द द्वारा होनेवाले ज्ञान के अनन्तर जो निर्विकल्पक वा संदेहनिवर्त्तक ज्ञान होता है—वह अवगम कहलाता है—वही अधिगम, वही प्रत्यक्ष और वही ज्ञान प्रमा ( निश्चित ज्ञान ) कहलाता है। इस प्रमारूप ज्ञान को प्राप्त करना उस अर्थ की 'आप्ति' है, और इस आप्ति से संपन्न-आप्त कहा जाता है। अर्थ को देख कर उसको यथावत् समझ कर, जिस प्रकार देखा हो, उस ही प्रकार से कहनेवाला उपदेष्टा, अनुशासक अथवा अनूचान कहलाता है। ये तीनों बातें एक ही व्यक्ति में हो सकती हैं—इसलिये इनका वाच्य अर्थ एक ही व्यक्ति है।

(३४) अब जो अर्थ का द्रष्टा बताया गया, उसके देखने के लिये तीन प्रकार के अर्थ प्राप्त होते हैं—भौतिक, दैविक और अतीन्द्रिय। दृश्य भूतों के ही अन्तर्गत,

शब्दो नास्ति। ये तु दैविकेष्वतीन्द्रियेषु चार्थेषु द्रष्टारस्तेष्वयमृषिशब्दः प्रवर्तते—

(३५) यथा हि विषमयद्रव्यविज्ञाने श्वबिडालादीनां सामर्थ्यम्, विषहरौषधिविज्ञाने च नकुलादीनाम्। पुरुषादृष्टसंनिधापिते कस्मिंश्चिद् भाविन्यर्थे श्व-शिवा-वायस-पिङ्गलकादिशकुनीनाम्,

---

संस्कृतव्याख्या

**ऋषिशब्दः प्रवर्तते।** द्विविधो हि ब्रह्माण्डस्य विभागः श्रुतिषु श्रूयते-अमृतं मर्त्यं चेति। सूर्यमण्डलादर्वाङ् मर्त्यम्, सूर्यमण्डलात्परं त्वमृतम्। तत्रामृतपारोवर्यवित्सु महर्षिशब्दः—इत्यपि ग्रन्थकृताऽन्यत्र निरूपितम्।

**यथा हि विषमयद्रव्यविज्ञाने।** अतीन्द्रियज्ञानं केषांचिदपि नैव संभवति, यावदस्मदादिभिर्येन प्रकारेण ज्ञातुं शक्यते, तावदेव तैरेव प्रकारैरन्येऽपि शक्नुवन्ति ज्ञातुम्, नातो विलक्षणम्, नापि प्रकारान्तरेण, प्रकृतिनियमविरुद्धत्वाद्' इति य आगृह्णन्ति, तान् प्रबोधयितुं लौकिकाः पश्वादिदृष्टान्ता इहोपात्ताः। तथा च न प्रकृतिनियमः कात्स्न्येनास्माभिः

---

भाषाटीका

जो उनके अधिष्ठाता देवताओं के कार्य हैं—वे दैविक कहे जाते हैं। इनमें भौतिक अर्थ के द्रष्टा, आप्त वा अनूचान का ऋषिशब्द से व्यवहार नहीं किया जाता। किन्तु जो दैविक वा अतीन्द्रिय ( इन्द्रिय से अगम्य ) अर्थ को देखनेवाले हैं—उन आप्तों में ऋषि शब्द का व्यवहार होता है।

(३५) यह अतीन्द्रियार्थ ज्ञान हो ही नहीं सकता—यह समझना भूल है। जैसे विषयुक्त द्रव्यादि के ज्ञान में कुत्ते, बिडाल आदि विशेष समर्थ होते हैं, विष-निवारक औषध का ज्ञान नेवले आदि को विशेषतया रहता है। और अदृष्ट द्वारा प्राप्त होने वाली—मनुष्य की भावी दुर्घटनाओं का ज्ञान कुत्ता, शिवा ( फेवरी ), कौवा और पिङ्गल आदि को विशेषतया रहता है। ( तब ही वे उसके आगे पीछे भिन्न-भिन्न प्रकार के शब्द करके उसे सचेत किया करते हैं )। अपने रोगों को नाश करनेवाली औषध का ज्ञान जंगली पशुओं को विशेषतया होता है, भविष्य में होनेवाली वर्षा

स्वरोगहरौषधिविज्ञाने च सर्वेषामारण्यपशूनाम्, भविष्यद्वृष्टिविज्ञाने मण्डूकानाम् । एवमेते विचित्रा अतीन्द्रियार्थविज्ञानजनकप्रभावा नैसर्गिका एव तत्र तत्र प्राणिकुले दृश्यन्ते ।

---

संस्कृतव्याख्या

परिचितः, विलक्षणा अपि ज्ञानप्रकारा भवन्ति । यदस्माभिर्न ज्ञायते, तदप्यन्येन ज्ञातुं शक्यते । तस्मादृषीणामलौकिकज्ञाननिष्पत्तौ न विवदितव्यमित्यभिप्रायः । अद्यापि बहवो मनुष्या योगाभ्यासपरा लोहसीसकादिकं भक्षयन्तोपि, निरुद्धवाते भूम्यधःप्रदेशे समाधिमास्थाय तिष्ठन्तोऽपि च जीवन्तो दृश्यन्ते, बहुभिश्च शिष्टतमैर्वैज्ञानिकैः साश्चर्यं प्रशस्यन्ते । बहवश्च भविष्यद्वक्तारोऽप्यद्यत्वे दृश्यन्ते, येषां वचोऽवितथं भवति इति व्यर्थ एव प्रकृतिनियमाग्रहः ।

---

भाषाटीका

आदि का ज्ञान मेंढक को विशेषतया रहता है ( वृष्टि होनेवाली हो-तब वे पहले ही बोलने लगते हैं ) ।

तात्पर्य यह कि—भविष्य एवं अतीन्द्रियार्थ विषयों के जानलेने का सामर्थ्य, इन पशु-पक्षियों में भी जब स्वभावतः देखा जाता है, तब तप के प्रभाव से ईश्वर-प्रदत्त अतीन्द्रिय एवं अतीतानागत विषयों के ज्ञान का सामर्थ्य मनुष्यों में उत्पन्न हो जाता है—इसमें आश्चर्य ही क्या । बस, वैसे ज्ञानवाले ही ऋषि कहलाते हैं ।

[ आज भी लोहा और शीशा गला कर—उसे पी जाने वाले—और योगाभ्यास वश पचा जानेवाले—वा जमीन में गढा खोद कर सर्वथा वायु रोक कर समाधि में बैठनेवाले—व्यक्ति देखे जाते हैं । बड़े २ वैज्ञानिकों ने इन बातों को देखा है, और साश्चर्य प्रशंसापत्र दिये हैं । ऐसे भविष्यवक्ता भी जिनका कथन पूरा सत्य निकलता है आज भी मिलते हैं । इसलिये यह प्रकृति-नियमों की दुहाई देना बिलकुल व्यर्थ ही है । ]

[ अन्यान्य ग्रन्थों में ग्रन्थकार ने यह विशेषता बताई है कि सूर्यमण्डल से ऊपर के लोकों के तत्त्व भी—( जो अमृत कहलाते हैं ) जिनने जान लिये हों—वे महर्षि कहे जाते हैं, और सूर्यमण्डल तक के 'मर्त्य' तत्त्वों को ही जिनने समझा है, वे ऋषि । ]

(३६) एवमिदमपूर्वमतीन्द्रियार्थावगमसामर्थ्यं तपःप्रभावेणोद्भूयमानं यत्र मनुष्यकुले दृश्यते, स ऋषिराख्यायते । इति दिक् ।

---

संस्कृतव्याख्या

इति दिक् । अयमत्र निष्कर्षः—वेदकर्तृत्वसंबन्धे द्विचत्वारिंशद् विप्रतिपत्तयोऽद्यावधि प्रचलिता ग्रन्थकृता 'शारीरकविमर्शे' सप्रमाणं परिगणिताः । तासु वर्गत्रयं मुख्यं भवति—न केनचित्प्रणीताः, अत एव 'अपौरुषेयाः' वेदा इति प्रथमा प्रतिपत्तिः । ईश्वरप्रणीता वेदा इति द्वितीया । ईश्वरप्रसादेनालौकिकज्ञानमाप्य ऋषिभिः प्रणीता इति तृतीया । इमानि त्रीण्यपि मतानि शिष्टपरिगृहीतानीति दर्शितमधस्तात् । एषामेव चावान्तरभेदा बहवो भवन्ति, शिष्टापरिगृहीता आङ्ग्लानामैतिहासिकानां कल्पनाः संयोज्य च विप्रतिपत्तीनामुक्ता (४२) संख्या संपद्यते ।

तत्र ग्रन्थकृदनया रीत्या तिसृणामपि प्रतिपत्तीनां समन्वयं दर्शयति—यद् वेदशब्दस्तदवान्तरविशेषवाचका ऋग्यजुःसामाथर्वशब्दाश्च द्वेधा श्रुतिष्वेव

---

भाषाटीका

(३६) इस ही प्रकार जिन मनुष्यों वा मनुष्यकुलों में यह नवीन अतीन्द्रियार्थ ज्ञान का सामर्थ्य प्रकट हुआ वे ऋषि कहे जाते हैं ।

[ इस प्रकरण का सारांश यों समझना चाहिये कि—वेदकर्तता के संबन्ध में पूर्वकाल से लेकर अब तक ४२ मत प्रचलित हुए हैं । ग्रन्थकार ने 'शारीरक विमर्श' नामक ग्रन्थ में इन मतों का सप्रमाण निरूपण किया है । इनमें मुख्य तीन हैं—

(१) 'वेद किसी ने भी नहीं बनाये—अतः अपौरुषेय हैं' यह प्रथम मत है ।

(२) दूसरा मत है कि—वेद ईश्वर के बनाये हुए हैं ।

(३) ईश्वर के अनुग्रह से अलौकिक ज्ञान प्राप्त करनेवाले ऋषियों द्वारा वेद निर्मित हैं—यह तीसरा मत है ।

ये तीनों ही मत शिष्ट समाज में प्रचलित हैं—यह प्रमाणपूर्वक दिखाया जा चुका है । इन तीनों के अवान्तर भेद बहुत हैं—और यूरोपीय समालोचकों व उनके अनुयायियों के मतों को मिलाकर यह मत-संख्या ४२ हो जाती है ।

ग्रन्थकार ने इन तीनों का सामञ्जस्य इस प्रकार दिखाया है कि—वाक्, वेद और वेद के अवान्तर-विशेष-ऋग्, यजुः, साम आदि शब्द श्रुतियों में ही दो प्रकार

संस्कृतव्याख्या

व्यवहृताः-वैज्ञानिकार्थपराः, ज्ञानपराश्च । अव्ययपुरुषकलासु अन्यतमा वाक्, ऋगयजुःसामाथर्वरूपेण तद्वितानश्चैषां शब्दानां वैज्ञानिकोऽर्थः, योऽस्माभिरुपोद्घाते प्रपञ्चितः, व्याख्यायामप्यस्यां संक्षेपेण निदर्शितपूर्वश्च । ज्ञानपरो वेदशब्दोऽपि ज्ञाने, तत्संबद्धे (जनके जन्ये वा) शब्दसमूहे, ज्ञानविषयीभूतेषु लौकिकेष्वलौकिकेषु चार्थेषु व्यासज्यवृत्तिः ।

एषां त्रयाणामप्यर्थानां विशेष्यविशेषणभावे कामचार उन्नेयः—सर्वविधलौकिकालौकिकार्थविषयकं शब्दाभिव्यक्तिप्रयोजकम्, अभिव्यक्तशब्दप्रयोज्यं वा ज्ञानं वेदः, तादृशज्ञानविषयीभूतास्ते तेऽर्था वेदः, तत्तज्ज्ञानानुवेधकः तत्तदर्थज्ञानप्रयोज्याभिव्यक्तिकः, अभिव्यक्तः सन् तत्तदर्थज्ञानप्रयोजको वा शब्दसमूहो वेद इति ।

समुदाये च प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते—इति व्याख्यातपूर्वन्यायेन केवले ज्ञाने, केवले शब्दसमूहे, केवलेषु अर्थेष्वपि च वेदशब्दप्रवृत्तिः ।

---

भाषाटीका

के अर्थों में प्रयुक्त मिलते हैं-वैज्ञानिक पदार्थों के वाचक और ज्ञान के वाचक। अव्ययपुरुष की कलाओं में वाक् एक कला है, जो ऋक्, यजुः, साम रूप से विस्तृत होती है। यही सर्वत्र व्याप्त है। इस वैज्ञानिक रहस्य का निरूपण आरम्भ में उपोद्घात में किया गया है और इस व्याख्या में भी संक्षेपतः पहले लिखा जा चुका है। दूसरा जो वेद शब्द का ज्ञान अर्थ है-उसमें भी कई प्रकार हो जाते हैं। ज्ञान, विना अर्थ ( विषय ) के नहीं होता, कोई न कोई विषय उस में अनुप्रविष्ट रहता ही है, और उस विषय का वाचक कोई शब्द भी ज्ञान में अनुप्रविष्ट रहता है। यों ज्ञान, उससे संबद्ध शब्दसमूह और ज्ञान के विषय लौकिक वा अलौकिक अर्थ— ये सब ज्ञान की परिधि में आ जाते हैं, और ये सब ही सम्मिलित रूप में वा पृथक् पृथक् रूप में भी वेद कहलाते हैं।

इन तीनों का विशेष्य-विशेषण-भाव स्वेच्छा पर अवलम्बित है। सब प्रकार के लौकिक वा अलौकिक अर्थों की अभिव्यक्ति करानेवाले शब्द वेद हैं, अथवा अभिव्यक्ति करानेवाले शब्दों द्वारा प्रतिपाद्य ज्ञान, वा उन शब्दों के मूल में रहनेवाला ज्ञान, ( जिसके आधार पर वे शब्द बोले गये ) वेद है। अथवा उस ज्ञान के विषयीभूत जो अर्थ हैं, वे वेद हैं। यों वेद शब्द अनेक अर्थों का वाचक हो गया और समुदायवाचक शब्द अवयवों के भी बोधक हुआ करते हैं। इस न्याय से केवल ज्ञान में या शब्द-समूहमात्र में अथवा केवल अर्थमात्र में भी वेद शब्द का प्रयोग हो सकता है।

संस्कृतव्याख्या

वेदनं वेदः, विद्यते (ज्ञायते) अनेन, वेद्यते-(ज्ञाप्यते) अनेनेति वा वेदः, विद्यन्ते, वेद्यन्ते वा ये ते वेदाः-इति विभिन्नाभिर्व्युत्पत्तिभिर्विभिन्नेष्वर्थेषु विभिन्ना वेदशब्दा इति वाभ्युपगम्यताम्।

तत्र केवलज्ञानाभिप्रायेण प्रयुक्ते वेदशब्दे वेदस्यापौरुषेयत्वम्, ज्ञानस्य स्वस्वरूपेण नित्यत्वात्, केनाप्युत्पादयितुमशक्यत्वात्। ईश्वररूपा वेदा इत्यप्यत्रैव शक्यते वक्तुम्—ईश्वरस्य ज्ञानरूपतायाः श्रुतिस्मृत्यादिषु सर्वत्र व्यवहृतत्वात्।

ज्ञानविषयीभूतार्थाभिप्रायेण, केवलार्थाभिप्रायेण लौकिकालौकिकार्थविषयकविशिष्टज्ञानाभिप्रायेण वा प्रयुक्ते वेदशब्दे ईश्वरनिर्मिता वेदाः, अर्थानामीश्वरनिर्मितत्वात्, तादृशज्ञानस्यापि महर्षिभिरीश्वरप्रसादेनैव लब्धत्वाच्च।

तत्रापि तादृशज्ञानाभिप्रायेण ईश्वरनिःश्वसितं वेदाः, ज्ञानस्य नित्यत्वेन, अर्थोपहितत्वमात्रस्येश्वरसंपादितत्वेन प्रणीतत्वकथनस्यासामञ्जस्यात्। निःश्वसितत्वं तु ततो निष्क्रान्तत्वमिति निरूपितं प्राक्। तत्तदर्थपरत्वे च ईश्वरप्रणीता इति युक्तमेव।

---

भाषाटीका

वेद शब्द की व्याकरण की रीति से अनेक प्रकार की व्युत्पत्ति होने के कारण भी उपर्युक्त अनेक अर्थ हो जाते हैं। जिससे ज्ञान हो वह वेद, ज्ञान ही वेद, वा जिसका ज्ञान हो वह वेद यों भिन्न भिन्न अर्थ व्युत्पत्तिभेद से ही आ जाते हैं।

तो अब यों विचारिये कि जब वेद शब्द केवल शुद्ध ज्ञान अर्थ में प्रयुक्त होता है, तो वेद अपौरुषेय हैं, क्योंकि ज्ञान को कोई उत्पन्न नहीं कर सकता, वह नित्य है—यह वेदान्तादि शास्त्रों का दृढ सिद्धान्त है। ज्ञानरूप वेद को हम ईश्वररूप भी कह सकते हैं, क्योंकि श्रुति और स्मृतियों में ईश्वर को ज्ञानरूप बताया गया है।

वेद शब्द का केवल ज्ञान रूप अर्थ न मानकर—यदि लौकिक वा अलौकिक अर्थविषयक विशिष्ट ज्ञान ( जिसे शास्त्रों में वृत्त्यात्मक ज्ञान कहते हैं ) अर्थ मानें, वा ज्ञान के विषयीभूत अर्थ वेद हैं—ऐसा कहें—तो हम कह सकते हैं कि वेद ईश्वर द्वारा निर्मित हैं। क्योंकि अर्थ का बनानेवाला ईश्वर ही है, और महर्षियों को उस अलौकिक ज्ञान की प्राप्ति भी ईश्वर की कृपा से ही हुई थी। उसका निर्माता ईश्वर ही कहा जा सकता है।

वृत्त्यात्मक ज्ञान में भी ज्ञान अंश नित्य है-वह ईश्वर द्वारा उत्पन्न नहीं होता, इस कारण वेद ईश्वर-प्रणीत है-ऐसा न कह कर—वेद ईश्वर के

संस्कृतव्याख्या

ज्ञानानुवेधकशब्दसमूहाभिप्रायेण प्रयुक्ते वेदशब्देऽपि शब्दनित्यत्ववादिनामपौरुषेया वेदाः, अनित्यत्ववादिनान्तु ईश्वरप्रणीताः । पुरुषाणान्तु न पश्यन्त्या वाच उत्पादने व्यापार इति निरूपितं प्राक् ।

अथ आदिप्रवक्तॄणां ज्ञानप्रयोज्यशब्दसमूहाभिप्रायेण, श्रोतॄणां ज्ञानप्रयोजकशब्दसमूहाभिप्रायेण वा प्रयुक्ते वेदशब्दे तु ऋषिप्रणीताः वेदाः । ऋषिभिरेव ईश्वरप्रसादेन ज्ञानमाप्य मन्त्रब्राह्मणात्मकशब्दसमूहस्य प्रयुक्तत्वात् । तत्रापि शब्दनित्यतावादे वाक्यरचनाभिप्रायेण प्रणीतत्वं व्यवहरणीयम्, अनित्यतावादे तु शब्दाभिप्रायेणापि । वाक्यस्फोटवादिनां वाक्यनित्यतापक्षे तु तादृशवाक्याभिव्यञ्जकप्रथमध्वनिकर्तृत्वमात्रेण प्रणेतृत्वमिति यथायथं भाव्यम् ।

तपोयोगादिना ईश्वरप्रसादमवाप्य, समाधौ तत्तत्स्वर्गापूर्वदैवतादिज्ञानं यज्ञस्वर्गादिकार्यकारणभावज्ञानं च प्रत्यक्षरूपमवाप्य महर्षिभिर्ऋषिभिश्च मन्त्रा ब्राह्मणानि च प्रकटीकृतानि, तत्तेषु मन्त्रेषु त एव ऋषित्वे-

---

भाषाटीका

निःश्वास रूप हैं—अर्थात् ईश्वर से निकले हैं—यह भी कहा जाता है ।

ज्ञान के स्वरूप में प्रविष्ट शब्दों के समूह ही वेद हैं—ऐसा मानने पर भी वेद अपौरुषेय हैं—क्योंकि शब्दनित्यता पक्ष में शब्दों को अनादि नित्य माना है । शब्दों को अनित्य माननेवालों के मत में भी 'पश्यन्ती' वाक् के शब्द साक्षात् ईश्वर द्वारा ही प्रेरित हैं—यही सिद्ध होता है । क्योंकि पश्यन्ती वाणी का निर्माण पुरुषसाध्य नहीं होता—यह पहले बताया जा चुका है ।

जब सर्वसाधारण के ज्ञान के लिये ऋषियों द्वारा प्रयुक्त शब्दों के समूह का नाम वेद है—यह माना जाय, तब यही कहा जायगा कि वेद ऋषिप्रणीत हैं । उस शब्द-रचना रूपी वेद के निर्माता महर्षिगण ही थे, क्योंकि ईश्वरानुग्रह से ज्ञान प्राप्त कर के-ऋषियों ने ही मन्त्र एवं ब्राह्मणों की रचना की है ।

यहाँ भी शब्दनित्यता मत में यही कहना पड़ेगा कि उन शब्दों की आनुपूर्वी (संनिवेश) ऋषियों ने ही बनाई है, अथवा शब्द वा वाक्यों का प्रथम अभिव्यञ्जन ऋषियों ने अपनी ध्वनि द्वारा किया है ।

इस ही का नाम 'निर्माता' इस पक्ष में मानना पड़ता है, अन्यथा सब ही ग्रन्थ अपौरुषेय हो जाँयगे ।

आज भी मन्त्रों वा सूक्तों के साथ उन ऋषियों के नाम उपलब्ध होते हैं, और उन उन ऋषियों के नाम से ही प्रसिद्ध ब्राह्मण ग्रन्थ मिलते हैं । मन्त्र और

संस्कृतव्याख्या

नाद्यापि स्मर्यन्ते, ब्राह्मणान्यपि च तत्तदृषिनाम्ना प्रसिद्ध्यन्ति । ते च मन्त्र-ब्राह्मणात्मका वेदाः शिष्यप्रशिष्यपरम्परायां प्रकीर्णरूपेण प्रचरन्ति स्म । काले तु व्यासोपज्ञं तेषां संहितारूपेण ग्रन्थनमभूत् । शाखाभेदश्च प्रवक्तॄणामभिप्रायभेदादुच्चारणभेदाद्वाभूदिति स्पष्टं पुराणेषु । शाखाभि-भिन्नास्तास्ताः संहिता व्यासशिष्यपरंपरानाम्नैवाद्यापि व्यवह्रियन्ते ।

ऋग्-यजुः-सामशब्दाश्च पद्य-गद्य-गेयभेदेन विभिन्नाया रचनाया अवबोधकाः, तत्तत्प्राधान्येन संहितास्तत्तन्नामभाजः । तत्रापि ऋक्संहिता ऋषिक्रमेण, यजुःसंहिता तु यज्ञोपयोगक्रमेण संग्रथितेत्यादि स्पष्टं तत्पर्या-लोचकानाम् । अथर्वसंहिता तु अथर्वणा ऋषिणा संग्रथितेति ग्रन्थितुर्नाम्नैव प्रसिद्धा । गद्यादिरचनात्रैविध्याभिप्रायेण त्रयो वेदा इतिव्यवह्रियते, ऋत्विजां चतुष्ट्वाभिप्रायेण तु चत्वारो वेदाः, शान्तिकपौष्टिकाद्यर्थमथर्ववेदस्यापि ब्रह्म-णाऽध्येयत्वादिति सर्वं वेदभाष्यादिषु स्पष्टम् ।

काले च तत्तच्छब्दार्थेऽपि संदेहमापन्ने निघण्टुनिरुक्तव्याकरणादीनां

---

भाषाटीका

ब्राह्मण रूप वेद प्रकट होने पर भी वे सब एकत्रित न थे, किन्तु शिष्य प्रशिष्यों की परम्परा में प्रकीर्ण रूप से प्रचलित थे । समय पाकर श्रीवेदव्यासजी ने उनका संग्रह किया, और वह संग्रह 'संहिता' ग्रन्थ नाम से प्रसिद्ध हुआ । फिर उनकी शिष्य-परम्परा में अध्ययन वा प्रचार करनेवालों के अभिप्रायभेद वा उच्चारण-भेद से शाखाओं का भेद हो गया है—यह पुराणों में प्रसिद्ध है । वे शाखाएँ आज भी व्यास जी की शिष्य-परंपरा के मुनियों के नाम से ही विख्यात हैं ।

ऋक्, यजुः और साम शब्द—गद्य, पद्य और गेय तीन प्रकार की विभिन्न रचनाओं के बोधक हैं, और जिस संहिता में जिस ( गद्य-पद्य ) रचना की प्रधान-ता रही, वह संहिता उस ही के नाम से प्रसिद्ध हो गई । इनमें ऋक्-संहिता ऋषियों के क्रम से ग्रथित है, यजुः संहिता में यज्ञ के उपयोग में आने वाले मन्त्र क्रम से रक्खे गये हैं । अथर्व संहिता को अथर्वा नामक ऋषि ने ग्रथित किया है अतः यह अथर्वा ऋषि के नाम से ही प्रसिद्ध है । रचना-भेद के कारण वेद तीन ही हैं, जो कि वेदत्रयी नाम से प्रसिद्ध हैं । यज्ञ में ४ ऋत्विग् होते हैं—उनके उपयोग के अनुसार विभाग करने पर वेद चार होते हैं । शान्ति और पुष्टि आदि कार्य के लिये शान्ति-पुष्टि प्रधान अथर्व वेद का भी अध्ययन आवश्यक होता है । अतः यज्ञ के उपयोग में चार वेद आते हैं । उक्त सब विषय वेदभाष्यादि में सुस्पष्ट है ।

अब आगे समय-समय पर वैदिक शब्दों में भी सन्देह होने पर उनके

संस्कृतव्याख्या

निर्माणं प्रसरणं चेति सर्वमेतन्निरुक्तकृता भगवता यास्केन प्रथमाध्यायान्त उक्तम् ।

"साक्षात्कृतधर्माण ऋषयो बभूवुः, ते अवरेभ्यो असाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ।" इति ।

'साक्षात्कृतधर्माणः' इति धर्मशब्दस्तत्तद्वस्तुतत्त्ववाचकः, तन्मूलक एव चास्माकं कर्तव्यापरपर्यायो धर्मोऽपि । 'मन्त्रान् संप्रादु'रिति विद्यां तत्तद्वाचकशब्दद्वारेण (मन्त्रद्वारेण) दत्तवन्तः । 'उपदेशाय ग्लायन्त' इति उपदेशमात्रेण धारयितुमक्षमा ग्रन्थनिर्माणे प्रवृत्ताः । 'इमं ग्रन्थ'मिति तत्र व्याख्यातव्यं निघण्टुम् । 'वेद'मिति संहिता-ब्राह्मण-विभागरूपेणाद्यत्वे स्थितं ग्रन्थसमूहम्, 'वेदाङ्गानि' च प्रसिद्धान्येवेति । बिल्मशब्दश्च प्राग् व्याख्यातः ।

बृहद्देवता सर्वानुक्रमणी चाप्येतमर्थमेवमेव बोधयति ।

अथ वेदशब्दवाच्या ऋगादिशब्दवाच्याश्च वैज्ञानिका अर्था अपि त्रैविध्यमापद्यन्ते । तत्रापि च अपौरुषेयत्वाद्यास्त्रेधापि प्रतिपत्तयः समन्विता भवन्ति । अव्ययपुरुषकलारूपा सर्वमूलभूता वाक्, तद्विस्ताररूपं प्रतननं चेति सर्वथाप्यपौरुषेयम् । सर्वादिभूतायास्तस्याः केनाप्युत्पादयितुमशक्य-

---

भाषाटीका

निराकरण के लिये निघण्टु, निरुक्त और व्याकरण आदि की रचना हुई, यह निरुक्तकार श्री यास्क ने प्रथमाध्याय के अन्त में स्पष्ट लिखा है । उस निरुक्त वाक्य का अर्थ यह है—

"पहले ऐसे ऋषि हुए-जिनने स्वयं वस्तुधर्मों का साक्षात्कार किया, और प्रत्यक्ष करने के अनन्तर जो उन धर्मों के प्रत्यक्ष करने में असमर्थ थे-उन मनुष्यों को मन्त्र द्वारा उपदेश किया-अर्थात् प्रत्यक्ष किये गये वस्तुधर्मों के ज्ञान को मन्त्ररूपी वाणी द्वारा दूसरों को समझाया । जब प्रकीर्ण-रूप में उस वाणी को स्मरण रखने का भी सामर्थ्य न रहा-और उसमें शिष्य-परंपरा को श्रम होने लगा, तब वेद-संहिता, ब्राह्मण, वेदाङ्ग आदि ग्रन्थों का संग्रह किया गया । साथ ही निघण्टु नाम का कोश भी संगृहीत हुआ । जिससे सब लोगों को भिन्न भिन्न रूप में सब विषयों का विस्पष्ट ज्ञान होने लगा" । इसी प्रकार यह विषय वृहद्देवता आदि ग्रन्थों में भी निरूपित है ।

वाक् शब्द, वेद-शब्द और ऋगादि शब्दों का जो वैज्ञानिक अर्थ बताया गया है-उसमें भी इसी प्रकार तीन भेद होते हैं । अव्यय पुरुष की कलारूप मूलभूत जो वाक् आरंभ में बताई गई है, और उसके विस्तार रूप जो ऋगादि हैं, वे सर्वथा अपौरुषेय हैं । वह वाक् सबकी जननी है-उसे कोई उत्पन्न नहीं कर सकता । वह

संस्कृतव्याख्या

त्वात्, पुरुषस्वरूपान्तर्गतायाः पौरुषेयत्वासंभवात्। अव्ययपुरुषस्येश्वरत्वेन व्यवहारे ईश्वररूपापि सा शक्यते वक्तुम्। अथाव्ययशक्ति-समुल्लासे क्षरपुरुषविस्तारे प्रथमं वाङ्मयं स्वयम्भूमण्डलं प्रादुर्भवति, ऋगाद्यास्तस्य प्राणाः। ततः प्रसृत्य मुख्यप्रजापतौ सूर्येऽनुप्रविष्टा वाग्रूपा वेदा ईश्वरनिःश्वसितानि, ईश्वरनिर्मिता वा शक्यन्ते वक्तुम्। ऋगाद्याश्च सूर्यमण्डलसंबन्धिनस्तथैव। इमे एव "गायत्रीमातृका वेदाः" उच्यन्ते, गायत्र्याः सूर्यमण्डलशक्तिरूपतया श्रूयमाणत्वात्। तदनु सौरजगति समुत्पद्यमानेषु पदार्थेषु अनुप्रविष्टा वाक्, ऋगाद्याश्च ऋषिकृताः—प्राणभूतानाम् ऋषीणामेव वाचः। ऋषीणामेव प्रथमविवर्तभूतत्वादिति सर्वमिदं सृष्टिप्रक्रियापरिशीलने श्रीगुरुचरणानां ग्रन्थान्तरेषु च सुस्फुटम्, नेह प्रपञ्चयितुं सुशकम्, विस्तरभयात्। वैज्ञानिकवेदानां ग्रन्थरूपाणां वेदानां इति च शाखाभेदादिकमपि सर्वं तुल्यं सर्वं च समञ्जसम्, न कोऽपि विवादावसर शारीरकविमर्शे व्याख्यातं तत्रैव कणेहत्य निरीक्षणीयम्।

इति तृतीया प्रवृत्तिः।

---

भाषाटीका

पुरुष के स्वरूप में प्रविष्ट है, अर्थात् पुरुष-रूप है, इसलिये पौरुषेयी नहीं हो सकती। अव्यय पुरुष ही ईश्वर कहा जाता है, अतः उस वाक् को अथवा उन ऋगादि वेदों को ईश्वर रूप भी कह सकते हैं। अनन्तर अव्यय की शक्ति द्वारा क्षर-पुरुष की कलाओं का विस्तार होने पर सब से पूर्व वाङ्मय स्वयम्भूमण्डल प्रादुर्भूत होता है। ऋक्, यजुः, साम ही उस मण्डल के प्राण हैं। वहाँ से निकल कर फैलते हुए वाक् और वेदों का मुख्य प्रजापति सूर्य में जब अनुप्रवेश होता है, तब उन्हें ईश्वर निःश्वसित वा ईश्वरनिर्मित कह सकते हैं। वैदिक परिभाषा में ये गायत्रीमातृक वेद कहाते हैं—क्योंकि सूर्यमण्डल में ही शक्ति रूप से गायत्री विराजमान रहती हैं।

अब आगे सूर्यमण्डल से ये ऋगादि वेदरूप प्राण सब जगत् के पदार्थों में व्याप्त होते हैं, ये तीसरे प्रकार के वैज्ञानिक ऋग्, यजुः, साम हुए। इनको ऋषिकृत कहा जा सकता है, क्योंकि वाक् का पहला रूप ऋषिप्राण ही है—यह आरम्भ में ही बता चुके हैं। अतः उन ऋषिप्राणों द्वारा ही इन ऋगादि वेदरूप प्राणों का जगत् के सब पदार्थों में विस्तार होता है। इस प्रकार प्राणरूप ऋषि और उनके ज्ञान—वेदज्ञान में बहुत कुछ समानता है। प्राणरूप वेदों में भी शाखा—भेद है, और उसकी वेद-ग्रन्थों के शाखा भेद से बहुत कुछ समानता है—यह भी श्री गुरुजी ने 'शारीरक विमर्श' में विस्तार से बताया है। आगे इस ग्रन्थ में भी यह विषय पुनः आवेगा। यहां इस से अधिक विस्तार करना अनुपयुक्त है।

यह तीसरे प्रकार के ऋषियों का निरूपण समाप्त हुआ।

——:०:——

## अथ चतुर्थी प्रवृत्तिः

(१) अथान्यन्मान्त्रवार्णिकमृषित्वं वाक्यसापेक्षम् । "यस्य वाक्यं स ऋषिः, या वाक्येनोच्यते, सा देवता" इति परिभा-

---

## अथ चतुर्थी प्रवृत्तिः ।

### संस्कृतव्याख्या

एवमृषिशब्दस्य तृतीयविधोऽर्थो मनुष्यरूप उपपादितः । अथ चतुर्थविधमाख्यातुमुपक्रमते—यस्य वाक्यं स ऋषिः । निरुक्त-बृहद्देवतादिषु ऋष्यनुक्रमण्यां च स्पष्टमेतत् । येऽपि च वेदानामपौरुषेयत्वमीश्वरकृतत्वं वास्थिषत, तैरपि मन्त्राणामर्थनिर्वचनकाले—येषां हृदि मन्त्राः प्रादुर्भूताः, तेषामेव वक्तृत्वमनुसन्धेयं भवति । अन्येन प्रकारेणार्थनिर्वाहस्याशक्यत्वात् । न हि—

"योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः"

इत्यादौ वक्तारमनुसन्धाय, ईश्वरं वा वक्तारमनुसन्धायार्थोपपत्तिः संभवति । अथात्र मन्त्रप्रयोक्ता यजमानादिरेव वक्तृत्वेनानुसन्धातव्य इति समाधीयते चेत्, तथापि

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥
( विश्वामित्र ऋषिः, नद्यो देवताः । ऋ० सं०३।३३।५ )

[ विश्वामित्रो नदीः प्रतिब्रूते । ऋतावरीः-ऋतमुदकं तद्वत्यो हे नद्यः, यूयं मे-विश्वामित्रस्य मम, सोम्याय—सोमसम्पादिने, वचसे, तदर्थम्, एवैः—शीघ्रगमनेभ्यः, मुहूर्तम्—मुहूर्तमात्रम्, उपरमध्वम्—उपरता भवत । सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते—कुशिकस्य-राजर्षेः, सूनुः विश्वामित्रोऽहम्, बृहती—महत्या, मनीषा-मनीषया-स्तुत्या, अवस्युः—आत्मनो रक्षणमिच्छन् सन्, सिन्धुम्—शुतुद्रीं त्वाम्, अच्छ—आभिमुख्येन, प्र अह्वे -प्रकर्षेणाह्वयामि । ( इति सायणमाधवीयं भाष्यम् । ) ]

---

## ऋषिशब्द का चतुर्थ अर्थ

### भाषाटीका

(१) उपर्युक्त ऋषियों से भिन्न, मन्त्रों में वक्ता रूप से माने गये—एक प्रकार के ऋषि और होते हैं,; जिनका कि मन्त्रों में वक्तृत्वरूप से उल्लेख है, और जो

षितत्वात् । मन्त्रो हि वाक्यं वा वाक्यावयवो वा वाक्य-

---

संस्कृतव्याख्या

कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनुगा इव तस्थिमेन्द्रायेन्दो परिस्रव ॥
( आङ्गिरसः शिशुनामा ऋषिः, सोमो देवता । ऋ० सं ९।११२।३ )

[ ऋषिः प्रवृत्तसोमयागः सन् दशापवित्रात्सोमेऽक्षरति प्रतिबन्धकपापापनुत्तये पुरश्चरितानुकीर्तनपुरःसरमध्येषणां चकार । तावत् अहं कारुः—स्तोमानां कर्तास्मि । ततः—पिता पुत्रो वा, भिषक्—भेषजकृत्—यज्ञस्य ब्रह्मेत्यर्थः । तथा उपलप्रक्षिणी बालुकासु यवान् हिनस्ति तथाभूता, यद्वा दृषदादिषूपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति, अथवा धानासक्तुकरम्भादीनां कारिका । नना—माता दुहिता वा । एवं सर्वेषां परिचरणेन, नानाधियः—नानाकर्माण , वसूयवः—धनकामा वयम्, अनुतस्थिम—लोकमन्वास्थिताः स्मः । तत्र दृष्टान्तः—गा इव—गावो यथा गोष्ठमनुतिष्ठन्ति, स्वपयःप्रदानेन परिचरन्ति वा, एवं वयमपि परिचरामः । एतज्ज्ञात्वा हे इन्दो सोम ! इन्द्राय परिस्रव दशापवित्रात् क्षर । ( इति सायणमाधवीयं भाष्यम् ) ]

अकारि त इन्द्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्याम् ।
सुपेशसं वाजमाभरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥
( नोधा गौतम ऋषिः, इन्द्रो देवता । ऋक् १।६३।९ )

[ हे इन्द्र ! ते—तव, गोतमेभिः—गन्तृतमैरेतत्संज्ञैर्ऋषिभिः, अकारि—स्तोत्रं कृतमित्यर्थः । एतदेव स्पष्टीकरोति—ब्रह्माणि—मन्त्रजातानि, नमसा—हविर्लक्षणेनान्नेन सह, हरिभ्याम्—अश्वाभ्यां युक्ताय तुभ्यम्, ओक्ता—आभिमुख्येन उक्तानि । यद्वा मर्यादायामाकारः, यथाशास्त्रं प्रयुक्तानि । स त्वं सुपेशसं बहुविधरूपयुक्तम, वाजम्—अन्नम्, नः— अस्मभ्यम्, आभर—आहर—देहीति यावत् । धिया—बुद्ध्या, कर्मणा वा, प्राप्तधन इन्द्रः, प्रातःकाले अस्मद्रक्षणार्थम्, जगम्यात्—आगच्छतु । ( इति सायणमाधवीयं भाष्यम् ) ]

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥
( प्रस्कण्व ऋषिः, अग्निर्देवता । ऋ. सं १।४५।३ )

---

भाषाटीका

वाक्य-विचार से समझे जाते हैं । निरुक्त सर्वानुक्रमणी, बृहद्देवता आदि में एक परिभाषा मानी गई है कि-जिस वाक्य का जो वक्ता होता है-वह

समुदायो वा । सर्वथाऽपि येनाऽयं मन्त्रोऽर्थं दृष्ट्वोपदिष्टः,

संस्कृतव्याख्या

[ हे महिव्रत–प्रभूतकर्मन्, जातवेदः–अग्ने ! प्रस्कण्वस्य–कण्वपुत्रस्य महर्षेः, हवम्–आह्वानम्, श्रुधि–शृणु, तत्र चत्वारो दृष्टान्ताः–प्रियमेधात्रिविरूपाङ्गिरोनामकाः। एतेषामाह्वानं यथा शृणोषि तद्वत् । ( इति सायणमाधवीयं भाष्यम् ) ]

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥
( कुत्स आङ्गिरसः ऋषिः, इन्द्राग्नी देवते । ऋ० सं० १।१०९।२ )

[ हे इन्द्राग्नी ! वाम्–युवाम्, भूरिदावत्तरा—अतिशयेन बहुधनस्य दाताराविति, अश्रवं हि—अश्रौषं खलु । कस्मात् पुरुषात् ? विजामातुः—श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः । उत वा—अपि च, स्यालात्–स्यालः कन्याभ्राता, स यथा भगिनीप्रीत्यर्थं बहुधनं प्रयच्छति, ततोऽप्यतिशयेन दाताराविन्द्राग्नी । घ इति पादपूरणः । तथा च सति, अथ–अनन्तरम्, हे इन्द्राग्नी, युवभ्याम्, सोमस्य प्रयती –अभिषुतस्य सोमस्य प्रदानेन सह, नव्यम्–नवतरं—प्रत्यग्रम्, स्तोमं–स्तोत्रम्, जनयामि–निष्पादयामि । ( इति सायणमाधवीयं भाष्यम् ) ]

आभोगयं प्रयदिच्छन्त एतनापाकाः प्राञ्चो मम केचिदापयः ।
सौधन्वनासश्चरितस्य भूमना गच्छत सवितुर्दाशुषो गृहम् ।
( कुत्स ऋषिः, ऋभवो देवताः । ऋ. १।११०।२ )

[ हे ऋभवः ! अपाकाः–परिपक्वज्ञानाः, प्राञ्चः पूर्वकालीनाः, मम आपयः–प्रापयितारो मदीया ज्ञातयः केचित्, एवम्भूता ये केचन यूयम्, आभोगयम्–उपभोग्यं सोममिच्छन्तः, यद्–यदा, प्र एतन—तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः, तदुक्तं यास्केन—ऋभुर्विभ्वा वाज इति त्रयः पुत्राः सुधन्वन आङ्गिरसस्य बभूवुः' ( निरु० ११।१६ ) इति । कुत्सोऽप्याङ्गिरसः । अतस्तेन मदीया ज्ञातय इत्युक्तम् । हे सौधन्वनासः–सुधन्वनः पुत्राः ! तदानीं चरितस्य समुपार्जितस्य तपसः, भूमना–भूम्ना बहुत्वेन, दाशुषः–हवींषि दत्तवतः, सवितुः सोमाभिषवं कुर्वतः, यजमानस्य संबन्धि यज्ञगृहम् अगच्छत–तपसा लब्धसोमाः सन्तः कृतपानाः यूयं गतवन्तः यद्वा–दाशुषः–प्रातःसवनादिषु, अग्न्यादिभिरपसारितेभ्यः ऋभुभ्यः सोमपानं दत्तवतः

भाषाटीका

उस वाक्य का ऋषि कहलाता है, और उस वाक्य में जिसका वर्णन रहता है, वा वाक्य द्वारा जो संबोधित होता है, वह उसका देवता कहा जाता है । मन्त्र पूर्ण वाक्यरूप होते हैं, कहीं एक महावाक्य के अवयव होते हैं और कहीं वाक्यों के समुदायरूप भी मन्त्र होते हैं । जो भी हो, मन्त्र के

सोऽस्य मन्त्रस्य ऋषिरुच्यते । ऋषिभिरेवैते मन्त्राः पुरोपदिष्टाः,

संस्कृतव्याख्या

सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यमगच्छत प्राप्ताः । (इतिसायणमधवीयं भाष्यम्)]

इत्यादिषु शतशो मन्त्रेषु तत्तदृषीणामस्मच्छब्देन ग्रहणादतिरिक्ता नास्ति कापि गतिः, नहि सर्वः प्रयोक्ता कुशिकस्य सूनुर्भवति, नापि सर्वः कारुर्भवति, न वा सर्वस्य नना उपलप्रक्षिणी भवति । 'अकारि त' इत्यादौ त्रये च स्तोतृत्वेन वक्ता स्वयं स्वगोत्रं नाम, अन्येषां च स्तोतॄणां नाम निर्दिशति, 'नव्यं स्तोमं जनयामि' इति स्वस्य कर्तृत्वं ख्यापयति च । अन्तिमे च "मम प्राश्वः" इति स्तोतव्यं प्रति ब्रुवन् स्वस्य तद्वंशजत्वं ख्यापयति ।

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।

स देवाँ एह वक्षति । (ऋ. सं. १ म., १ सू., २ मं.)

इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे (यजुः अ. ४०)

इत्यादिषु पौर्वापर्यानुसन्धानादिकं च ऋषीणामेव वक्तृत्वमभिप्रेत्योपपद्यते, नेतरथा । श्री माधवाचार्यप्रभृतिभिर्भाष्यकारैरपि च सर्वत्र द्रष्टॄणामेव वक्तृत्वमवलम्ब्य व्याख्यानं कृतम् । बृहदारण्यकोपनिषद्भाष्ये (२ अ. ५ ब्रा. १७ कण्डिका) च मधुविद्याप्रसङ्गे 'आथर्वणायाश्विना दधीचे' इत्यादि मन्त्रं व्याचक्षाणाः श्रीशङ्करभगवत्पादा अपि "हे अश्विनाविति मन्त्रदृशो वचनम्" इत्याहुः । तदेव च तुल्यन्यायेनान्यत्राप्यनुसन्धेयं स्यादिति नात्र विवादावसरः । "यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति" (निरु. दै. का. अ ७) । "एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति" (दै. का. अ. ७) इत्यादीनां भगवद्यास्कोक्तीनां च स्पष्टमिदमेव तात्पर्यम् । तथा च द्रष्टॄणामृषीणामेव वक्तृत्वं सर्वत्रानुसन्धेयं भवतीति निर्विवादम् । परं क्वचिद् द्रष्टा ऋषिरन्यमुखेन वक्तव्यं प्रकाशयति । काव्येषु या कविनिबद्धवक्तृणामुक्तिर्दृश्यते, यां च ध्वनिभेदप्रसङ्ग आलङ्कारिकाः 'कविप्रौढोक्तिसिद्धोर्थः', 'कवि निबद्धवक्तृप्रौढोक्तिसिद्धोर्थः' इति पृथग् गणयन्ति, सा प्रक्रिया वेदमुपजी-

भाषाटीका

अर्थ को देखकर, जो मन्त्र का उपदेश करता है, वही उस मन्त्र का ऋषि होता है, यह कहा जा चुका है।

पूर्व समय में ऋषियों ने ही इन मन्त्रों का उपदेश किया था, उन ही का प्रायः

तस्मात् पारोवर्यविदोऽमी द्रष्टार एवैतेषां मन्त्राणां प्रवक्तार

संस्कृतव्याख्या

श्यैव प्रवृत्ता ।

पिप्पल्यः समवदन्तायतीर्जननादधि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥
( अथर्व. सं. का. ६ सू. ६, मं. २ )

[ आयतीः–दीर्घाः, पिप्पलीनामिका ओषधयः, समवदन्त–परस्परं संवादं चक्रुः । किमिति ? तदाह—जननाद् अधि–जन्मतः प्रभृति, यं जीवम्, अश्नवामहै–प्राप्नुयाम । योऽस्मात् जन्मतः प्रभृति सेवते; स पूरुषः, न रिष्याति–क्लिष्टो न भवति। रोगं नाप्नोतीति भावः । ] ( उत्तरार्धं पूर्वार्द्धस्यान्तिमं पदं च पिप्पलीनामुक्तिः )

ओषधयः संवदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ।
( भिषगृषिः, ओषध्यो देवता । ऋ० सं. १०।९७।२२ )

[ओषधयः सर्वाः सोमेन राज्ञा सह संवदन्ते–संवादं कुर्वन्ति, किमिति ? तदुच्यते—यस्मै रुग्णाय, ब्राह्मणः—ओषधिसामर्थ्यज्ञो ब्राह्मणो वैद्यः, कृणोति–करोति, चिकित्साम्, तं रुग्णम्, हे राजन्, पारयामसि—पारयामः । ( इति सायणमाधवीयं भाष्यम् ) ]

इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।
देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ।
( नद्य ऋषिकाः । विश्वामित्रः प्रतिपाद्यः । ऋ० ३।३३।६ )

[ नद्यः प्रत्यूचुः—हे विश्वामित्र ! वज्रबाहुः—बलवान्, इन्द्रः, नदीः—अस्मान्, अरदत्—अखनत् । कथमखनत् ? उच्यते–नदीनाम्–शब्दकारिणीनामपाम्; परिधिम्–परितो निहितम्–उदकमन्तः कृत्वा परितो वर्तमानम्, वृत्रं—मेघम्, अपाहन्–जघान । तस्मिन् हते आपः पतिताः, ताभिर्गच्छन्तीभिर्वयं खाताः । न केवलमखनत्, किं तर्हि ? सविता–सर्वस्य जगतः प्रेरकः, सुपाणिः—शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात् तादृशः, देवः—द्योतमानः, इन्द्रः, अस्मान् अनयत्—मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत् । तस्य–तादृशसामर्थ्योपेतस्य, इन्द्रस्य प्रसवे अभ्यनुज्ञायां वर्तमानाः उर्वीः–उदकैः प्रभूताः, वयं यामः–गच्छामः । न तव वचनादुपरमामहे । ( इति सायणमाधवीयं भाष्यम् । ) ]

इत्यादिषु शतशो मन्त्रेषु भूरि भूरि प्रक्रियेयमाम्रेडयते । तदनया प्रक्रियया निबद्धेषु मन्त्रेषु सूक्तेषु वा बहुत्र द्रष्टॄणामृषीणां स्थाने तन्निबद्धानां वक्तॄणामेव नाम ऋषित्वेन व्यवहृतं दृश्यते । त इमे चतुर्थविधा आरोपिता गौणा ऋषय इति भावः ।

भाषाटीका

वह वाक्य माना जाता है–इसलिये अवार, पार जानने वाले वक्तारूप ऋषि और

ऋषयः प्रायेण दृश्यन्ते ।

(२) क्वचित्पुनरनृषयोऽप्येषामृषयो निर्दिश्यन्ते, वक्तृत्वेन विवक्षणात्, तेषु चेदमृषित्वं गौणं द्रष्टव्यम्, काल्पनिकत्वात् ।

(३) तथा हि-पञ्चविधो मन्त्राणां वर्गो भवति-भाववृत्तम्, देवस्तवः, वक्त्रात्मस्तवः, देवात्मस्तवः, कयोश्चित् संवादो वा ।

(४) सृष्टिक्रमनिरूपणं भाववृत्तम् । प्राणदेवानां स्वरूप-धर्मप्रदर्शनं देवस्तवः । तयोरयं मन्त्रप्रणेतैव ऋषिः । द्रष्टृत्वाच्च वक्तृत्वाच्च । देवता तु तत्र सृष्टिविषयो वा, प्राणदेवा वा ।

---

संस्कृतव्याख्या

प्रायेण दृश्यन्ते । द्रष्टार एव वक्तृत्वेनानुसन्धीयन्ते प्रायेण, तत्र सर्वत्र तृतीयविधाश्चतुर्थविधाश्चाभिन्ना एवेत्यर्थः ।

कतिविधा मन्त्रेषु प्रतिपाद्य-विषयाः, कुत्र वा कल्पिता ऋषयो भवन्तीति स्पष्टीकर्तुं प्रतिपाद्यविषयभेदाद्, मन्त्राणां विभागमाह-**तथाहि पञ्चविधो ।** सुस्पष्टार्थमिदम् ।

---

भाषाटीका

द्रष्टारूप ऋषि प्रायः एक ही होते हैं ।

(२) किन्तु कहीं कहीं द्रष्टा ऋषि अपने आप को वक्ता रूप से प्रकट न कर किसी अन्य को वक्ता बना देता है, वहां वे वक्तारूप से विवक्षित व्यक्ति चौथे प्रकार के ऋषि माने जाते हैं। यह अवश्य समझ लेना चाहिये कि इन चौथे प्रकार के व्यक्तियों में यह ऋषित्व गौण रहता है-अर्थात् चतुर्थ प्रकार के 'वक्तारूप' ऋषि कल्पित हैं ।

(३) इस विषय को यों समझना चाहिये कि मन्त्र पांच भागों में विभक्त किये गये हैं—१—भाववृत्त २—देवस्तव ३—वक्त्रात्मस्तव ४—देवात्मस्तव और पांचवां किन्हीं दो का संवाद ।

(४) जिन मन्त्रों में सृष्टि की उत्पत्ति का विषय वा क्रम बताया गया हो, उनको भाववृत्त मन्त्र कहते हैं। जिन में प्राणरूप देवताओं के स्वरूप वा धर्म का निरूपण किया गया हो-वे मन्त्र देवस्तवात्मक कहे जाते हैं। इन दोनों प्रकार के मन्त्रों के ऋषि वे ही हैं—जिनने ईश्वर से ज्ञान प्राप्तकर इन मन्त्रों को प्रकट किया है, अर्थात् इन मन्त्रों के द्रष्टा तथा वक्ता एक ही ऋषि हैं। इनमें प्रथम प्रकार के मन्त्रों का देवता सृष्टिविषय ( भाववृत्त ) ही माना जाता है; और द्वितीय प्रकार के मन्त्रों का देवता-वह प्राणरूप देवता होता है, जिस की स्तुति हो ।

(५) वक्त्रात्मस्तवेऽपि अयं मन्त्रप्रणेता आत्मानं स्तौतीति स एव स्याद् ऋषिश्च देवता च ।

(६) अथ चतुर्थे देवात्मस्तवे तु मन्त्रप्रणेता प्रतिपाद्यं देवं तद्देवमुखेनैव स्तावयति । तत्र तस्य प्राणदेवस्यैव वक्तृत्वेन विवक्षणात् स एव ऋषिः स्याद्देवता च । मन्त्रप्रणेतुस्तु वक्तृत्वेऽपि तत्र ऋषित्वमपह्नूयते ।

(७) एवं पञ्चमे संवादेऽपि मन्त्रप्रणेतुर्ऋषित्वमपह्नूयते, ययोस्तु संवादो वर्ण्यते तयोर्मध्ये वक्तुर्ऋषित्वम्, संबोध्यस्य च देवतात्वमिति पर्यायेणोभयोर्ऋषित्वं देवतात्वं च विवक्ष्यते इति ।

(८) तदुक्तं बृहद्देवतायाम्—

नवकः प्रथमस्त्वासां वर्गस्तुष्टाव देवताः ।

---

संस्कृतव्याख्या

बृहद्देवतायां नवकः प्रथमः । अत्र ऋषीणामनेकविधाः समूहाः प्रदर्श्यन्ते । तत्र च प्रथमः नवकः-प्रथमश्रेण्युक्ता नव ऋषयः, देवस्तुतिमेव निब-

---

भाषाटीका

(५) वक्त्रात्मस्तव-वे मन्त्र कहे जाते हैं-जिन में कहनेवाला ( वक्ता ) अपनी ही प्रशंसा करता है । इन वक्त्रात्मस्तव मन्त्रों के ऋषि और देवता दोनों वे एक ही होते हैं—जो मन्त्रोंमें अपनी स्तुति किया करते हैं ।

(६) चौथे प्रकार के जिन मन्त्रों में मन्त्रद्रष्टा ऋषि अपने इष्टदेवता की स्तुति इष्टदेवता के मुख से ही कराता है-वे मन्त्र देवात्मस्तव कहलाते हैं । देवात्मस्तवों में मन्त्रप्रणेता देवताओं के मुख से वाक्य कहलाता है, इसलिये इन मन्त्रों के ऋषि और देवता वे ही देवता होते हैं-जो द्रष्टा ऋषि द्वारा वक्ता मान लिये गये हैं । आशय यह है कि इन मन्त्रों में प्राणरूप देव ही ऋषि कहा जाता है और वही देवता । देवता का ऋषित्व यहां काल्पनिक है । मुख्य मन्त्रद्रष्टा ने यहां अपना ऋषित्व छिपा लिया है ।

(७) इस ही प्रकार पांचवें संवादात्मक मन्त्रों में भी मन्त्रद्रष्टा का ऋषित्व छिप जाता है, और जिन २ का वह संवाद है-उन में वक्ता ऋषि और संबोध्य देवता मान लिया जाता है, इस प्रकार क्रम से दोनों ही ऋषि और दोनों ही देवता हो जाते हैं । एक मन्त्र में वक्ता होने से जो ऋषि है, दूसरे में संबोध्य होने से वह देवता हो जाता है । और पहले में जो संबोध्य होने के कारण देवता था, वह दूसरे मन्त्र में वक्ता होने से ऋषि हो जाता है ।

(८) इस संपूर्ण संदर्भ में बृहद्देवता का प्रमाण मूल में दिया गया है—'नवकः

ऋषिभिर्देवताभिश्च समूदे मध्यमो गणः ।
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः ।
उत्तमस्य तु वर्गस्य य ऋषिः सैव देवता ।
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः ।
तस्मादात्मस्तवेषु स्याद्य ऋषिः सैव देवता ।
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः ।
यस्तेनोच्येत वाक्येन देवता तत्र सा भवेत् ।
इति ।

(९) तद्यथा वामदेव ऋषिः सीता देवता—

---

संस्कृतव्याख्या

ध्नन्ति । मध्यमः गणः—द्वितीयसमूहान्तर्गता ऋषयः, ऋषिभिः, देवताभिर्वा कर्तृभिः, समूदे-संवादविषयतां प्रापिताः, ऋषिभिः देवताभिर्वा संवाद निबद्धवन्त इति तात्पर्यम् । तथा उत्तमः-अन्तिमः वर्गः—ऋषीणां समूहः, आत्मनः भाववृत्तानि-स्वस्यैव माहात्म्यं जगौ-स्तुतवान् । तत्र य ऋषिः, सैव देवता भवति । तस्यैव स्तूयमानत्वात् ।

एवं तदनन्तरोऽप्युत्तमो वर्गः-ततोऽप्यन्तिमः समूहः, देवताम्-आत्मानम् अस्तौत्-देवतामुखेन देवतात्मानं स्तुतवान् । तत्रापि ऋषिदैवतयोरैक्यमित्यादि पूर्वग्रन्थोक्त एव विषयोऽत्र प्रपञ्चितः ।

---

भाषाटीका

प्रथम' इत्यादि । इन श्लोकों का आशय यह है कि बृहद्देवता ग्रन्थ के इस सन्दर्भ में ऋषियों के अनेक समूह वर्णित हुए हैं । इन में प्रथम नवक अर्थात् पहली श्रेणी में आये हुए नो ऋषि देवस्तुतिपरक मन्त्रों के द्रष्टा हैं । दूसरे समूह के अन्तर्गत जो मध्यम गण के ऋषि कहे जाते हैं, वे ऋषियों तथा देवताओं से संवादरूप रचनाओं का संकलन करते हैं । इस ही प्रकार आत्मस्तवरूप उत्तमवर्ग के ऋषि अपना स्वयं का ही माहात्म्य बताते हैं, ऐसे स्थल पर जो ऋषि होता है-वह ही देवता माना जाता है । क्योंकि जिसकी स्तुति की जाती है-वह ही देवता होता है, और यहां स्वयं ऋषि की ही स्तुति हुई है-इसलिये वह स्वयं ही उसका देवता है । इन के अतिरिक्त उत्तम वर्ग के ऋषियों का एक अन्तिम समुदाय और है-जो देवता के द्वारा ही देवता की स्तुति कराता है, वहां भी ऋषि और देवताओं का ऐक्य ही रहता है । पांचवां वर्ग संवाद ग्रथन करनेवालों का है । इन में संवादान्तर्गत वाक्य का प्रयोग करने वाला ऋषि तथा उस वाक्य का विषय (संबोध्य) देवता होता है ।

(९) अब इनके कुछ उदाहरण दिये जाते हैं । जैसा कि प्रथम प्रकार के

**इन्द्रः सीतां निगृह्णातु तां पूषानुयच्छतु ।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् इति**
**( ऋ. सं. ४।५७।७ ) ।**

**(१०) अथ प्रजापतेरङ्गिरसः पुत्री दिव्यस्याङ्गिरसस्य भगिनी**

---

संस्कृतव्याख्या

उक्तेषु मन्त्रभेदेषु कांश्चिद् भेदानुदाहरति–**इन्द्रः सीताम्** । सीताऽत्र हलपद्धतिः–हलेन भूमौ कृता रेखा । सात्र मन्त्रे स्तूयते । इमां सीतां—हलकृतां रेखाम्, इन्द्रः–वृष्टिकर्ता देवः, निगृह्णातु, अनुगृह्णातु । पूषा च देवः, अनुयच्छतु–खाद्यं ददातु–अत्रैवान्नमुत्पादयत्वित्यर्थः । सा पयस्विनी–सस्यशालिनी सीता, उत्तराम्–उत्तराम्, समाम्–प्रत्येकम् अग्रिमेषु वर्षेषु, नः–अस्मभ्यम्, दुहाम्–अन्नादिकं दोग्धु । भाष्यकृन्माधवाचार्यस्तु आधारकाष्ठं सीतेत्याह । अत्र रेखादिकं जडपदार्थः किमिति स्तूयते ? किं सम्शृणोति ? इत्याद्यानां शङ्कानां तत्र तत्राभिमानिनी देवता स्तूयते–इत्येव शिष्टसंमतं समाधानम् । अभिमानिनी देवता च सर्वत्रानुस्यूता देवरूपा प्राणशक्तिरेव । तस्माद् उक्तासु विधासु द्वितीयविधायाम्–देवस्तवेऽन्तर्भवत्ययं मन्त्रः । वामदेवः सीतां स्तौतीति प्रकृते तात्पर्यम् ।

इमामेव द्वितीयां विधां पुनरप्युदाहरति–**तमेव ऋषिम्** । इमं मन्त्रं व्याचख्यौ श्रीमाधवाचार्यः—तमेव दक्षिणाया दातारम्, ऋषिम्–अतीन्द्रियार्थ-

---

भाषाटीका

दृष्टान्त में 'इन्द्रः सीतां" आदि मन्त्र बताया है, उक्त मन्त्र के वामदेव ऋषि हैं और सीता देवता है । हल के द्वारा खुदी हुई रेखा का नाम यहां सीता है । उस में वर्षा का अधिष्ठाता इन्द्र जल बरसावे, और पूषा देव उन रेखाओं में अन्न बढावे, यों हमें अन्न प्राप्त हो, और इस तरह प्रत्येक संवत्सर में हुआ करे–यह प्रार्थना की गई है ।

भाष्यकार श्री माधवाचार्य ने हल के आधार काष्ठ को सीता कहा है । अस्तु ।

यहां एक शङ्का हुआ करती है कि इन रेखा वा काष्ठ आदि जड़पदार्थों की स्तुति क्यों की जाती है ? क्या वे सुनते हैं ? इसका उत्तर शिष्ट विद्वान् यही दिया करते हैं कि सब पदार्थों के अधिष्ठाता देवता पृथक् पृथक् होते हैं–उन की ही स्तुति होती है, और वे ही संबोधित होते हैं । अस्तु, इस प्रकार यह मन्त्र पूर्वोक्त पांच प्रकारों में से प्रथम प्रकार का हुआ ।

(१०) इस ही प्रकार का दूसरा उदाहरण है, जो दक्षिणा (देय द्रव्य) की महिमा बताता है । मन्त्र का अर्थ है कि दक्षिणा देने के कारण, सत्कर्मकर्त्ता होने से यजमान

दक्षिणानाम्नी ऋत्विग्भ्यो दीयमानां दक्षिणां स्तौति । तत्र दक्षिणा ऋषिका, दक्षिणा चान्या देवता—

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम् ।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥
(ऋ. १०।१०७।६।)

---

संस्कृतव्याख्या

दर्शिनम्–सत्कर्मकरणेन ऋषिमित्याहुः । तथा तमु तमेव ब्रह्माणमाहुः । किं च तमेव यज्ञन्यम्–यज्ञस्य नेतारम्–अध्वर्युमित्याहुः । तमेव सामगाम्–साम्नां गातारमिति, तथा उक्थशासम्—शस्त्राणां शसितारं होतारमिति ब्रुवन्ति । दक्षिणादानेनतत्तत्कर्मणः परिग्रहात् । स दाता शुक्रस्य-दीप्यमानस्य, ज्योतिषः, तिस्रः तन्वः–अग्निर्वैद्युतादित्यात्मकानि त्रीणि शरीराणि वेद–जानाति । यद्वा शुक्रस्य–दीप्तस्याग्नेः, आहवनीयाद्यात्मकानि त्रीणि शरीराणि जानाति, प्रथमो मुख्यो यो जनः दक्षिणया रराध–ऋत्विगादीनाराधयति । अत्र यद्यपि दक्षिणैव ऋषित्वेन दक्षिणैव च देवतात्वेनोच्यते, तथापि आत्मस्तवोऽत्रेति शङ्का न कार्या, दक्षिणापदार्थस्योभयत्र भिन्नत्वात् । तदेतत् स्पष्टीकृतं मन्त्रस्यावतरणिकायां मूले–"प्रजापतेरङ्गिरसः पुत्री" त्यादिना । एवंविधं संशयं निराकर्तुमेव मन्त्रोऽयमुदाहृतः ।

---

भाषाटीका

परोक्षदर्शी ऋषि, ब्रह्मा, यज्ञका नेतृत्व करने वाला अध्वर्यु तथा सामश्रुति का गायक उद्गाता वा स्तुति-पाठ करने वाला होता भी मान लिया जाता है, क्योंकि दक्षिणा देकर यजमान संपूर्ण कर्मों पर अपना स्वत्व स्थापित कर लेता है। वह प्रदीप्त ज्योति के तीनों रूप—अग्नि, विद्युत और सूर्य को जान लेता है, अथवा यज्ञ की अग्नि के आहवनीय, गार्हपत्य और दक्षिणाग्नि रूपों कों जान लेता है, जो कि मुख्य पुरुष दक्षिणा से ऋत्विग् ब्राह्मणों की आराधना कर चुकता है। यहां यद्यपि दक्षिणा ही ऋषिरूप से एवं च दक्षिणा ही देवतारूप से वर्णित प्रतीत होती है, किन्तु आत्मस्तवपरक श्रुतियों की तरह यहां दोनों एकरूप नहीं हैं। देवतास्थानीय दक्षिणा द्रव्य रूप है, अर्थात् ऋत्विग् ब्राह्मणों को दी जाने वाली दक्षिणा देवता हैं, और प्रजापति अङ्गिरा की पुत्री एवं च दिव्य अंगिरा की बहन जिसका नाम दक्षिणा है–वह ऋषिका हैं। अतः व्यक्तिभेद होने से आत्मस्तव नहीं माना जा सकता। इस विशेषता को समझाने के लिये, संदेह मिटाने के लिये, ही इस मन्त्र का उदाहरण दिया है।

(११) अथागस्त्यदृष्टेऽगस्त्येन्द्रसंवादे प्रथमायामगस्त्य ऋषिरिन्द्रो देवता, द्वितीयस्यामिन्द्र ऋषिरगस्त्यो देवता—

किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव ।
तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥
ऋ सं० १।१७०।२।

किं नो भ्रातरगस्त्य सखा सन्नतिमन्यसे ।

---

संस्कृतव्याख्या

अथ पञ्चमी विधा संवादरूपोदाह्रियते—अथागस्त्यदृष्टे । मन्त्रार्थ एवं व्याख्यातो माधवीये भाष्ये—इदमगस्त्यवाक्यम् । हे इन्द्र ! नोऽस्माननपराधिनः, किं निहन्तुमिच्छसि, कथमवध्यत्वमतआह-मरुतस्तव भ्रातरः-त्वया भोगदानेन भरणीया इत्यर्थः । अतो वयमवध्या इत्युक्तं भवति । मरुतामिन्द्रभ्रातृत्वमेकस्मिन्नेव दितिगर्भे उत्पन्नत्वात् । सा चोत्पत्तिः पुराणेषु प्रसिद्धा । सन्तु भ्रातरः, ततश्च किमित्याह-तेभिः-तैर्मरुद्भिः सह, साधुया—साधुत्वं कल्पस्व । हविर्भागान्, तैः सह युद्धं वा नः—अस्मान्, समरणे-संग्रामे, मा वधीः मा हिंसीः । यद्वा कल्प्तेर्दृष्टान्तः—संग्रामे यथा विरोधिनं हंसि न तथा ।

द्वितीयस्य च मन्त्रस्यैवं व्याख्या । इदमिन्द्रवाक्यम् । हे भ्रातः ! हे अगस्त्य ! हविःप्रदानवरप्रदानाभ्यां परस्परोपकारकत्वाद् भ्रातृत्वम् , तादृशस्त्वं सखा सन्—अस्मद्धितकार्यपि सन्, नोऽस्मान् किमतिमन्यसे—कस्मादपराधादतिक्रम्य मनुषे-अपलपसि । नायमपलापः, किन्तु तथ्यमेवेति चेदुच्यते—मन्तव्यं ते-तव, मनो-मानसम्, यथा-यथावत्, विद्मः-जानीमः, कथं जानीथेति, उच्यते-अस्मभ्यमिन्न दित्ससि—अस्मदर्थं निरुप्तमस्मभ्यं दातुं नेच्छस्येव ।

---

भाषाटीका

(११) अब संवादात्मक मन्त्र का उदाहरण दिया जाता है, जिसमें पहले मन्त्र में इन्द्र को संबोध्य मानकर अगस्त्य कह रहे हैं कि 'इन्द्र ? सब मरुद्‌गण अदिति के गर्भ से उत्पन्न होने के कारण तुम्हारे भाई हैं । इसलिये तुम उनके साथ समयोचित व्यवहार करो । यज्ञ के भाग अन्न आदि में उनको भी संमिलित करो, अथवा उनसे युद्ध करो, किन्तु हम निरपराधियों को क्यों मारना चाहते हो ? युद्ध में शत्रु की तरह हमको नष्ट मत करो ।

यहां वक्ता अगस्त्य-ऋषि, और संबोध्य इन्द्र देवता है ।

दूसरा मन्त्र जो इन्द्र के द्वारा अगस्त्य को संबोधन करके कहा गया है उसका अर्थ है कि "भाई आगस्त्य ! तुम हमारे मित्र होकर भी इस तरह हमारा अपमान क्यों करते हो, हम तुम्हारा विचार जान गये हैं । तुम हमारे लिये कल्पित यज्ञ भाग को दूसरों ( मरुतों ) को दे देना चाहते हो ।" यहां वक्ता इन्द्र ऋषि माना जाता है और संबोध्य अगस्त्य देवता । यद्यपि यह संपूर्ण

विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥

ऋ० सं० १।१७०।३।

(१२) अथेयमम्भृणसुता वाङ्नाम्नी ऋषिका त्रैलोक्यव्यापिनीं वाचं नाम देवीं तस्या एव मुखेन स्तौति । तत्राम्भृण्या ऋषित्वं सदपि निवर्त्यते । देवताया एव च वाचोऽष्टर्चेन सूक्तेनात्मस्तवे ऋषित्वं विवक्ष्यते । तया वाम्भृण्या अभेदोपचारादाम्भृण्या पुनरन्यदृषित्वमौपचारिकमापद्यते इति विशेषः । तद्यथा–

---

संस्कृतव्याख्या

अत्र संवादः स्पष्टः । तत्र वक्ता ऋषिर्भवति, बोद्धव्यश्च देवता । यद्यपि सूक्तोऽयमगस्त्यदृष्ट एव, परमिन्द्रो यत्रागस्त्येन वक्ता कल्पितः, इन्द्रमुखेन यद्वाचितं द्वितीयमन्त्रादिकम्, तत्रार्थसंगतये इन्द्रस्य वक्तृत्वापरपर्यायमृषित्वमनुसन्धेयं भवति ।

चतुर्थीं विधामुदाहरति-**अथेयमम्भृणसुता वाङ्नाम्नी** । अत्रापि वाक्शब्दप्रतिपाद्यावर्थौ भिन्नौ । अम्भृणस्य ऋषेर्दुहिता वाङ्नाम्नी मनुष्यरूपा वक्त्री 'ऋषिका' । जगदुपादानभूताव्ययपुरुषकला ब्रह्मस्वरूपान्तःप्रविष्टा तु वाक् प्रतिपाद्या देवता । परम् ऋषिरूपा वाग्, देवतारूपया वाचा आत्मनो अभेदं साक्षात्कृत्य ब्रवीतीति मन्त्रेषु अहंशब्देन देवतारूपा वागेव गृह्यते । अभेदोपचाराच्च अम्भृणसुताया वाच एव ऋषित्वं व्यवह्रियते, नापोद्यते– इत्ययं चतुर्थ्यां विधायामवान्तरो विशेषः ।

---

भाषाटीका

सूक्त अगस्त्य ऋषि ने ही सर्वप्रथम देखा है—इसलिये न्यायतः ऋषि इन को ही मानना चाहिये, किन्तु इन्द्र के मुख से दूसरा मन्त्र कहलाया गया है, इसलिये वक्तृत्व रूप ऋषित्व इन्द्र को प्राप्त हो जाता है । इस प्रकार दोनों जगह दोनों ही ऋषि तथा देवता माने जाते हैं ।

(१२) चतुर्थ प्रकार के ऋषि में कुछ विशेषता होती है । जैसा कि अम्भृण ऋषि की पुत्री जिस का नाम 'वाक्' है, वह त्रिलोकी में व्यापक वाक् रूपा देवता की स्तुति करती है, किन्तु उस व्यापक वाक् के मुख से ही वह स्तुति कराई जाती है । और अम्भृण ऋषि की पुत्री-स्तुति करने वाली वाक् अपने को उस व्यापक वाक् से अभिन्न मान लेती है । इसलिये मन्त्रों में 'अहं' शब्द का अर्थ, वह व्यापक 'वाक्' ही लिया जाता है ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१॥

(१३) मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।

---

संस्कृतव्याख्या

मन्त्रास्तु श्रीमाधवाचार्येणैवं व्याख्याताः—अहम् सूक्तस्य द्रष्ट्री वाक्, आम्भृणी, यद् ब्रह्म जगत्कारणं तद्रूपा भवन्ती, रुद्रेभिः—रुद्रैः एकादशभिः, तदात्मना चरामि, एवं वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यम् । एवं च मित्रावरुणेत्यत्र उभा—उभावहमेव ब्रह्मीभूता बिभर्मि—धारयामि, इन्द्राग्नी अप्यहमेव धारयामि । उभा—उभावश्विनावप्यहमेव धारयामि, मयि हि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं सद् दृश्यते । माया च जगदाकारेण विवर्तते, तादृश्या मायाया आधारत्वेन असङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योपपत्तिः ।

यो अन्नमत्ति, स भोक्तृशक्तिरूपया माययैवान्नमत्ति, यश्च विपश्यति—आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति, सोऽपि मयैव । यश्चोक्तं शृणोति । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति, ते अमन्तवः—अमन्यमानाः, अजानन्तः, उपक्षियन्ति-उपक्षीणाः—संसारेण हीना भवन्ति ( मद्विषयकज्ञानरहिता इत्यर्थः । ) । हे श्रुत ! विश्रुत ! सखे श्रुधि-मया वक्ष्यमाणं शृणु, किं तत् श्रोतव्यम्-श्रद्धियम्-श्रद्धिः-श्रद्धा, तया युक्तं, श्रद्धायत्नेन,

---

भाषाटीका

प्रथम मन्त्र का अर्थ यह है कि–"मैं अर्थात् त्रैलोक्यव्यापिनी वाक्, रुद्र, वसु, सूर्य एवं विश्वेदेवों के साथ—उन का रूप स्वयं धारण कर उनके लोकोंमें विचरण करती हूँ । मित्र, वरुण, इन्द्र, अग्नि, एवं दोनों आश्विनीकुमारों का मैं ही धारण और पोषण किया करती हूँ । भाव यह है कि सब जगत् की मूलकारण परब्रह्मस्वरूपिणी वाक् सदा अलिप्त रह कर भी जगत् के निर्माण करने में समर्थ होती है ।

(१३) द्वितीय मन्त्र का अर्थ है कि—जगत् में जिस शक्ति के आधार पर प्राणी खाये हुए अन्न आदि को पचाता है, जिस के सहारे से द्रष्टव्य वस्तु को देखता है, सुनने योग्य बात सुनता है एवं जिस के आधार से श्वास लेता है—वह वाकरूपा आदि शक्ति मैं ही हूँ । इस प्रकार अन्तर्यामिनी रूप में जो मुझको नहीं पहचानता

अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत ! श्रद्धियं ते वदामि ॥
(१४) अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥
(१५) अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा ।

संस्कृतव्याख्या

लभ्यमित्यर्थः । ईदृशब्रह्मात्मकं वस्तु, ते–तुभ्यं, वदामि–उपदिशामि ।

**अहमेव स्वयमिदं वदामि ।** अहमेव स्वयमेव, इदं वस्तु—ब्रह्मात्मकं वदामि-उपदिशामि । देवेभिः—देवैः—इन्द्रादिभिरपि जुष्टं-सेवितम्, अपि च मानुषेभिः-मनुष्यैरपि जुष्टम्, ईदृग्वस्त्वात्मिका अहम्, कामये-यं पुरुषं रक्षितुमहं वाञ्छामि, तं तं पुरुषम्, उग्रं कृणोमि-सर्वेभ्योऽधिकं करोमि, तमेव ब्रह्माणम्-स्रष्टारं करोमि, तमेव ऋषिम्-अतीन्द्रियार्थदर्शिनं करोमि-तमेव सुमेधाम्-शोभनप्रज्ञं च करोमि ।

**अहमेव वात इव ।** विश्वा-विश्वानि, सर्वाणि भुवनानि-भूतजातानि, कार्याणि आरभमाणा—कारणरूपेण उत्पादयन्ती, अहमेव परेणानधिष्ठिता स्वयमेव प्रवामि-प्रवर्ते । वात इव-यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति-तद्वत्, उक्तं सर्वं निगमयति-परो दिवा-द्युलोकात्परः,-अस्याः पृथिव्याः परः-परस्तात्, द्यावापृथिव्योरुपादानमुपलक्षणम्,-एतदुपलक्षितात् सर्वस्मात्

भाषाटीका

है, वह अज्ञानी नष्ट हो जाता है । हे बहुश्रुत ! मित्रभाव से मैं तुमको उस परब्रह्म ज्योतिःस्वरूप का उपदेश करती हूँ—जो श्रद्धापूर्वक श्रवण करने से प्राप्त होता है—वह तुम सुनो ।

(१४) तीसरे मन्त्र में कहा है कि–मैं स्वयं ही सर्वप्रथम उस दिव्य ब्रह्म का–जिस के जानने की अभिलाषा–देवता एवं मानव सब को होती है, उपदेश करती हूँ, और जिस को चाहती हूँ उसे सांसारिक मानवों से अधिक शक्तिशाली, अधिक मेधावी, मन्त्रद्रष्टा ऋषि, यहां तक कि साक्षात् ब्रह्मा ( उत्पादक ) बना देती हूँ ।

(१५) चतुर्थ मन्त्र में कहा है कि–जैसे वायु किसी दूसरे से सहायता लिये विना ही सम्पूर्ण जगत् में चलता रहता है, वैसे ही किसी की सहायता लिये विना ही मैं स्वयं चौदह भुवन एवं संपूर्ण विश्व का निर्माण करती हूँ, पार्थिव एवं दिव्य संपूर्ण विकारमय प्रपञ्च से परे सब से अलिप्त उदासीन कूटस्थ ब्रह्मज्योति रूपा मैं ही हूं, यह सब महिमा मेरी है, मैं ही संपूर्ण जगत् रूप में प्रकट होती हूं ।

**परो दिवा पर एना पृथिव्यैतावती महिना संबभूव ॥**

**( ऋ. सं. १०।१२५।१-८ )**

**एवमन्यत्रापि तत्र तत्र ऋषित्वोपचारा यथायथं भाव्याः ।**

**इति चतुर्थी प्रवृत्तिः ।**

---

संस्कृतव्याख्या

विकारजातात् परस्तात्, वर्त्तमाना-असङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहम्, महिना-महिम्ना, एतावती संबभूव, एतच्छब्देन उक्तं सर्वं परामृश्यते, सर्वजगदात्मना अहं संभूतास्मि ।

एवमष्टके चत्वारो मन्त्रा उदाहरणार्थं दर्शिताः ।

**यथायथं भाव्याः ।** चतुर्थ्यां विधायां मुख्यं तूदाहरणम् ( यत्र वक्तु-ऋषित्वमपह्नुतम् ) इदं द्रष्टव्यम्—

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि संजयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम् ॥

ऋ. सं. १०।४८।१

अत्रेन्द्रमुखेन स्वस्य माहात्म्यं वर्णितमिति वैकुण्ठ इन्द्र एवात्र ऋषिः ख्याप्यते । द्रष्टुस्तु ऋषित्वमपह्नुतम् । विकुण्ठानाम्न्या आसुर्यां गर्भेऽवतीर्णो वैकुण्ठ इन्द्रो मनुष्यविध एवात्र द्रष्टेति केचित् । मन्त्रार्थ एवं विवृतो माधवीये भाष्ये—

**अहम्-इन्द्रः, वसुनः-धनस्य, पूर्व्यः-मुख्यः असाधारणः, पतिः-स्वामी, भुवम्-अभवम् । तथा अहं शश्वतः, बहुनामैतत्, बहोः शत्रोः संबन्धीनि धनानि, सम्-इत्येकीभावे, सह जयामि, किं च मामेव, जन्तवः-प्राणिनो यजमानाः, हवन्ते-आह्वयन्ति, पितरं न—पितरमिव पुत्राः, अहं दाशुषे-हविषो दात्रे यजमानाय, भोजनम्--अन्नम्, विभजामि-ददामि ।**

---

भाषाटीका

इस प्रकार ८ मन्त्रों के सूक्त में से ४ मन्त्रों का उदाहरण यहां दिया गया है । यहां वाक् शब्द से ऋषिपुत्री और देवतारूप व्यापक वाक्, दोनों का ग्रहण हो सकता है, किन्तु देवतारूप वाक् से अपने को अभिन्न मानती हुई ऋषिपुत्री वाक् सब जगह 'अहं' शब्द का निर्देश कर रही है–उसके द्वारा स्तुति की आधारभूत देवतारूपा वाक् का ही ग्रहण होता है, और उस वाक् से अपने को अभिन्न समझने के कारण ऋषिपुत्री-वाक् में ऋषित्व-व्यवहार होता है–वह छिपाया नहीं गया, यह चतुर्थ प्रकार में होते हुए भी इस सूक्त में विशेषता है ।

इस ही तरह स्थान स्थान पर मन्त्रों में कौन देवता तथा कौन ऋषि होता है--यह यथावत् समझ लेना चाहिये ।

## अथ द्वितीयं निर्वचनम्।

(१) अपर आह—एकमेवेदं प्रवर्त्तकत्वं नाम ऋषित्वमास्थेयम्, न त्वेतदेवं प्रवृत्तिचतुष्टयं भवति। सत्यैकार्थ्ये वृत्तिनानात्वस्याऽनवक्लृप्तेः। ते च त्रिविधाः—सृष्टिप्रवर्तकाः, वेदप्रवर्तकाः, गोत्रप्र-

---

संस्कृतव्याख्या

अथ वक्त्रात्मस्तवरूपा तृतीया विधात्र नोदाहृता, तस्या उदाहरणमिदं द्रष्टव्यम्—

इति वा इति मे मनो गामश्वं सनुयामिति।
कुवित्सोमस्यापामिति। (ऋ. सं. १०।११९।१)

अत्र लव ऋषिः, स आत्मानमेव स्तौति। मन्त्रार्थ एवं विवृतो भाष्ये माधवीये—

इति वै—इति खलु, इति—एवं प्रकारेण, मे—मदीयं मनः वर्त्तते, गामश्वं च सनुयाम्—स्तोतृभ्यः प्रयच्छामि इति। यस्मात्, कुवित्—बहुवारम्, सोमस्य—सोमम्, अपाम्—पीतवानस्मि।

प्रथमाया विधाया भाववृत्तस्य उदाहरणानि तु "ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत" "नासदासीन्नो सदासीत्तदानीम्" इत्यादीनि सुप्रसिद्धानि इति विस्तरभिया नोदाहृतानि।

इति चतुर्थी प्रवृत्तिः।

—:o:—

प्रथमे प्रकरणे ऋषिशब्दस्य चत्वारि पृथक् प्रवृत्तिनिमित्तानि दर्शितानि। परं संभवन्त्यामेकार्थतायामनेकप्रवृत्तिनिमित्तकत्वलक्षणमनेकार्थत्वं दूषयन्ति मीमांसका इति एकप्रवृत्तिनिमित्तकत्वमत्र ऋषिशब्दस्य प्रतिपाद्यते।—'प्रवर्तकत्वम्, एव ऋषिशब्दस्य मुख्यं प्रवृत्तिनिमित्तम्। तच्च विषयभेदाद् भिन्नत्व-

---

भाषाटीका

यहाँ प्रथम एवं तृतीय प्रकार के उदाहरण सरल होने के कारण मूल में नहीं दिये हैं, वे संस्कृत टीका में उद्धृत हुए हैं।

यह चौथी प्रवृत्ति संपूर्ण हुई।

(१) अब दूसरा मत कहते हैं कि—ऋषि शब्द का एक ही मुख्य अर्थ 'प्रवर्तकत्व' मानना चाहिये।

वर्तकाश्चेति । असल्लक्षणानां रोचनालक्षणानां च सृष्टिप्रवर्तकेष्वन्तर्भावः । द्रष्टॄणां वक्तॄणां च वेदप्रवर्तकेषु । तत्र सृष्टिप्रवर्तका दिव्यर्षयो देवर्षयः पुराणर्षय इति चोच्यन्ते ।

(२) सृष्टिप्रवर्तकाः प्राणात्मका ऋषयोऽप्रत्यक्षा अप्रत्यक्षरूप-

---

संस्कृतव्याख्या

मिव गतम् । केचित् सृष्टिप्रवर्तकाः, केचिद् वेदप्रवर्तकाः, केचिच्च गोत्रप्रवर्तकाः—इति विभिन्ना अपि ऋषयः प्रवर्तकत्वसामान्येनैकविधा एवेति भावः । 'ऋष्' धातुर्हि गत्यर्थः । गतिश्च प्रवृत्तिः । अन्तर्भावितण्यर्थतया प्रवर्तकत्वमत्र गृहीतम् । अत्रैव प्रवर्तकत्वसामान्ये पूर्वोक्ताश्चतस्रोऽपि विधा अन्तर्भवन्तीत्युच्यते—**असल्लक्षणानाम्**—इत्यादि ।

**अप्रत्यक्षाः, अप्रत्यक्षस्वरूपविशेषा वा धर्माः** । केनचिद् ऋषिणा अभिनवानि तत्त्वान्येवाविष्कृतानि, केनचित्तु पुरा विज्ञातेऽपि तत्त्वे अनेकैः

---

भाषाटीका

पहले प्रकरण में एक ही ऋषि शब्द की प्रवृत्ति चार अर्थों में मानी गई है—वह उचित नहीं । क्योंकि मीमांसा में अनेक अर्थों में एक शब्द की शक्ति मानने को दूषित कहा है—जहाँ तक कि एक शब्द का प्रवृत्तिनिमित्त एक ही संभव हो सके । इसलिये यहां भी ऋषि शब्द की शक्ति 'प्रवर्तकत्व' रूप एक अर्थ में ही माननी चाहिये ( क्योंकि गत्यर्थक ऋष् धातु में प्रेरणार्थक णिच् के अर्थ के अन्तर्भूत रहने के कारण प्रवर्तकरूप अर्थ ठीक तरह उपपन्न हो सकता है ) । ऋषि शब्द का यह प्रवर्तकत्वरूप अर्थ प्रवृत्ति के विषयों के भिन्न हो जाने के कारण भिन्न प्रतीत होता है—वस्तुतः प्रवर्तकत्व रूप अर्थ ही सर्वत्र अनुगत होता है । यह विषयभेद मुख्यतया तीन प्रकार का है, जिससे ऋषि भी तीन प्रकार के हो जाते हैं । एक सृष्टिप्रवर्तक ऋषि, दूसरे वेदप्रवर्तक और तीसरे गोत्रप्रवर्तक ।

पूर्व प्रकरण में बताये गये असल्लक्षण ( प्राणरूप ऋषि ) और 'रोचनालक्षण' (तारारूप ऋषि) सृष्टिप्रवर्तकों में आ जाते हैं । और द्रष्टा एवं वक्ता मनुष्यरूप ऋषियों का वेद-प्रवर्तकों में संग्रह हो जाता है ।

इनमें सृष्टिप्रवर्तकों को 'दिव्य ऋषि' 'देवर्षि' अथवा 'पुराणर्षि' भी कहा जाता है ।

(२) सृष्टि के आदि रचयिता ऋषि प्राणरूप हैं, जिनका कि प्रत्यक्ष लौकिक इन्द्रियों से नहीं होता । अथवा यों समझो कि जिन वस्तुओं को हम देखते हैं—

विशेषा वा धर्मा विद्याभिः साक्षात्कृत्य व्यवहारेषूपनीयन्ते स्म । तेषां च साक्षात्कर्त्तारः प्रथमोपदेशकास्तदुद्भावकतया तद्रूपविशेषोद्भावकतया वा द्रष्टार उच्यन्ते । स्वस्वोद्भावितेषु च तेषु तेषु प्राणेषु ते सिद्धहस्ताः कवयोऽभवन्, यथेच्छं च तस्मात्तस्मात् प्राणाद् देवान् पितॄन् वा आराध्य स्वार्थानीप्सिताम् संपादयामासुः । तेषामेषामुद्भावितानां प्राणानाम् उद्भावकानां च द्रष्टणां समानशब्दत्वमिच्छन्ति ।

---

### संस्कृतव्याख्या

स्वरूपैरनेकैश्च धर्मैर्विशिष्टे केचिद्रूपविशेषा धर्मविशेषा वा आविष्कृता इति भावः । यद्वा—दृश्यमानेषु जगति पदार्थेषु तदन्तःशक्तिविशेषरूपास्तत्र तत्र यज्ञपरिचालका ऋष्याद्या धर्मरूपेणैव स्थिताः—इति धर्माविष्कार एव तत्त्वाविष्कारः । यथा वेदान्तनये सत्तारूपं ब्रह्म जगति पदार्थान् निर्माय तेषु धर्मरूपेणैवानुस्यूतं लभ्यते, तथा ऋष्याद्या अपि पदार्थान् निर्माय तेषु धर्मरूपतया तिष्ठन्तीति योज्यम् ।

---

### भाषाटीका

उनमें ही धर्मरूप से ये प्राण कार्य कर रहे हैं, किन्तु उन धर्मों के रूपविशेष को हम नहीं देख पाते । मानव ऋषि तप से तथा विद्याओं के द्वारा इन अप्रत्यक्ष तत्त्वरूप ऋषियों का वा उन तत्त्वों के विशेषरूप वा विशेष धर्मों का साक्षात् अनुभव करके उन्हें व्यावहारिक रूप में जगत् के समक्ष उपस्थित करते हैं । उन धर्मों के साक्षात् द्रष्टा एवं सर्वप्रथम उपदेष्टा ऋषि, तत्त्वों के, वा उनके विशेष धर्मों के उद्भावक ( छुपी हुई वस्तु को प्रकट करनेवाले ) होने के कारण, अथवा उन तत्त्वों के किसी विशेष रूप के उद्भावक होने के कारण द्रष्टा कहे जाते हैं । और जिस तात्त्विक प्राण को वे प्रकट करते थे, उसका ऐसा वर्णन करते थे कि उसमें 'सिद्धहस्त' 'कवि' कहाते थे । उस प्राण पर उनका इतना अधिकार होता था कि उस तत्त्वमय प्राण के द्वारा, देवता एवं पितरों की आराधना करके वे अपने अभिलषित अर्थ को पूर्ण करते थे, अर्थात् जो कुछ चाहते थे, प्राप्त कर लिया करते थे ।

इस प्रकार उन प्राणतत्त्वों के साथ इनकी घनिष्ठता हो जाने से, प्रकट किये गये उन प्राणों को तथा उनके द्रष्टा ऋषि को एक ही शब्द से कहा जाता था । तात्पर्य यह है कि उस प्राण का नाम ही द्रष्टा का नाम हो जाता था ।

(३) तत्रैतदुभयं भवति । क्वचित्तावदुद्भावितानां प्राणानां शब्दैरेव तदुद्भावका विद्वांसो व्यपदिश्यन्ते, क्वचिद्वा तद्वैपरीत्येनोद्भावकशब्दा एव तदुद्भावितास्ते प्राणा भवन्तीति ।

(४) पूर्वोदाहृताः 'प्राणो वै वसिष्ठः' इत्याद्याः श्रुतयो बहुभिर्निर्वचनप्रकारैः प्राणष्वेवैतान् वसिष्ठादिशब्दान् व्यवस्थापयन्ति । तेनैतेषां प्राणेष्वेव मुख्या वृत्तिर्लभ्यते । तदुद्भावकत्वात् प्रथमोपदेशकत्वाच्चैते शब्दास्तद्द्रष्टृषु भक्त्या संप्रतिपन्नाः ।

---

संस्कृतव्याख्या

**तत्रैतदुभयं भवति ।** प्राणादीनां द्रष्टॄणां मनुष्याणां च समाननामत्वे प्रकारद्वयं विलोक्यते-क्वचिद् येषां शब्दानां प्राणेषु-नक्षत्रादिषु वा मुख्या वृत्तिः, ते तत्संबन्धाद् मनुष्येषु पश्चात् प्रवृत्ताः । क्वचित्तु येषां शब्दानां मनुष्येष्वेव मुख्या वृत्तिः, ते तद्द्रष्टेषु प्राणादिषु पश्चात् प्रवृत्ताः । समानः शब्दो वाचको येषां ते समानशब्दाः, तद्भावः समानशब्दत्वम् ।

**उद्भावकशब्दा** इति—उद्भावकस्य—द्रष्टुः, वाचको यः शब्दः, स येषां (वाचकतया) विद्यते इत्यर्शआद्यजन्तः शब्दोऽयं बोध्यः । एतदुदाहरणान्यग्रे दर्शितानि, तानि च स्पष्टार्थान्येव ।

---

भाषाटीका

(३) यों दृश्य प्राण और द्रष्टा ऋषि के एक ही नाम मिलते हैं । किन्तु इस नामकरण में दोनों बातें होती हैं । कहीं तो जो प्राण-नक्षत्र आदि प्रकट किया गया है—उसका नाम ही उसके द्रष्टा का नाम हो जाता है । और कहीं ठीक इसके विपरीत उद्भावक अर्थात् द्रष्टा का जो नाम है, वही प्रकट किये हुए प्राण का भी नाम रख लिया जाता है । ये दोनों ही प्रकार देखे जाते हैं ।

(४) पूर्वकथित 'प्राणो वै वसिष्ठः' आदि श्रुतियों में भिन्न-भिन्न प्रकार की व्युत्पत्ति दिखाकर वसिष्ठ आदि शब्दों का मूलतत्त्वरूप प्राणों का ही वाचक होना सिद्ध किया है । इससे वसिष्ठादि शब्द मुख्यरूप से प्राण के ही वाचक हैं । उन वसिष्ठ आदि प्राणों का प्रत्यक्ष करने के कारण वा उनका प्रथम उपदेश करने के कारण ही मनुष्य-ऋषियों को भी वसिष्ठ आदि कहा गया—यही सिद्ध हुआ । यह प्रकार लक्षणावृत्ति वा भक्ति कहलाता है ।

(५) तद्यथा-"मधुवाता-ऋतायते इति। यां वै देवतामृगभ्यनूक्ता,यां यजुः सैव देवता सर्क्। सो देवता तद्यजुः। तद्वैतन्मध्वेवैष त्रिचः"। (श० ७।५।१।४) इति कूर्मचितिश्रुतौ तद्देवतानुवाचकतया ऋग्यजुषोर्वाक्ययोस्तद्देवताशब्दः प्रवर्तते, तथैवेह तद्देवतानुवाचकतयैवास्य द्रष्टुरपि तद्देवताशब्दो न विरुध्यते-इति बोध्यम्।

(६) तान्येतानि तेषां विदुषां यशोनामानि स्युः। यानि त्वेषां

---

संस्कृतव्याख्या

**तद्यथा...यां वै देवताम्।** ऋग यजुर्वा यस्या देवताया अभिधायके, तद्देवतारूपे एव ते भवतः। यथा मधुप्रतिपादकम्—'मधु वाता ऋतायते' इत्याद्यं तृचं सूक्तं मधुरूपतामेव प्राप्तम्—इति कूर्मचितिप्रकरणे शतपथब्राह्मणे उक्तम्। तदेतत् तुल्यन्यायान्मनुष्येष्वपि द्रष्टव्यम्-तस्य देवस्य ऋषेर्वा प्राणस्य द्रष्टा, स्तोता च तद्रूपतापन्नस्तेनैव नाम्ना ख्यायत इति भावः।

**यशोनामानि स्युः।** पुरा यः कश्चित् महान् पुरुषः स्वीयं स्वानुग्राह्यस्य वा नाम चिरस्थायि कर्तुमिच्छति स्म, स तन्नाम प्राकृतिकेन केनचित् पदार्थेन-प्राणविशेषेण, नदीपर्वतादिना, नक्षत्रमण्डलस्थेन तारादिना वा संयोजयति स्म। प्रातिस्विकं नाम तु पिण्डनाशानन्तरं शीघ्रमेव विस्मर्यते, परं प्राकृतिकानां पदार्थानां नामानि कल्पान्तस्थायीनि भवन्ति। तस्मात्तद्योगेन

---

भाषाटीका

(५) इसमें एक श्रुति का प्रमाण दृष्टान्तरूप से दिया जाता है। शतपथ ब्राह्मण में कूर्मचिति प्रकरण में कहा है कि जो ऋक् एवं यजु जिस देवता का प्रतिपादन करते हैं, वे स्वयं भी तद्रूप (देवतारूप) ही हो जाते हैं। इसलिये मधु का प्रतिपादक 'मधुवाता' आदि तीन ऋचाओं का सूक्त भी स्वयं मधुरूप हो गया है। ठीक इस ही दृष्टान्त से मनुष्यों में भी समझना चाहिये। जैसे स्तुति करने से ऋचा वा यजु देवतारूप हो जाते हैं, और उस देवता के नाम से ही कहाने लगते हैं—वैसे ही जिस देवता की अथवा प्राणरूप ऋषि की, मनुष्य ऋषि स्तुति करता है, स्वयं भी तद्रूप होकर उस ही के नाम से ख्याति प्राप्त करता है।

(६) उन तत्त्वदर्शी विद्वानों के वास्तव में ये 'यशोनाम' होते हैं।

[पहले के विद्वानों में यह प्रथा चलती थी कि अपने वा अपने अनुग्राह्य व्यक्ति के नाम को चिरस्थायी रखने के लिये ऐसे पदार्थों के साथ नाम द्वारा अपना संवन्ध जोड़

**याहच्छिकानि नामानि तानि व्यवहारमप्राप्तानि प्रायेणालुप्यन्तैव ।**

---

संस्कृतव्याख्या

स्वस्य स्वानुग्राह्यस्य वा नाम कल्पान्तस्थायि भवेत्, नाम्ना च सह यशोऽपि चिरस्थायि भवेदित्येव तत्र मनीषा। एवंविधानि नामानि यशःसंरक्षणार्थत्वाद् 'यशोनामानि' इत्युच्यन्ते ।

विश्वामित्रस्य पुत्री कौशिकी 'नदी' रूपतां गता, 'नदी वा स्त्रीरूपतां काचित् क्वचित् प्राप्ता' 'कश्चिद् राजर्षिस्तारामण्डले प्रविष्टः'—इत्यादीनां पौराणिकाख्यानानामपीदृशमेव प्रायेण भावं प्रकाशयति ग्रन्थकृत्। इदानीं नाम्नां 'देव'संबन्धिनां प्रथायाः प्रवृत्तेरपि पूर्वोक्ता प्रथैव मूलं भवेद्— 'सूर्यदत्तः' 'सूर्यभानुः' 'चन्द्रदत्तः' 'मुरलीधरः' ईश्वरचन्द्रः' 'कृष्णः' 'रामचन्द्रः' 'शिवलालः' इत्यादीन्येव नामानि प्रायेणाद्यत्वे प्रचरन्ति । पुरा तु प्रातिस्विकानि नामानि नैवंविधानि श्रूयन्ते, स्मर्यन्ते वा। परं यशोनामानि तदात्वे प्राणनाममूलकानि श्रूयन्ते, स्मर्यन्ते च। सैव यशोनामप्रथा प्रातिस्विकनामसु परिणतेति संभाव्यते ।

**याहच्छिकानि नामानि ।** नामसु यदृच्छाशब्दा एव प्रयुज्यन्त इति स्पष्टं महाभाष्यादौ। तेषां प्रवृत्तिनिमित्तं किञ्चन जातिगुणादि प्रायेण न भवतीति तानि यादृच्छिकान्युच्यन्ते। स शब्द एव तत्र प्रवृत्तिनिमित्ततया समारोपित इति काव्यप्रकाशकृदादयः। एवंविधानि प्रातिस्विकानि नामानि ऋषीणां क्वचिदेव प्रसिद्ध्यन्ति। अन्यानि तु यशोनाम्नां प्राधान्येन प्रचाराद् व्यवहारमप्राप्तानि विलुप्तानीत्येवानुमातव्यम्। यथार्वाचीनेष्वपि सुप्रसिद्धस्य कवेर्भवभूतेः प्रातिस्विकं नाम 'श्रीकण्ठः' इति—

तपस्वी कां गतोऽवस्थामिति स्मेराननाविव ।
गिरिजायाः स्तनौ वन्दे 'भवभूति'विभूषितौ ।

---

भाषाटीका

देते थे—जो कल्पान्त स्थायी रहेंगे। क्योंकि शरीर का माता-पिता के द्वारा किया नाम तो शरीर के साथ अथवा कुछ काल के अनन्तर लुप्त हो जाता है। इसलिये कल्पान्त स्थायी नक्षत्र, नदी, पर्वत आदि के नामों के साथ संबन्ध जोड़कर उनके नामों से ही अपना वा अनुग्राह्य व्यक्ति का भी परिचय दिया करते थे, ये ही इनके यशोनाम होते थे। अमुक स्त्री नदी-रूप हो गई, अथवा अमुक नदी स्त्री-रूप हो गई—ऐसी आख्यायिकाएँ स्थान स्थान में पुराणों में उपलब्ध होती हैं,—उनका यही तत्त्व समझना चाहिये। यशोनाम अधिककाल तक स्थायी रहते हैं।

कस्यचित् क्वचित् स्मर्यतेऽपि । यथा—विदधी वितथी वा भरद्वाज इति ।

---

संस्कृतव्याख्या

इति भवभूतिविषयिण्या उत्कृष्टतमकल्पनया तु 'भवभूतिः' इति तस्य यशोनाम । परमद्यत्वे यशोनामैव प्रसिद्धम्, प्रातिस्विकं नाम तु विलुप्तमिव । कालिदासस्य 'दीपशिखाकालिदासः' इति, माघस्य 'घण्टामाघः' इति विशेषणतया प्रयुक्तं तु यशोनाम न विशेषेण प्रचारमाप्तमिति सर्वविधा एव सन्ति दृष्टान्ताः । यथा दृश्यते, तथा तत्र समाधेयमिति विवेचकानां पन्थाः ।

यादृच्छिकनामापेक्षया वंशनामापि ऋषीणामधिकं प्रचरितं दृश्यते । वंशब्राह्मणे शतपथे वंशनामान्येव बहुधा श्रूयन्ते । तानि च नैकव्यक्तिबोधकानि, अपि तु वंशगतानां सर्वेषामेव बोधकानीति तद्दर्शनादेव स्फुटीभवति—

"पाराशर्यो भारद्वाजात्, भारद्वाजो भारद्वाजाच्च गौतमाच्च, गौतमो भारद्वाजात्, भारद्वाजः पाराशर्यात्" ( शत. १४ का. ५ अ. ६ ब्रा. ) इत्यादि तत्र श्रूयते । विद्यावंशोऽयम्, अत्र प्रथमान्तोऽध्येता, पञ्चम्यन्तस्त्वाचार्यः, तस्मात्सोऽधीतवानिति व्याचक्षते भाष्यकृतः । ततश्च यदि वैयक्तिकानि स्युः, कथं भारद्वाजो भारद्वाजादेवाधीयीत । कथं वा पाराशर्यगुरुर्भारद्वाजः पुनः स्वतृतीयशिष्यात् पाराशर्याद्धीयीत । तस्माद्वंशगतान्येवैतानि । गुरुवंश्यः कश्चनाग्रे शिष्यवंश्यादपि कस्माच्चिदधीयीतेति नैतदाश्चर्यम् ।

अस्मिन् वंशब्राह्मणेऽपि कानिचित् प्रातिस्विकानि नामानि श्रूयन्ते, यथा "विदर्भी कौण्डिन्यो वत्सनपातो बाभ्रवात्, वत्सनपाद् बाभ्रवः पथः सौभरात्, पन्थाः सौभरोऽयास्यादाङ्गिरसात्, अयास्य आङ्गिरसः आभूतेस्त्वाष्ट्रात्" इत्यादि । अत्र कौण्डिन्य-बाभ्रव-सौभर-त्वाष्ट्रादीनि वंशनामानि, तत्सहचरितानि 'विदर्भी' 'वत्सनपात्' 'पन्थाः' 'आभूतिः' इत्यादीनि तु प्रातिस्विकान्येव नामानि स्युः, गुणविशेषादागतानि वा स्युरिति दुःशकं निश्चेतुम् । 'अयास्य आङ्गिरसः' इति तु विशिष्टमेव प्राणनामेति श्रुतौ स्पष्टम्, तस्माद् व्यक्तेर्यशोनामैवैतत् । "असितो वर्षगणो हरितात् कश्यपात्, हरितः कश्यपः शिल्पात् कश्यपात्" ( शत. १४ का. ८ अ. ५ ब्रा.) इत्यादिना द्वितीयवंशब्राह्मणेऽपि असित—हरितादीनि कश्यपादिभिर्यशोनामभिः सह प्रातिस्विकान्यपि नामान्युक्तानीति दिक् ।

---

भाषाटीका

इन ऋषियों के अपने व्यक्तिगत नाम भी रहे होंगे, किन्तु वे व्यवहृत न होने से क्रमशः विलुप्त ही हो गये । किसी किसी के वे व्यक्तिगत नाम भी उपलब्ध होते हैं—जैसे ऋषि भरद्वाज का दूसरा नाम विदधी अथवा वितथी मिलता है । किन्तु ऐसे नाम बहुत कम मिलते हैं, सब के नहीं ।

(७) एवं पुरैव प्रतिपन्नाया अपि वाचो देव्या विशेषगुणदर्शनयोगाद् अम्भृणस्य दुहिता काचिद् अनिर्दिष्टनाम्नी वागित्येवाख्यायते स्म । एवं जुहूः । एवं दक्षिणा । एवं श्रद्धा ।

(८) अथ वा मतमेतत्—याहच्छिकान्येवैतानि तासां नामानि वाग्, जुहूः, दक्षिणा, श्रद्धेति । ताः स्वनामप्रेम्णैव स्वनामप्रतिपन्नांस्तांस्तान् वागादिधर्मान् विशिष्य रूपयामासुरिति ।

(९) अथोद्भावकशब्दा अपि केचित् प्राणाः श्रूयन्ते, यथा—

---

संस्कृतव्याख्या

**पुरैव प्रतिपन्नाया वाचो देव्याः** । सर्वजगन्मूलभूता वाक् पुरैव महर्षिभिर्विज्ञातासीत्, अम्भृणस्य दुहित्रा तु तत्र विशेषधर्मा एव केचन प्रकटिता इति भावः ।

**एवं जुहूः** । जुहूदक्षिणाश्रद्धाद्या अपि ऋषिकाः । ता यज्ञाङ्गेषु जुह्वादिषु तत्तद्विशेषाविर्भावनादेव तत्तन्नाम प्राप्ता इति भावः । ऋषिकाविषये मतान्तरमाह—**अथवा मतमेतत्** । स्पष्टमिदम् ।

द्वितीयं प्रकारमुदाहरति—**अथोद्भावकशब्दाः** ।

---

भावाटीका

(७) इस ही प्रकार अनादिकाल से विराजमान एवं विज्ञात वाग् देवता के विशेषगुण-धर्मों का प्रत्यक्ष करने के कारण, अम्भृणऋषि की पुत्री ( जिसका व्यक्तिगत नाम उपलब्ध नहीं है ) अपने आपको वाक् के नाम से ही प्रख्यात करती है। इस ही तरह जुहू, दक्षिणा, श्रद्धा आदि स्त्री ऋषिकाओं के नाम भी यशोनाम ही हैं। यज्ञकी जुहू का विशेषरूप से ज्ञान प्राप्त करनेवाली जुहू कहलाई-आदि आदि ।

(८) स्त्री ऋषिकाओं के संबन्ध में कुछ विद्वान् ऐसा भी मानते हैं कि वाक, जुहू, दक्षिणा, श्रद्धा आदि नाम वास्तव में उन-उन व्यक्तियों के भी नाम थे, और अपने इन नामों से विशेष प्रेम होने के कारण ही उनने इन नामों वाली देवताओं का आराधन वा अन्वेषण किया, इसलिये ये नाम द्रष्टा और दृश्य दोनों के मुख्य नाम ही हैं। अस्तु ।

(९) उद्भावक ऋषि का नाम ही उद्भावित प्राण का भी नाम होता है—इसके कुछ दृष्टान्त दिये जाते हैं। जैसा कि 'कुमार अग्नि' और 'अप्रतिरथ इन्द्र'। बृहद्-

'कुमारोऽग्निः' 'अप्रतिरथ इन्द्रः' । इह हि कुमारोऽयं ब्राह्मणबालकस्त्रैवृष्णस्य राज्ञो रथचक्रघातान्मृतस्तत्पुरोहितेन पुनरुज्जीवितश्चासीत् । तेन दृष्टत्वादसौ (अग्निः) तन्नाम्नैव ख्यातिमगात् । स ह्येष कुमारोऽग्निरष्टरूपश्च पशुपतिश्चेत्यन्यत्र विस्तरः ।

(१०) एवमिन्द्रस्य राज्ञः पुत्रोऽयमप्रतिरथो नाम । तेन दृष्टोऽयं संग्रामविजयकारीन्द्रो यजमानात्मनि संनिधापितः प्राणविशेषोऽप्यत्राप्रतिरथो नाम ।

(११) क्वचित्पुनर्नैवं समानशब्दत्वं दृश्यते, यथा—"अजान् ह

---

संस्कृतव्याख्या

इह हि कुमारोऽयम् । बृहद्देवताग्रन्थे आख्यानमिदम् । रथचक्राघातेन मृतः पुनरुज्जीवितश्च स कुमार एव ऋषित्वं प्राप्तः । तेनाग्नेर्विशिष्टं रूपं किञ्चिद् दृष्टं वर्णितं च । तच्च तेन दृष्टमग्निरूपं तन्नाम्ना 'कुमारोऽग्निः' इत्येव ख्यातिमगात् । सोऽष्टरूपः, पशुपतिश्चोच्यते—इति दैवतप्रतिपादकेषु ग्रन्थेषु विस्तरेण द्रष्टव्यम् ।

---

भाषाटीका

देवता ग्रन्थ में एक इतिहास है कि 'कुमार नामक एक ब्राह्मण बालक त्रैवृष्ण नामक राजा के रथ के पहिये के नीचे पिसकर मर गया था, उस बालक को राजा के पुरोहित ने पुनः जीवित किया था, वह बालक आगे चलकर बहुत बड़ा ऋषि हुआ। उसने एक नये प्रकार के अग्नितत्त्व के विशेष गुण-धर्मों का प्रत्यक्ष किया था। इस कारण उसके द्वारा प्रत्यक्ष किया गया अग्नि 'कुमाराग्नि' नाम से ही प्रसिद्ध हुआ। यह कुमाराग्नि ८ प्रकार का है, एवं यह ही पशुपति कहलाता है—यह विषय अन्यत्र देववर्णन में विस्तार से वर्णित हुआ है।

(१०) इस ही प्रकार इन्द्र नाम के राजा का पुत्र 'अप्रतिरथ' नामक हुआ, इसने संग्राम में सर्वत्र विजय प्राप्त करनेवाले, एक विशेष प्रकार के इन्द्रप्राण का प्रत्यक्ष करके, उसे यज्ञ द्वारा आत्मा में प्रतिष्ठित किया—इस ही कारण वह विशेष प्रकार का इन्द्रप्राण भी 'अप्रतिरथ इन्द्र' नाम से प्रसिद्ध हुआ।

(११) कहीं कहीं उद्भावक ऋषि और उद्भावित प्राण के समान नाम नहीं भी होते हैं—जैसा कि 'अजान् ह वै' आदि पूर्वप्रकरणोक्त मन्त्र में विश्वामित्र के गोत्र में वा अन्यत्र उत्पन्न अज और पृश्नि नाम के ऋषियों का मन्त्रद्रष्टा रूप से

वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंम्भ्वभ्यानर्षत् । तदृषीणामृषित्वमिति" इति श्रुतौ विश्वामित्रगोत्रस्थानामन्येषां वा केषाञ्चिदजपृश्नीनिद्धिनामकानामृषीणां द्रष्टृत्वमाख्यायते । दृश्यन्ते च तदार्षेया मन्त्राः, किन्तु नाजपृश्निसंज्ञा देवाः श्रूयन्ते । तदित्थं क्वचिद् व्यभिचारेऽपि प्रायेणोद्भावकानां द्रष्टॄणामुद्भावितानां च प्राणानां समानशब्दत्वं सिद्धम् ।

(१२) परे त्वाहुः । नैवं द्रष्टुर्वसिष्ठशब्दत्वे वसिष्ठप्राणोद्भावकत्वमात्रं हेतुः । अपि तु वसिष्ठप्राणेनैव कृतात्मत्वमपि । इह हि प्राणिनामध्यात्मं चतुर्विधो ग्रामो व्याख्यातः, तत्रान्यतमे प्राण-

---

संस्कृतव्याख्या

**परे त्वाहुः** । नैवं दर्शनमात्रात् तन्नामभाक्त्वम्, अपि तु तमेव प्राणं मुख्यतया आराध्य य आत्मनि संनिधापयति, स वसिष्ठादितत्तन्नामभाग् भवतीति मतान्तरमित्यर्थः ।

**चतुर्विधो ग्रामः** । सर्वेषामपि प्राणिनां स्वरूपे 'आत्मग्रामः' 'प्राणग्रामः' 'भूतग्रामः' 'पशुग्रामः' इति चत्वारो ग्रामाः स्थिताः । आद्यौ द्वावन्तश्चरौ, परौ द्वौ तु बहिश्चरौ । ग्रामो नाम समूहः । आत्माप्यनेकै रूपैः कार्यं करोतीति तानि रूपाणि आत्मग्राम उच्यते । निरूपितमिदमुपोद्घाते । तथैव

---

भाषाटीका

उल्लेख है, और इनके द्वारा देखे गये अनेक मन्त्र भी संहिता में मिलते हैं । किन्तु अज एवं पृश्नि नाम के देवता कोई नहीं मिलते । इस प्रकार उपर्युक्त समान नाम की परिभाषा कहीं व्यभिचरित भी होती है, किन्तु ऐसा क्वचित् ही हुआ है । बहुत जगह तो उद्भावक-द्रष्टा ऋषि और उसके द्वारा उद्भावित प्राण एक ही नाम से कहे गये हैं ।

(१२) एक मत ऐसा भी है कि वसिष्ठ आदि प्राणों के केवल दर्शनमात्र कर लेने से वे वसिष्ठ आदि नहीं होते हैं । अपि तु उन वसिष्ठ आदि प्राणों की वे अपनी आत्मा में प्रतिष्ठा कर लेते हैं, तब प्रतिष्ठित उनकी आत्मा ही वसिष्ठप्राणमय होने से वसिष्ठ हो जाती है । वैदिक सिद्धान्त में प्राणियों में चार प्रकार के आध्यात्मिक ग्राम ( समूह ) माने गये हैं, इनके नाम क्रमशः आत्मग्राम, प्राणग्राम, भूतग्राम और पशुग्राम हैं । (इनका पृथक् पृथक् विवेचन यथावसर किया जायगा)।

ग्रामे यस्यायं वसिष्ठो मुख्यप्राणोऽङ्गी भवति, स वसिष्ठात्मकत्वाद् वसिष्ठ इत्युच्यते । "वैशेष्यात्तु तद्वादः" इति न्यायात् ।

(१३) अपि च श्रद्धामयोऽयं पुरुषो "यो यच्छ्रद्धः स एव सः" इति स्मृतेर्यस्मिन् पुरुषे वसिष्ठविषयिणी श्रद्धा भूयसा भवति,

---

संस्कृतव्याख्या

प्राणापानादीनां समूहः प्राणग्रामः । भूतग्रामः–पञ्चभूतात्मकं स्थूलशरीरं प्रसिद्धमेव । पशुग्रामस्तु–लोमनखाद्याः, शारीराणि मलानि च । तत्र प्राणग्रामे सर्वविधानां प्राणानां स्थितावपि यस्य सुचिरमाराधनाद् वसिष्ठप्राणः प्रबलतामापद्याङ्गी जातः, अन्ये तु प्राणा अङ्गतां गताः, स उच्यते वसिष्ठ इति । 'वैशेष्यात्तु तद्वादो भवति' यस्य रूपस्य वैशिष्ट्यम्, तेनैव रूपेण स पदार्थः ख्याप्यत इति ।

श्रद्धामयोऽयं पुरुषः । दोषदर्शनानुकूलवृत्तिप्रतिबन्धिका मनोवृत्तिः, तया वृत्त्या तदभिमुखीभावः, तेन कृतश्च तेन तेन सहात्मनः संश्लेष इति सर्वमिदं श्रद्धापदेनोच्यते । तन्मयः पुरुष इत्यस्यायमभिप्रायो यत्पुरुषस्य क्वचिच्छ्रद्धा पूर्वसंस्कारानुसारेणावश्यं भवति । यद्विषयिणी च श्रद्धा, तत्संश्लेषात्तद्रूपतामेवासौ गच्छतीति । अनेन च न्यायेन वसिष्ठविषयकश्रद्धावतो वसिष्ठत्वं बोध्यमित्यभिप्रायः ।

अस्तु यथा तथा वा, भृगुवसिष्ठनामानो विद्वांसोऽवश्यं पुरा भारते बभूवुरित्यत्र न विवादः । ते च वेदप्रवर्तकाः । तैर्दृष्टाश्च प्राणाद्याः सृष्टि-

---

भाषाटीका

इनमें अन्तर्गत प्राणग्राम में यद्यपि सब प्रकार के ऋषिप्राणों की स्थिति है, किन्तु मनुष्य जब वसिष्ठप्राण की आराधना करता है तो वसिष्ठप्राण उस मनुष्य में अधिक रूप में बढ जाता है, इस अधिकता के कारण वह अङ्गी—प्रधान बन जाता है, तभी वह व्यक्ति वसिष्ठ कहलाता है । अर्थात् यद्यपि अल्पमात्रा में वसिष्ठ के अतिरिक्त दूसरे प्राण भी उसमें रहते हैं, किन्तु "विशेषता होने से ख्याति होती है" इस न्याय से वसिष्ठप्राण प्रधान होने से वसिष्ठ नाम हो गया ।

(१३) स्मृति में यह भी कहा गया है कि पुरुष श्रद्धामय होता है–इसलिये जो जिसमें श्रद्धा रखता है–तद्रूप ही हो जाता है, इससे भी जिस पुरुष की वसिष्ठ-

स वसिष्ठमयो वसिष्ठ इत्येव ख्यातः । एवं सर्वत्र द्रष्टव्यम् ।

(१४) तथा च सिद्धम्—सन्ति स्म पुरा काले भृग्वङ्गिरोऽत्रिनामानः, मत्स्यवसिष्ठागस्त्यनामानः, कश्यपकौशिकनामानश्च पारोवर्यविदो विद्वांसः । त एवैते वेदप्रवर्तका वेदाचार्या ऋषय इति ।

(१५) त एते सृष्टिप्रवर्तकाः प्राणविधाः वेदप्रवर्तकाश्च मनुष्यरूपाः समाननामत्वाद्, घनिष्ठसंबन्धाच्च सहैवात्र व्याख्येयाः । तत्रैतेषां सृष्टिप्रवर्तकत्वं व्याख्यातुं सृष्टिप्रक्रिया तावत् संक्षेपेण प्रदर्श्यते ।

इति ऋषिसामान्याधिकारः ।

इति प्रथमं प्रकरणं पूर्णम् ।

---

संस्कृतव्याख्या

प्रवर्तकाः । समाननामत्वाद् घनिष्ठसंबन्धाच्च ग्रन्थेऽस्मिन् प्राणरूपा मनुष्यरूपाश्च ऋषिविशेषाः सहैवाख्येयाः । सृष्टिप्रवर्तकत्वस्य सुखबोधाय सृष्टिप्रक्रियातु ऋषिविशेषाख्यानात् पूर्वमेव संक्षेपेण प्रदर्शनीयेति ।

इति ऋषिसामान्याधिकारो नाम प्रथमं प्रकरणं समाप्तिमगात् ।

---

भाषाटीका

प्राण में अधिक श्रद्धा है—वह वसिष्ठमय हो जाता है—यह सिद्ध होता है । वह वसिष्ठ का केवल उदाहरण है—इसही प्रकार सब जगह समझना चाहिये ।

(१४) अस्तु, सिद्ध यह हुआ कि प्राचीन काल में इस भारत में भृगु, अंगिरा, अत्रि, मत्स्य, वसिष्ठ, अगस्त्य, कश्यप एवं कौशिक नामों से प्रसिद्ध पारदर्शी विद्वान् हुए थे । वे ही हमारे वेदों के प्रवर्तक अथवा वेदों के आचार्य ऋषि माने जाते हैं ।

(१५) यों सृष्टिप्रवर्तक और वेदप्रवर्तक ऋषियों के समान नाम होने के कारण और दोनों का घनिष्ठ संबन्ध होने के कारण दोनों की व्याख्या एक साथ ही की जायगी । किन्तु ऋषियों में सृष्टिप्रवर्तकता का ज्ञान कराने के लिये पहले संक्षेप से सृष्टिप्रक्रिया का निरूपण आवश्यक है, अतः पहले सृष्टिप्रकिया ही संक्षेप में कही जाती है ।

यह ऋषिसामान्याधिकार नाम का प्रथम प्रकरण समाप्त हुआ ।

—:o:—

अथ

## द्वितीयं प्रकरणम्

### उक्थं प्रतिष्ठा सामेति कारणब्रह्मलक्षणम् ।

(१) उक्थं, प्रतिष्ठा, सामेति त्रिलक्षणमद्वितीयं किञ्चिदेकं तत्त्वं ब्रह्म । यत उत्तिष्ठते, तदुत्थं सदुक्थं नाम । स्वतोऽनुपक्षीणं

---

अथ

## द्वितीयं प्रकरणम्

### संस्कृतव्याख्या

प्रतिज्ञातसृष्टिप्रक्रियायाः संक्षिप्तं विवरणमारभमाणस्तदुपयोगिनः पारिभाषिकान् शब्दान् पूर्वं व्याचष्टे—**उक्थं प्रतिष्ठा सामेति ।** ब्रह्मैव जगतोऽस्य मूलकारणमिति श्रुतिस्मृतिपुराणदर्शनादीनामार्यशास्त्राणामैकमत्येन निरूढः सिद्धान्तः । कथमिदं निश्चेयं व्युत्पित्सुभिरिति गहनतत्त्वप्रवेशाय युक्त्युपाश्रयः श्रुत्या प्रदर्शितः—येषां पदार्थानाम्—उक्थम्, प्रतिष्ठा, साम च यद्भवति, तत्तेषां कारणं निश्चेतव्यम् । यत उत्तिष्ठते ( प्रादुर्भवति—जायते ) कार्यजातं तदुक्थम्, यदाश्रयेण तिष्ठति—सा प्रतिष्ठा । यच्च सर्वेषु कार्येषु समत्वेन अनुगतम् तत्साम । यथा घट-कुडय-शरावाद्याः कार्यविशेषा मृद एवोत्तिष्ठन्ते—इति मृदेवैषामुक्थम्, उत्तिष्ठन्ते यस्मादिति व्युत्पत्त्या बाहुलकेन सिद्धस्योत्थशब्दस्यवर्णविकारेणोक्थशब्दनिष्पत्तेः ।

मृदाश्रयेणैव चैते तिष्ठन्ति तेन प्रतितिष्ठन्त्यस्यामिति व्युत्पत्त्या मृदेवैषां

---

## द्वितीय प्रकरण

### भाषाटीका

[ पूर्व प्रकरण के अन्त में यह कहा जा चुका है कि आगे सृष्टिप्रक्रिया का संक्षिप्त निर्वचन करना है, तदनुसार यहाँ सृष्टिविचार प्रस्तुत है । प्राचीन दार्शनिक विद्वानों का मत है कि यह संपूर्ण सृष्टि एक ही मूलतत्त्व से उत्पन्न हुई है, उस ही में पुष्ट एवं पल्लवित होती है, अन्त में फिर उसी में लीन हो जाती है । वह एक मूलतत्त्व ब्रह्म ही है । विचारकों ने उसे दो रूपों में पाया है, एक कारणब्रह्म और एक कार्यब्रह्म । इनमें उक्थ, प्रतिष्ठा, साम इन तीनों का संवलित रूप—कारणब्रह्म है । या यों कहिये कि—]

(१) उक्थ, प्रतिष्ठा, साम ये तीनों कारणब्रह्म के लक्षण हैं, इन तीनों लक्षणों से लक्षित वह एक अद्वितीय तत्त्व है । जिससे संपूर्ण पदार्थ उठते-निकलते प्रकट

सदपूर्वं भावयतीति बृंहणशीलत्वात् तद् ब्रह्म ।

✓ (२) उत्पद्योत्पद्यार्थजातं यत्र प्रतितिष्ठति सा प्रतिष्ठा नाम ।

---

संस्कृतव्याख्या

प्रतिष्ठा । सर्वेषु चैतेषु कार्येषु समानभावेन मृत्समनुगता ( अनुस्यूता ) अनुभूयत इति मृदेवैषां साम । सम एव वर्णद्वयोपजननात्साम बोध्यम् । एभिरेव हेतुभिर्घटकुड्यशरावादीनां कारणं मृदवधार्यते ।

तथैव सच्चिदानन्दलक्षणाद् ब्रह्मण एव जगदुत्तिष्ठते, तत्रैव प्रतितिष्ठति, तच्चास्मिन् जगति साम्येन सर्वत्रानुस्यूतमिति तदेव कारणं निर्धार्यत इति प्रघट्टकस्यास्य सारः । ब्रह्मशब्दस्य कथमेतेऽर्था इत्यप्यत्रोक्तम् । बृंहणार्थकाद् बृहिधातोर्मन् प्रत्यये ऋकारस्य रकारतामापाद्य निष्पन्नो ब्रह्मशब्द उक्थरूपतां प्रत्याययति, स्वयमनुपक्षीणस्य कार्यविस्तार एवोपबृंहणमिति । बिभर्तीति ब्रह्मेति भृधातोर्मन्प्रत्यये 'भर्मन्' इति जाते ततो निष्पन्नो ब्रह्मशब्दः प्रतिष्ठाबोधकः ।

वर्गाणां प्रथमवर्णस्योष्मणा संयोगे द्वितीयवर्णरूपता भवति तृतीयस्य चोष्मणा योगे चतुर्थवर्णतेति भाषाशास्त्रविदः । सोऽयमूष्मा विचाली नैकत्रावतिष्ठते ।

ऊष्मण एव च रूपं हकारः । ततश्च 'भर्मन्' शब्दे भकारस्थस्योष्मणो हकाररूपेण पृथग्भावे, भकार ऊष्मणा विरहितो 'ब'काररूपतां यात इति बर्ह्मन् शब्दो जातः । रेफोऽप्ययं भवति विचालीति अकारोत्तरं स्थितस्य तस्याकारात्पूर्वमागमने निष्पन्नो 'ब्रह्मन्' शब्दः । बृहिधातोर्निष्पन्ने ब्रह्मशब्देऽपि रेफस्य विचालितैव हेतुः, ऋकारस्य मध्ये हि रेफः, अभितश्चाजभक्तिरिति रेफो यदा कृत्स्नाया अजभक्तेः पूर्वमागच्छति, अजभक्तिश्च रेफत्यक्ता अकाररूपतया परिणमते, तदा ऋकारो 'र' रूपतां गच्छतीति । त एवंविधा भाषाशास्त्रनियमा अपि ग्रन्थकृता 'वर्णसमीक्षायाम्' बहवो निर्दिष्टास्तत्रैवावलोक्या विद्वद्भिः ।

ब्रह्मणो बृंहणं जगदिति तत्र सर्वत्र साम्येन ब्रह्मणोऽवस्थितिरर्थसिद्धेति सामशब्दार्थोऽपि बृहिधातुनिष्पन्नाद् ब्रह्मण एव लभ्यते ।

---

भाषाटीका

होते हैं, उसे उक्थ कहते हैं । मट्टी से घड़ा बनता है तो मट्टी घड़े को उक्थ है, वैदिक निर्वचन के अनुसार उत्थ शब्द का उक्थ शब्दरूप से व्यवहार होने लगा है । 'बृंह' धातु से ब्रह्म शब्द बनता है । उसका अर्थ है बृंहण—अर्थात् बढ़ना । बृंहण वह है—जो अपने आप क्षीण न होता हुआ नई वस्तु बनावे ।

(२) ये सब पदार्थ उत्पन्न होकर जिसके आधार से स्थिर रहते हैं—वह प्रतिष्ठा है, मट्टी ही घड़े की प्रतिष्ठा है, घड़ा मट्टी के आधार से ही ठहरा है ।

बिभर्ति सर्वमिति—भर्मत्वात् तद् ब्रह्म ।

(३) अद्भ्य उत्थितेषु, अप्सु प्रतिष्ठितेषु—फेन-हिम-श्लेष्माद्यर्थजातेषु यथापः साम्येन वर्तन्ते, सिकता-शर्करा-श्मायोहिरण्येषु यथा पृथ्वीभावो दृश्यते, तथैतेषु सर्वेषु भिन्नेष्वपि यावदभिन्नं सत्तासामान्यं तत् सर्वत्र समत्वात् साम नाम । सर्वत्रोपबृंहितत्वाच्च तद्ब्रह्म ।

---

संस्कृतव्याख्या

**अद्भ्य उत्थितेषु** । साम्नो दृष्टान्तद्वयमत्रोपादीयते । फेन हिम-श्लेष्माद्या अद्भ्य एवोत्थिताः, अप्सु च स्थिताः, इति आपोऽपि समेन रूपेणैष्वनुगता इत्याद्यालोच्यम् । अद्भ्यः पृथिव्या उत्पत्तौ अष्टाववस्थाः शतपथब्राह्मणे दर्शिताः, इहाप्यग्रे प्रदर्श्याः—आपः, फेनः, मृत्स्ना, सिकता, शर्करा, अश्मा, अयः, हिरण्यम्–इति । तत्राद्यास्तिस्रोऽप्सु एव गण्यन्ते, अग्रिमास्तु पञ्च पृथिवीरूपतयेत्यप्युदाहरतैव सूचितं द्रष्टव्यम् ।

**सत्तासामान्यम्** । ब्रह्म हि सत्, चित्, आनन्दः इति त्रिरूपमिति उपनिषदां घण्टाघोषः । तत्र सद् इति न सत्तावदुच्यते, किन्तु सत्तारूपमेवेति स्फुटं वेदान्तविदाम् । यद्यपि निर्विशेषं ब्रह्म न केनापि शब्देन प्रतिपादयितुमर्हम्, तथापि निष्पन्ने जगति एतै रूपैर्ब्रह्मणो व्याप्तिः सर्वत्र जायत इति तात्पर्येणेमानि ब्रह्मणो रूपाणि वदन्ति शास्त्राणि । तत्रापि सत्तारूपं सर्वैः स्फुटमनुभूयते–इति तदेव ब्रह्मणो रूपमत्रोदाहृतम् ।

---

भाषाटीका

संपूर्ण पदार्थों का जो भरण-पोषण करता है, वह ब्रह्म है, इस तरह भरणार्थक भृञ् धातु से भी ब्रह्म शब्द बनता है—वह प्रतिष्ठारूप अर्थ का बोधक होता है ।

(३) जैसे जल से उत्पन्न हुए फेन, हिम, कफ आदि भिन्न भिन्न रूपों में, जल समान रूप से व्याप्त रहता है । रज, शर्करा, ( बालू मिट्टी ) पत्थर, लोह, सुवर्ण आदि विभिन्न रूपों में पृथिवीतत्त्व सब में समान रूप से व्याप्त रहता है । इस हीप्रकार पृथिवी आदि जगत् के सब भिन्न तत्त्वों में अभिन्नरूप से वर्तमान एक सत्तारूप है–जो सर्वत्र समानभाव से रहने के कारण साम कहलाता है, यह अर्थ भी ब्रह्मशब्द का बृंह धातु से हो जाता है ।

(४) तदित्थंलक्षणम्–"ब्रह्म वेदमग्र आसीदेकमेवाद्वितीयम् ।"
( गो. ब्रा. पू. १।१ )

ब्रह्मणो व्याकरणम् ।

(५) तदव्याकृतपूर्वं बृंहणस्वाभाव्याद् व्याक्रियते । अविभक्तस्य विभक्त्युत्पत्तिर्व्याकरणम् । उन्मुग्धावस्थस्योद्‌बुद्धावस्था व्याकरणम् । निर्विशेषाद्विशेषाभिव्यक्तिरुद्बोधः । मनः प्राणो

---

संस्कृतव्याख्या

**तदित्थंलक्षणम् ।** इमान् स्वीयान् शब्दान् 'ब्रह्मवेदम्' इत्यादिभिः श्रौतैः शब्दैः संयोज्य वाक्यमेकं निष्पादितं ग्रन्थकृता । इयं शैली अग्रेऽपि यथायथं द्रष्टव्या ।

**निर्विशेषाद् ।** प्रथमे प्रकरण आरम्भ एव चतुष्पाद् ब्रह्म व्याकुर्वाणै-

---

भाषाटीका

(४) उक्त क्रमानुसार उक्थ, प्रतिष्ठा, साम इन तीनों लक्षणों से लक्षित जो कारण ब्रह्म है, वही अकेला इस जगत् की उत्पत्ति से पूर्व वर्तमान था ।

[ जब जल से पृथ्वी बनती है तब उसके क्रम से ८ रूप होते हैं—१ आप् २ फेन ३ मृत्स्ना ४ सिकता ५ शर्करा ६ अश्मा ( पत्थर ) ७ अयः ( लोहा ) और ८ सुवर्ण । इनमें आदि के तीन जलतत्त्व में ही परिगणित होते हैं, और आगे के ५ पृथ्वीतत्त्व में । ]

[ संपूर्ण वेदान्तों का सिद्धान्त है कि–सत्, चित्, आनन्द ये तीनों ब्रह्म के रूप हैं, इनमें सत् शब्द से सत्तावाले का ग्रहण नहीं है, अपितु सत्तारूप ही ब्रह्म है । यद्यपि सर्वत्र व्यापक-निर्विशेष-ब्रह्म के लिये किसी शब्दविशेष का संकेत नहीं किया जा सकता, तोभी संसार जब बन जाता है तब उस जगत् में सत्ता, चेतना, आनन्द इन रूपों में ब्रह्म पहचाना जाता है–ऐसा शास्त्र बतलाते हैं । उनमें भी सत्ता-रूप की व्यापकता का सर्वत्र स्पष्ट अनुभव होता है । संसार में वर्तमान प्राणी 'यह है' 'मैं हूँ'–यह ही अनुभव करता है–इसलिये मूल में 'सत्तासामान्य' कहकर उस व्यापक ब्रह्म तत्त्व का सत्तात्मक रूप ही दृष्टान्त में दिखाया है ]

(५) उपर्युक्त, उक्थ, प्रतिष्ठा, सामरूप ब्रह्म सृष्टि से पूर्व एक–अविभक्त रूप में रहता है, किन्तु कहा जा चुका है कि वृद्ध्यर्थक बृंह धातु से ब्रह्म बनता है–तब अपने आप अविकृत रहता हुआ भी वह अनेक रूपों में विभक्त प्रतीत होने लगता है–इस ही को ब्रह्म का 'व्याकरण' कहते हैं । जो वस्तु विभक्त नहीं है–उसका अनेक विभक्त रूपों में दीखना ही व्याकरण कहलाता है । वा यों कहो कि जगत् पहले ब्रह्म

**वागिति सृष्टिसाक्षित्रैविध्येनारब्धः कर्मपुरुषो वा, मनो विज्ञान-मानन्द इति मुक्तिसाक्षित्रैविध्येनारब्धो विद्यापुरुषो वा—ब्रह्मणो**

---

संस्कृतव्याख्या

रस्माभिः 'निर्विशेषः' 'परात्परः' 'पुरुषः' 'सत्यः' ( प्रजापतिः ) इति चत्वारः पादाः प्रदर्शिताः। तत्र विशेषस्य-वक्तव्यस्य कस्यापि धर्मस्याभावादयं प्रथमः पादो वाङ्मनसातीतो निर्विशेष उच्यते। तत्र प्रसुप्तस्य बलस्योद्बोधे च परात्परः-इत्युक्तम्। जागर्त्याप्तेन बलेन परिच्छेदे कृते तु पुरुषप्रादुर्भावः। तत्रापि प्रथमः—अव्ययपुरुषः, तस्य पञ्च कला इत्यादि यदुक्तम्, ता एव कला अत्र ग्रन्थकृता प्रदर्शिताः। अव्ययपुरुषस्यैव च आदिकलात्रितयावच्छेदेन विद्यापुरुषत्वम्, अन्त्यकलात्रितयावच्छेदेन च कर्मपुरुषत्वं व्यवहृतम्। आसां कलानां पृथक् पृथगपि ब्रह्मशब्देन व्यवहार इति चोक्तम्। अत्र च वाक्पदम् 'अवाक्' पदे 'अव' इत्युपसर्गस्याद्याकारलोपे संपन्नं द्रष्टव्यम्। अवाञ्चति-अर्थरूपेण विवर्तमाना अवरदशां प्राप्नोतीत्यर्थावगमात्। मनःप्राणयोरवाक्

---

भाषाटीका

में उन्मुग्ध (सुप्त) अवस्था में था, उसका जागरण अवस्था में आ जाना ही व्याकरण है। निर्विशेष में विशेषों का प्रकट होना ही 'जागरण' कहा जाता है।

[ आरम्भ में—निर्विशेष, परात्पर, पुरुष और सत्य अथवा प्रजापति—ये ब्रह्म के चार पाद बताये जा चुके हैं। इनमें सब से प्रथम अवस्था में ब्रह्म के अतिरिक्त कुछ होता ही नहीं, कोई गुण वा धर्म भी उसमें प्रकट नहीं है, इसलिये किसी विशेष शब्द का प्रयोग भी नहीं किया जा सकता—वह निर्विशेष रूप कहलाता है। इस पूर्वावस्था में विशुद्ध रस ही रहता है, बल सर्वथा सुप्त रहता है। स्मरण रहे कि रस और बल यह दोनों ही सृष्टि के मूल तत्त्व हैं। वह बल जब उद्बुद्ध होता है—तब परात्पर दूसरी अवस्था कही जाती है। बल के उद्बुद्ध वा जागरित होने पर, वह बल निःसीम रस की एक सीमा बनाता है, और परिमित होते ही पुरुष रूप बन जाता है। इस तरह सबसे पहला पुरुष 'अव्यय' प्रकट होता है—इस अव्ययपुरुष की पांच कला पहले कही जा चुकी हैं। ]

उनमें से तीन सृष्टिसाक्षी कला—मन, प्राण और वाक् से कर्मपुरुष बनता है जो कर्म अर्थात् क्रिया करता है—अर्थात् जगत् की रचना करता है। और मन, विज्ञान एवं आनन्द इन तीन मुक्तिसाक्षी कलाओं से विद्यापुरुष अर्थात् ज्ञानमय पुरुष होता है, जो कर्मबन्ध को तोड़ने वाला होता है। इस तरह आनन्द, विज्ञान,

व्याकृतं रूपम् । विद्यापुरुषः सृष्टिबन्धभोक्ता, कर्मपुरुषस्तु सृष्टिबन्धकर्त्ता ।

(६) तानीमानि पृथग् ब्रह्माणि । तत्र मनस्तावद् ज्ञानानां, प्राणः क्रियाणां, वागर्थानामुक्थं च भवति, प्रतिष्ठा च, साम चेति । अन्योन्याविनाभूतमेतत् त्रितयमेको भाव आत्मा नाम । "स वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः" ( शत. १४।४। ३।१० ) प्रतिपत्तव्यः ।

---

संस्कृतव्याख्या

अवरा भवतीति वा । यद्वा–उकारः प्राणमाह, अकारश्च मनः, उश्च अश्च वौ, तावञ्चति तद्गर्भिता तत्सहचरी वा सदा भवतीति वाक् । सर्वस्यार्थजातस्येयमुपादानमिति भाव्यम् ।

---

भाषाटीका

मन, प्राण और वाक् ये अव्यय पुरुष की ५ कलाएं हुईं । इनमें मन दोनों जगह रहता है। ये दोनों ब्रह्म के ही व्याकृत रूप हैं। एक सृष्टिरूप बन्धन दृढ करनेवाला और एक खोलने वाला ।

(६) ये पाँचों कलाएं पृथक् पृथक् भी ब्रह्म कही जा सकती हैं। पूर्वकथित क्रमानुसार मन संपूर्ण ज्ञानों का, प्राण संपूर्ण क्रियाओं का और वाक् संपूर्ण अर्थों का ( विषयों का ) उक्थ होता है। संपूर्ण ज्ञान मन में ही प्रादुर्भूत होते हैं, सारी क्रियाएँ प्राण से ही होती हैं, और संपूर्ण विषय वाक् से ही बनते हैं। इसलिये ये तीनों मन, प्राण, वाक्, ज्ञान, क्रिया और अर्थ के उक्थ, प्रतिष्ठा और साम होते हैं। ये मन, प्राण और वाक् तीनों सदा एक साथ ही रहते हैं, एक के बिना दूसरा रह ही नहीं सकता। इन तीनों का संमिलित रूप ही आत्मा कहा जाता है। यही श्रुति ने कहा है कि आत्मा–वाङ्मय, मनोमय और प्राणमय है।

[ यहाँ 'वाक्' शब्द 'अवाक्' में अकार का लोप होकर बना है, इससे 'वाक्' उसे कहते हैं—जो नीचे की ओर जाती हो। अर्थों के रूप में परिणत होना ही–उसका नीचे की ओर जाना है। क्योंकि अर्थों में चैतन्य की अभिव्यक्ति नहीं रहती। दूसरा 'वाक्' शब्द का अर्थ यह भी है कि 'उ' अर्थात् प्राण और 'अ' अर्थात् मन—इन दोनों को अपने गर्भ में लेकर वह चलती है–अपना काम करती है। बिना मन और प्राण के वह नहीं रहती। ]

आत्मनः सत्यरूपेण विश्वव्यापित्वम्।

(७) आतश्चायमात्मा धर्माणि धारयमाणो धर्मी भवति। नानुपसृष्टः स कदाचिदुपपद्यते। प्राणः शक्तिः। तेनायं कुर्वद्रूपो ऽनवरतं किञ्चित्करोति।

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्"

( भगव० गी० )

---

संस्कृतव्याख्या

**नानुपसृष्टः**। धर्मैर्विरहितः कदापि नोपलभ्यत एवं विध आत्मेति तात्पर्यम्।

**आत्मा, प्राणाः, पशवः**। वाक्प्राणमनोमय आत्मेत्युक्तम्। सोऽयमात्मा व्यावहारिकः जगच्चक्रनिर्वाहकः, न विभुः, किन्तु परिच्छिन्न इत्यप्युपपादितं पुरुषस्वरूपविवरणे। किन्तु मूलमस्य ( परात्परः ) अपरिच्छिन्नम्। अपरिच्छिन्नांश एष परिच्छेदमाप्तः पुनरपरिच्छिन्न एव भवितुं काङ्क्षते प्रकृतिनियमेन। तत एव स्वस्माद् बहिरवस्थितानन्यान् वागादीनात्मनि प्रवेशयितुमस्येच्छा जायते सैवोच्यते 'अशनाया'। तया प्रेरितश्चायमात्मा अशनभूतस्यान्यस्य ग्रहणाय बलमाददानः प्राणांशेन चरति, तदा अर्को नाम प्राण आत्मनः सहचरः, अमात्यभूतः शरीरभूतो वा प्रादुर्भवति। स चायं यत्किञ्चिद् बहिष्ठं गृहीत्वा आत्मना सह अन्तर्यामेन, बहिर्यामेन, उपयामेन वा संबन्धेन वक्ष्यमाणेन योजयति--तद्योज्यमानं पशुशब्देन बोध्यम्।

तदेवाग्रे स्पष्टीक्रियते। **सोऽर्चं श्चरति**। अर्चनं नाम अशिति ( अशन )-ग्रहणाय बलग्रहणमित्यग्रे मूल एव वक्ष्यते। ततश्च वाक्-प्राण-मनोमय आत्मा अशितिग्रहणाय बलमुपाददानश्चरतीति संपन्नः शब्दार्थः। अर्चनेन परस्य

---

भाषाटीका

(७) इससे सिद्ध हुआ कि यह आत्मा 'निर्विशेष' की तरह 'निर्धर्मक' ( बिना गुण-धर्म का ) नहीं है, अपितु धर्मों को धारण करनेवाला अर्थात् धर्मी है। धर्म से विरहित यह कभी नहीं रहता। अपनी प्राणस्वरूप शक्ति से यह सदा कुछ न कुछ करता रहता है। भगवद्गीता में भी कहा है कि कोई भी प्राणी किसी भी क्षण किसी क्रिया के बिना नहीं रहता है। और साथ ही ( मन के द्वारा ) वह सदा

अनवरतं च किञ्चिज्जानाति । आत्मा, प्राणाः, पशव इत्येवं त्रिवृद्रूपं सत्यम् ।

(८) यावदुकूथं स आत्मा । सोऽर्चंश्चरतीत्यर्का एतस्य प्राणाः । अन्तर्याम-बहिर्यामोपयामादिभिस्तदनुगृहीताः पशुभावा अशि-

---

संस्कृतव्याख्या

ग्रहणादेव हेतोरत्रार्कशब्दः प्रवर्तते,—इति स्पष्टं बृहदारण्यकोपनिषदि ( १ अ० २ ब्रा० १ क० )

अन्तर्याम—बहिर्याम । षड्विधो यामनाम्ना संबन्ध आगन्तुकस्य भवतीति व्याख्यातं ग्रन्थकृता 'ब्रह्मसमन्वय' नामके ग्रन्थे । नाभिविन्दौ ( केन्द्रे ) दृढं संबध्यात्मरूपतया परिणतिरन्तर्यामः । नाभिबिन्दावसंबन्धेऽपि अङ्गेषु संबध्य शरीररूपेण परिणतिर्बहिर्यामः । संयोगमात्रमुपगम्य व्यभिचारिरूपेण बहिरवस्थितिरुपयामः । बहिरवस्थितस्यापि उद्रिक्ततया मुख्यवस्तुनोऽभिभव इव उद्यामः । अन्नभावमुपगम्य अन्नादरूपेण किञ्चित्कालिकी परिणतिराप्तोर्यामः । लक्ष्यच्युत्या वृथाभावगमनं यातयाम इति ।

अत्र दृष्टान्ता अपि तत्रैवोक्ताः । यथा जले वरुणाग्न्योः संबन्धो जलस्वरूपनिष्पादको अन्तर्यामः । यमाधुनिकाः पाश्चात्यवैज्ञानिकाः हाइड्रोजन-आक्सिजनसंबन्धनाम्ना व्यवहरन्ति । उष्णे जलेऽनुभूयमानोऽग्निसंबन्धो बहिर्यामः । पात्रे धृतस्याग्नेः पात्रेण संबन्ध उपयामः । दिवः ( सूर्यकिरणानाम् ) पृथिव्या संबन्ध उद्यामः । ( तत्र द्यौरुल्वणा पृथिवीमभिभवन्तीव लक्ष्यते ) । भुक्तस्यान्नस्योदरे संबन्ध आप्तोर्यामः । असात्म्यभुतस्यान्नस्य ( वमनादिना निष्क्रमणार्थमेव ) उदरसंबन्धस्तु यातयामः ।

यद्वा—रुधिरे रक्तवर्णस्य संबन्धोऽन्तर्यामः । सोऽप्यग्निसंबन्धादेवोत्पद्यते, परं रुधिरस्यात्मतां गच्छति, रक्तवर्णापाये रुधिरत्वस्याप्यपायात् ।

---

भाषाटीका

कुछ जानता रहता है । इस प्रकार सतत क्रिया होने से आगे तीन रूप बन जाते हैं—आत्मा, प्राण और पशु । इन तीनों का संवलित भाव 'सत्य' कहा जाता है ।

(८) स्मरण रहे कि आत्मा 'उकूथ' है, वहां से सृष्टि चलती है । वह जब बल ग्रहण कर अशन लेने को चलता है, तो अर्थरूप होता है, जो इसका सहचर प्राण हैं । [ यह भी स्मरण रहे कि यह व्यावहारिक—जगच्चक्र चलाने वाला आत्मा व्यापक नहीं है, परिछिन्न हो गया है-अर्थात् सीमा में आ गया है—जैसा कि कह चुके हैं ।

तयः। आत्मन्यश्नुवते इत्यशितयः। उक्थमर्कोऽशितिरित्येवं

---

संस्कृतव्याख्या

वस्त्रादौ रक्तवर्णसंबन्धस्तु बहिर्यामः, स्वरूपप्रवेशे सत्यपि तदपाये वस्त्रस्वरूपाक्षतेः। जपाकुसुमसंनिधाने स्फटिकस्य रक्तवर्णसंबन्ध उपयामः, स्वरूपे अप्रवेशात्। अम्बरे प्रतीयमान इन्द्रधनुषो रक्तवर्णसंबन्ध उद्यामः, उद्रिक्ततया प्रतीतेः। उद्यति सूर्यमण्डले दृश्यमानो रक्तवर्णसंबन्धस्तु आप्तो-

---

भाषाटीका

किन्तु इसका मूल परात्पर अपरिच्छिन्न था। यह एक प्रकृति का नियम है कि अंश सदा अंशी की ओर जाना चाहता है, अतः अपरिच्छिन्न का यह अंश अपरिच्छिन्न ही बनना चाहता है। अतः अपनी सीमा से बाहर जो वाक् आदि हैं—उन्हें अपने भीतर लेने की इसकी इच्छा होती है—उसे 'अशनाया' ( भूख ) कहते हैं। उस इच्छा वा उसके द्वारा आत्मा का उठना ही अर्क है। उस अशनाया की प्रेरणा से बाहर से लिये जाने वाले ( पशुरूप ) पदार्थों का संबन्ध जो कि याम शब्द से व्यवहृत होता है—यह ६ प्रकार का माना जाता है।

नाभि-बिन्दु अर्थात् मध्यकेन्द्र में दृढता से संबद्ध होकर जो तत्त्व आत्मा के स्वरूप में परिणत हो जाता है—अन्तः प्रविष्ट हो जाने के कारण उसका वह संबन्ध 'अन्तर्याम' संबन्ध कहलाता है। जैसा जल में वरुण और अग्नि का संबन्ध—जिसके आधार से जल का स्वरूप बना है और बना रहता है। यह हाइड्रोजन और आक्सिजन के संबन्धरूप में पाश्चात्त्य जगत् में व्यवहृत है। और जो मध्यकेन्द्र में संबद्ध न होकर भी अङ्गों में संमिलित होकर शरीर रूप होता है—उसका वह संबन्ध बहिर्याम कहलाता है, जैसे गरम किये हुए जल में अग्नि का संबन्ध। इस ही तरह जिस पदार्थ का संयोग-संबन्ध मात्र होता है—स्वस्वरूप में अन्तःप्रवेश नहीं होता, पदार्थ पृथक् ही रहता है-उसका वह उपयाम संबन्ध कहा जाता है। जैसे पात्र का और घृत का, एवं च पात्र के साथ अग्नि का। पृथक् रहते हुए भी उभड़ा हुआ होने के कारण जो मुख्य वस्तु को दबा सा लेता है—जैसे द्युलोकस्थ सूर्य की किरणों का संपूर्ण पृथ्वी पर प्रभावित हो जाना, उसका वह संबन्ध उद्याम कहलाता है। जहाँ एक वस्तु अन्न बन कर कुछ काल के लिये भोक्ता के रूप में परिणत हो जाती है—उसका वह संबन्ध आप्तोर्याम कहलाता है। और जहाँ खाया हुआ अन्न उदर में पच नहीं पाता, वमन आदि के द्वारा बाहर निकल जाता है—वह व्यर्थ संबन्ध यातयाम कहा जाता है। अर्क द्वारा लाये गये अर्थों का इन ६ संबन्धों में से कोई संबन्ध आत्मा के साथ हुआ करता है। 'पशु' का

त्रिवृत्कृतं रूपं सत्यम् ।

(९) सत्येन रूपेण पशुषु प्राणावस्थितिः । आत्मनो ज्ञानं नाम विकासो रूपम् । तथा चायमेक आत्मा सर्वज्ञः सर्वशक्तिमान् सर्वधर्मोपपन्नश्च । सर्वा एताश्चेष्टाः सर्वा अभिव्यक्तयः सर्वा

संस्कृतव्याख्या

र्यामः, संयुक्तपदार्थसंबन्धेनोत्पन्नस्य रक्तवर्णस्य क्षणिकरूपेण मण्डलाङ्कतागमनात् । चक्षुषो विकारेण श्वेतादिष्वपि दृश्यमानो रक्तवर्णसंबन्धस्तु यातयाम इति । तत्र क्वचिद् बहिर्यामसंबन्धेन क्वचिदुपयामसंबन्धेन वा संबद्धानां पशुभावो भवतीत्यग्रे स्पष्टं व्याख्यास्यते—'पशवः' इतिशीर्षकप्रकरणे ।

**सत्येन रूपेण ।** उक्तेन सत्येन ( आत्मा, प्राणाः, पशवः इति; उक्थम्, अर्कः, अशितिः इति वा ) रूपेण पशुषु अपि प्राणस्य—अर्कस्य, अवस्थितिर्भवति । पशूनाहृत्य तेष्वपि प्राणस्तिष्ठतीति । इदमप्यग्रे स्फुटं स्यात् । अत्र निदर्शनमुच्यते—**आत्मनो ज्ञानं नाम विकासो रूपमिति** । चरन्नर्कप्राणो यदा बहिःष्ठं वागादि गृहीत्वा मनस्यर्पयति, तदा योऽयमात्मनो-मनसो विका-

भाषाटीका

संबन्ध कहीं 'बहिर्याम' और कहीं 'उपयाम' है—यह विषय आगे मूल में ही आवेगा । ]

वे लिये गये पशुभावापन्न पदार्थ अशिति ( अर्थात् भोजन ) कहे जाते हैं। इस प्रकार उक्थ, अर्क और अशिति इन तीनों का संवलित रूप सत्य कहा जाता है। अर्थात् पहले जो आत्मा प्राण और पशु इन तीन को सत्य बताया है, वहां प्राण का ही दूसरा नाम अर्क और पशु का दूसरा नाम अशिति जानना चाहिये ।

(९) इस सत्य रूप से पशुओं में प्राणों की स्थिति होती है। अर्थात् अर्क पशु को लाकर उस पर स्वयं स्थित होता है। यह विषय भी आगे स्पष्ट होगा। इसका एक उदाहरण देते हैं कि जैसे आत्मा का विकसित रूप ज्ञान कहा जाता है। विचरता हुआ अर्क जब वाक् को लाकर मन में अर्पित करता है, तो मन का विकास होता है। इसे ही ज्ञान कहते हैं। इसमें वह वाक् ( पदार्थ ), जो विषय रूप से प्रविष्ट हुई, वह पशु है।

इस प्रकार यह आत्मा सर्वज्ञ, सर्वशक्तिमान्, संपूर्ण धर्मों से युक्त है ।

व्यक्तयश्चायमेको भाव आत्मा। नातोऽन्यत् किञ्चिदस्ति।

—:o:—

# कार्यब्रह्म।

## उक्थं प्रतिष्ठा सामेति व्यस्तं कार्यब्रह्मलक्षणम्।

(१) ततः कार्यब्रह्माऽभवत्। कार्यब्रह्मणि च कार्याणां वैचित्र्यादिदं त्रैविध्यं भिन्नाश्रयं व्यवतिष्ठते। तथा हि—सूर्यो वा, चन्द्रो

---

संस्कृतव्याख्या

सः—उपबृंहणं जायते, तदेवात्मनो रूपमुच्यते ज्ञानमिति। तत्र ज्ञाने विषयतया भासमानाः पदार्थाः पशवो ज्ञेयाः, ज्ञानस्वरूपाप्रवेशात्। तदेतदुक्तं श्रुतौ 'यत् किञ्चित्पश्यति, अनन्वागतस्तेन भवति' इति। तथैवात्मभूतस्य प्राणस्य वाचश्चापि विकास ऊह्यः।

तदेवं स्वस्वरूपेणायमात्मा सर्वज्ञः—सर्वं ज्ञातुमस्यास्ति शक्तिः। सर्वशक्तिमान्—सर्वं कर्त्तुमस्यास्ति शक्तिः। सर्वधर्मोपपन्नः-सर्वमुत्पाद्य धर्मतया ग्रहीतुमप्यस्त्यत्र सामर्थ्यम्। स एवंविधोऽयमात्मा सर्वरूपः, सर्वमेतत्स्वरूप एवान्तर्भवतीति।

एवं च सर्वमिदं जगत्-समष्टिरूपेण व्यष्टिरूपेणापि च 'ब्रह्मैव' उच्यते। 'सर्वं खल्विदं ब्रह्म'—न ब्रह्मातिरिक्तं किञ्चित्।

—:o:—

**भिन्नाश्रयं व्यवतिष्ठते।** मूलभूते परब्रह्मणि उक्थप्रतिष्ठासाम्नामेकत्रैवावस्थितिरुक्ता। कार्यब्रह्मणि तु एषां पृथक् पृथक् स्थानेष्ववस्थितिरुच्यते। **इदं त्रैविध्यम्—उक्थं प्रतिष्ठा सामेति त्रीणि रूपाणि।** प्रत्येकं पिण्डे (**पदार्थे**)

---

भाषाटीका

अर्थात् सब पदार्थों को जानने की, सब कुछ करने की और सब को धर्मरूप से अपने भीतर लेने की इसमें शक्ति है। संपूर्ण क्रियाएँ, सब वस्तुओं की अभिव्यक्ति और जगत् के सब पदार्थ आत्मा ही हैं। आत्मा के अतिरिक्त कहीं कुछ नहीं है।

—:o:—

(१) इस प्रकार कारणब्रह्म दृष्टान्तों से समझाया गया, अब दूसरे रूप कार्यब्रह्म का निरूपण करते हैं—

**वा, पृथिवी वा, क्षुद्रः प्रस्तरखण्डो वा, सर्वमिदमेकैकं ब्रह्म त्रेधा-**

---

संस्कृतव्याख्या

त्रिरूपता व्याख्यायते—तस्य नाभिः ( केन्द्रम् ) प्रथमं रूपम्, यद् 'अनिरुक्त-प्रजापति' शब्देनोच्यते, तदाधारेणैव स पदार्थः प्रतिष्ठितः। तच्चलने एव पिण्डे चलनव्यवहारः। यत्र तु भ्राम्यति चक्रादौ केन्द्रस्य न प्रचलनम्, तत्रावयवगतिसद्भावेऽपि पिण्डस्य चलनं नास्त्येव। अत्र मुख्या शक्तिस्तिष्ठतीति व्याख्यातमुपोद्घाते।

द्वितीयं तु रूपं दृश्यमानः पिण्ड एव। सा 'निरुक्ता वाक्' इति उच्यते, इन्द्रियादिभिः पिण्डस्यैव ग्रहणात्, तस्यैव च शब्देन प्रतिपादनात्। अथ पारावतप्रकरणे भृग्वङ्गिरःप्रकरणे च व्याख्यास्यमानात् प्रकारात्तस्य पिण्डस्य प्रतनने यावद्दूरं तस्य सीमा ( यत्रस्थः पुरुषः पिण्डमिमं पश्यति, तद्बिन्दोः परतश्च न पश्यति )। तत्रान्तिमं मण्डलं तृतीयं रूपम्। अत्र प्रथमं रूपं 'प्रतिष्ठा' द्वितीयम्-'उक्थम्', तृतीयं तु 'साम'। अत्र उक्थपदमपि 'उक्त' पदे तकारस्य थकारापत्त्या सिद्धम्।

त्रिविधा हि शब्दा भवन्ति—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च। यत्र प्रकृति ( धातु ) प्रत्ययविभागः स्पष्टं भासते, ते प्रत्यक्षवृत्तयः। यत्र विचारेणोहितुं शक्यते, ते परोक्षवृत्तयः। यत्र तु ऊहेऽपि काठिन्यं भवति, ते अतिपरोक्षवृत्तयः। तत्र 'उकथ' पदमिदं परोक्षवृत्ति जातमिति मूले 'पारोदयाद् उकथं नाम' इत्युक्तम्। 'परोक्षप्रिया इव हि देवाः' इति श्रुतावसकृदुच्यते।

सामपदं च समत्वादेव, किन्तु समत्वम्—अभितः समानरूपेण पिण्डस्य प्रसरणमिति व्याख्येयम्। यद्वा-सर्वाणि अभितो दृश्यमानानि उकथानि-( पिण्डाः ) महोक्थेन-मूलपिण्डेन समानीति सामपदं व्यवहार्यम्। यद्यपि दूरात् पिण्डो लघीयान् दृश्यते, न समीपस्थेन दृश्यमानेन समः, परं सोऽयं मूलपिण्डस्यानुविधायी भवति। मूलपिण्डो यदि महान्, तर्हि सामापि तस्य महद् भविष्यति। यदि तु ह्रस्वः, तर्हि सामापि तस्य ह्रस्वं स्यादिति साम्यमवगन्तव्यम्।

---

भाषाटीका

उक्त कारणब्रह्म से कार्यब्रह्म उत्पन्न हुआ। कहा जा चुका है कि कारणब्रह्म में उक्थ-प्रतिष्ठा-साम भिन्न भिन्न नहीं होते, एक ही स्थान में तीनों रहते हैं। परन्तु कार्य अनन्त और विचित्र होते हैं, इसलिये कार्यब्रह्म में ये तीनों उक्थ प्रतिष्ठा और साम भिन्न भिन्न आधार में रहते हैं।

त्मानं प्रत्यवसृज्य रूपं धत्ते—उक्थं, प्रतिष्ठा, साम चेति ।

(२) यावानेष दृश्यते कश्चन पिण्डस्तदेकमेकं पृथगुक्थं भवति । सेयं निरुक्ता वाक् । तस्मादुक्तं सदेतत् पारोक्ष्यादुक्थं नाम । तदन्तर्नाभौ प्रतिष्ठा नामेन्द्रः प्राणः । तत्प्रचलने पिण्डप्रचलनम्, तदप्रच्युतौ पिण्डो न प्रच्यवते । तस्मात् सा प्रतिष्ठा

---

संस्कृतव्याख्या

इदं त्रितयं सर्वत्र परस्परमविनाभूतम्, एकतत्त्वे तदितरद् द्वयमपि स्यादेव । अतः परस्परात्मत्वमेषाम्, त्रितयं चेदं वस्तुन आत्मेति सर्वमिदं शतपथब्राह्मणस्य नवमदशमयोः काण्डयोर्विशिष्य व्याख्यातमिति प्रबन्धकस्यास्य सारः ।

---

भाषाटीका

चाहे सूर्य हो अथवा चन्द्रमा, संपूर्ण पृथिवी हो अथवा छोटासा प्रस्तर खण्ड—ये सब पृथक् पृथक् एक एक ब्रह्म हैं । यह ब्रह्म तीन रूप से अपने आपको अभिव्यक्त करता है, अर्थात् पृथक् पृथक् तीन रूप बनाता है—उक्थ, प्रतिष्ठा और साम ।

(२) जो पृथ्वी, सूर्य आदि वा पृथ्वी का अंश पर्वत, प्रस्तर आदि कोई भी पिण्ड दिखाई देता है—वह अपने में से पृथक्-पृथक् उत्पन्न होने वाली (निकलने वाले-प्राण वाक् आदि) वस्तुओं का उक्थ होता है । इसी पिण्ड को सब देखते हैं, और यही वाणी द्वारा कहा जाता है । इसलिये 'उक्त' शब्द से ही 'उक्थ' शब्द हो गया है । श्रुति में अनेक स्थानों में कहा गया है कि देव (विद्वान्) परोक्षप्रिय होते हैं, अर्थात् शब्द को 'परोक्ष वृत्ति' बनाकर बोलते हैं । 'उक्त' शब्द प्रत्यक्षवृत्ति है, उसमें धातु, प्रत्यय विभाग स्पष्ट प्रतीत होता है । किन्तु 'उक्त' का 'उक्थ' कर देने से वह विभाग स्पष्ट नहीं रहता । परोक्ष (गुप्त) हो जाता है । इसलिये उक्थ पद परोक्षता से अर्थ बताने वाला 'परोक्षवृत्ति' हुआ । इस पिण्ड को ही 'निरुक्ता वाक्' नाम से श्रुतियों में कहा गया है । (पूर्वोक्त ऋक् साम और यजु के वैज्ञानिक रूपों में-यह ही ऋक् है) । इसके मध्यकेन्द्र (नाभि बिन्दु) में प्रतिष्ठित प्राणशक्ति 'इन्द्र' कहलाती है । इसके स्थान छोड़ने से—संपूर्ण पिण्ड प्रचलित होता है, और इस नाभिगत प्राण के स्थिर रहने पर वह पिण्ड भी स्थिर रहता है । इसलिये यह मध्य प्राण पिण्ड का 'प्रतिष्ठा' रूप है ।

**नाम । अथैष पिण्डोऽनिदूरात् परिपश्यतां दृश्यो भवतीति तल्लोकालोकमण्डलं तदन्तर्मण्डलं च सर्वं साम । समं हि सर्वतो दिक्षु तद्दर्शयतीति साम नाम । तत्र दृष्टं चोक्थं महोक्थेन समं भवतीत्यतोऽपीदं साम नाम ।**

**(३) प्रतिष्ठा हि उक्थस्यात्मा साम्नश्च, उक्थं साम्न आत्मा, प्रतिष्ठायाश्च, सामाप्यात्मा प्रतिष्ठाया उक्थस्य च । न त्वेषामेकमन्येन विना भवति । यत्सत्तया यस्य सत्ता, स तस्यात्मा । तस्मादुक्थम्, प्रतिष्ठा, साम चात्मा—इत्याह भगवान् वाजसनेयः ।**

---

भाषाटीका

[ फिरकनी या चाक के खूब घूमते रहने पर भी केन्द्रबिन्दु स्थान नहीं छोड़ती—इसलिये वह पिण्ड भी स्थान नहीं छोड़ता । वहाँ अवयव-क्रिया ही रहती है—समुदाय—क्रिया नहीं हो पाती । इस 'केन्द्रशक्ति' को 'अनिरुक्त प्रजापति' कहा जाता है, इसका विवरण आगे किया जायगा । ]

अब तीसरा रूप बताते हैं कि—यह पिण्ड बहुत दूर से देखा जाने पर भी दिखाई देता है । एक बिन्दु ( स्थान ) ऐसी है, जहाँ तक वह दिखाई दे—और उससे आगे बढ़ते ही दिखाई न दे । वह लोकालोक मण्डल कहा जाता है । वह अन्तिम मण्डल और उतनी दूरी के बीच के सब मण्डल 'साम' कहे जाते हैं । सब दिशाओं से देखने पर वे समान ही दीखते हैं—इसलिये उनका नाम 'साम' होता है । अथवा वे भिन्न भिन्न स्थानों से देखे जानेवाले पिण्डरूप उक्थ, उस मूलभूत ( मुख्य पिण्ड ) महान् उक्थ के समान ही होते हैं—इसलिये भी उन्हें साम कहा जा सकता है ।

[ यद्यपि समीप से वस्तु जितनी बड़ी दीखती है, दूर से उतनी बडी नहीं दिखाई देती, क्रम से छोटी होती जाती है, इसलिये उसे समान नहीं कह सकते । किन्तु समानता का अभिप्राय यह है कि—जैसा ( छोटा या बड़ा ) मूल पिण्ड होता है, वैसे ही ( छोटे या बड़े ) साम बनते हैं । छोटे पिण्ड का साम बड़ा हो जाय, और बड़े का छोटा हो जाय—ऐसा नहीं हो सकता । इसी आधार पर इसे साम कहते हैं । सम से साम बना है । ]

(३) यह प्रतिष्ठा—उक्थ और साम की आत्मा है, उक्थ—प्रतिष्ठा और साम की आत्मा है, और इस ही प्रकार साम भी प्रतिष्ठा और उक्थ की आत्मा है । इन में से एक भी दूसरे के बिना नहीं ठहर सकता । जिस एक की सत्ता से दूसरे की सत्ता रहती है—वह उसकी आत्मा होती है । इस ही लिये भगवान् याज्ञवल्क्य

आत्मा हि ब्रह्म । तदित्थंलक्षणं 'ब्रह्मैवेदं सर्वम्' । तथा चोकूथं प्रतिष्ठा सामेति व्यस्तं कार्यब्रह्मलक्षणं बोध्यम् ।

सूर्य-चन्द्र-पृथिव्यो ब्रह्मजातयः ।

(४) अस्ति हि त्रिविधैतस्य ब्रह्मणो जातिः । स्वयंज्योतिः सूर्यो नाम, परज्योतिश्चन्द्रो नाम, रूपज्योतिः पृथ्वी नाम । तत्र यद्यपि सूर्यचन्द्रयोरेवाभिसमाम्नाये साम्नोऽभ्युपपत्तिः श्रूयते—

"सर्वं तेजः सामरूपं ह शश्वद्" इति मन्त्रश्रुतौ ज्योतिष्येव साम्नः प्रतिपादनात् । तथापि तयोरद्धातमां सामप्रतिपत्तेरुदा-

---

संस्कृतव्याख्या

**त्रिविधैतस्य ब्रह्मणो जातिः ।** कार्यब्रह्म ज्योतिर्दृष्ट्या त्रिविधं भवतीति भावः । तदेतत्स्पष्टं प्रदर्शितं मूले । अन्यत्र तु 'अज्योतिः', इति चतुर्थ्यपि विधोक्ता । वाय्वादीनि नीरूपाणि, सूक्ष्माः परमाण्वादयोऽदृश्या वा तत्र जातावन्तर्गता बोध्याः ।

**अद्धातमाम् ।** अद्धातमाम्-ज्योतीरूपेण विस्पष्टं दर्शनार्हमित्यर्थः । तेजस्विनां हि सूर्य-चन्द्र-दीपादीनां साम स्पष्टं विशदं भवति । यदा वयं निविडान्धकारमयेऽरण्ये दीपमेकं स्थापयामः, तदा स्पष्टं पश्यामो यद्यथावलमस्य दीपस्य प्रकाशोऽभितः प्रसरति, अन्तिमं च तन्मण्डलं स्पष्टं दृश्यते । यावति दूरे च दीपो द्रष्टुं शक्यते, तस्यापि स्थानस्य मण्डलं स्फुटमवगन्तुं शक्यते । तदेतन्मण्डलं तस्य दीपस्य साम । एवमेव सूर्यस्य चन्द्रस्य

---

भाषाटीका

( शतपथब्राह्मण के नवम, दशम काण्डों में ) कहते हैं कि—उक्थ, प्रतिष्ठा और साम ही आत्मा हैं । आत्मा ही ब्रह्म है—यह कहा जा चुका है । अतः सिद्ध हुआ कि यह सब कुछ ब्रह्म ही है । ब्रह्म से अतिरिक्त कुछ नहीं ।

इस प्रकार के उक्थ, प्रतिष्ठा, साम—कार्यब्रह्म के लक्षण बताये गये—यह ध्यान में रखना चाहिये ।

(४) उक्थ-प्रतिष्ठा-सामात्मक यह कार्यब्रह्म, तीन जातियों में विभक्त उपलब्ध होता है । एक स्वयंज्योति ( अपने आप दीप्ति रखने वाला ) जैसे—सूर्य भगवान् । दूसरी जाति परज्योति ( दूसरे से प्रकाश लेकर प्रकाश करने वाला ) जैसे-चन्द्रमा ।

हरणविधया तदाख्यानम्, न तु पृथिव्यां तदभावे तात्पर्यम् ।

---

संस्कृतव्याख्या

वा साम स्फुटमनुमातुं शक्यम् । अनन्त आकाशे सूर्योऽपि दीप इव स्वप्रकाशमण्डलं निर्माति । तस्यापि वर्त्तत एवान्तिमं साममण्डलम् । यतश्च सूर्यो दृश्यते, यतः परं न दृश्यते, तदपि लोकालोकनाम्ना प्रसिद्धं पुराणेषु । केचिदेवमप्याहुः—यत् स्वज्योतिषः परज्योतिषो वा प्रकाशो यावतीं सीमामाक्रामति, तदेव तस्य साममण्डलं ज्ञेयम् । रूपज्योतिषस्तु पृथिव्यादेर्यत्पर्यन्तं दृश्यते रूपम्, तदेव तस्य साममण्डलमिति । तस्मात्सूर्यप्रकाशो यत्र समाप्नोति, तदेव लोकालोकमण्डलं ज्ञेयमिति ।

इदन्तु स्पष्टमेव—यत् स्वज्योतिषः परज्योतिषो वा साममण्डलं स्फुटं शक्यं बोद्धुम्, रूपज्योतिषस्तु तत्समाहितप्रज्ञैरेवानुमेयं स्यात्, न साधारणानां जनानां तत्र साममण्डले विश्वासोऽभ्युदियात् । पार्थिवस्यापि पदार्थस्य प्राणानां पिण्डाद् बहिर्दूरपर्यन्तं व्याप्तिरिति न सुकरं सर्वान् प्रतिबोधयितुम् ।

---

भाषाटीका

और तीसरा रूपज्योति-अर्थात् ज्योति (प्रकाश) न फैलाता हुआ भी रूपवान् दिखाई देने वाला, जैसे-पृथिवी, और पृथ्वी जाति के मृत्तिका-प्रस्तर आदि ।

[ एक 'अज्योति' नाम का कार्यब्रह्म का रूप ग्रन्थकार ने अन्य ग्रन्थों में और माना है—जो कि दीखता भी नहीं—जैसे वायु वा पृथिवी आदि के छोटे कण । इस प्रकरण में अपेक्षा न होने से वह यहाँ उद्धृत नहीं किया गया ]

यद्यपि 'सर्वं तेजः' आदि मन्त्र में तेज को ही साम रूप कहा है, और तेज दीप्त-ज्योतिर्मय, प्रकाशमान पदार्थ को ही कहते हैं । किन्तु इससे यह नहीं समझना चाहिये कि पृथ्वी के साम का वहाँ निषेध किया गया है ।

उसका तात्पर्य इतना ही है कि सूर्य, चन्द्रमा, दीप, आदि तैजस द्रव्यों में वह साम पूर्णतया स्पष्ट दिखाई देता है—इसलिये तेज शब्द का उदाहरणरूप से श्रुति में व्यवहार हुआ है ।

[ जैसा किसी घने अँधेरे वन में एक दीपक जलावें, तो उसके प्रकाश का अन्तिम मण्डल स्पष्ट दिखाई देगा । जहाँ तक वह दिया दिखाई देता है, वहाँ का मण्डल भी स्पष्ट अनुमान किया जा सकता है । इसी प्रकार सूर्य और चन्द्रमा भी अनन्त आकाश में अपने प्रकाश का मण्डल बनाते होंगे—यह भी स्पष्ट अनुमान हो सकता है । सूर्य के उस प्रकाशमण्डल को ही पुराणों में 'लोकालोक' कहा है । लोकालोक—अर्थात् जहाँ प्रकाश और अन्धकार मिल से जाते हैं । एक बिन्दु पर

समानन्यायात् सर्वत्र सामोपपत्तेः। अथ वा रूपस्यापि तेजोविशेषतया पृथिव्यामप्यञ्जसैवेयं श्रुतिः कृतार्थां भवतीति वेद्यम् ।

इच्छा-तपः-श्रमाः सृष्टिहेतवः

(५) सृष्टेः प्राक् सृष्टिस्थितिकाले चेत्थं ब्रह्मणस्त्रैविध्यलक्षण-

---

संस्कृतव्याख्या

तत एव श्रुत्या तेज एव सामरूपतयोदाहृतम् । किन्तु रूपज्योतिषो नास्त्येव साममण्डलमिति नैतच्छ्रुतेस्तात्पर्यमिति । पृथिव्या रथन्तरसाम्नः सर्वत्र श्रुतिषु व्याख्यातत्वात् । रथन्तरपदार्थश्चास्माभिर्व्याख्यातपूर्वः । यद्वा—आकाशादिषु पञ्चसु महाभूतेषु शब्दादिरेकैक एव गुणः स्वीयः, अन्ये तु पञ्चीकरणादन्यदीयास्तत्रानुवर्त्तन्त इति मते रूपं तजोगुणत्वात् तेजःशब्देनैव ग्राह्यम् । ततश्च रूपज्योतिषोऽपि तेजःपदेन श्रुतौ ग्रहणमुपपद्यत एवेति समाधेयम् ।

इत्थं सामान्येन ब्रह्मणः कार्यं जगदित्यतिसंक्षेपतो निदर्शितम् । विवृतश्चैष सिद्धान्तोऽस्माभिरुपोद्घाते । अथात्र ग्रन्थेऽप्येतत् किञ्चिद्द विवरीतुं

---

भाषाटीका

प्रकाश और उससे आगे के विन्दु पर ही अन्धकार। पृथ्वी आदि विना ज्योति के पदार्थों का ऐसा मण्डल सब की समझ में नहीं आ सकता, इसलिये श्रुति ने तेज का ही उदाहरण दिया। ]

किन्तु रूपज्योति पृथिवी का साम नहीं है—यह कैसे कहा जा सकता है? क्योंकि पृथ्वी पिण्ड में उक्थ और प्रतिष्ठा रहें, और साम न हो—यह नहीं हो सकता। ये तीनों साथ ही रहते हैं—किसी एक के अभाव से ही वह पिण्ड नष्ट हो जायगा। अन्यत्र श्रुतियों में पृथ्वी का 'रथन्तर' साम स्पष्ट लिखा भी है। रथन्तर का अर्थ पूर्व प्रकरण में लिख आये हैं।

अथवा एक यह भी मत है कि—आकाश, वायु, तेज, जल और पृथ्वी का मुख्य एक एक गुण है, अन्य गुण इनमें अन्य भूतों के संबन्ध से प्रतीत होते हैं। तब आकाश में शब्द, वायु में स्पर्श, तेज में रूप, जल में रस और पृथिवी में गन्ध विशेष गुण सिद्ध हुआ। यों तेज का गुण रूप भी श्रुति में तेज शब्द से ही कहा गया। इसलिये उक्त श्रुति में बड़ी सरलता से पृथ्वी के रूप का भी तेज शब्द से संग्रह हो जाता है।

(५) इस प्रकार सृष्टि से पहले और सृष्टि के अनन्तर—सृष्टि के स्थितिकाल में उक्थ, प्रतिष्ठा और साम इन तीन लक्षण वाले, ब्रह्मरूप आत्मा की व्यापकता

मात्मत्वमाख्यातम् । इदानीं सृष्टिक्रमं प्रदर्शयामः । अव्याकृतं तदादौ तावत् त्रेधा व्याकृतमभवत्–मनोमयम्, प्राणमयम्, वाङ्मयं च । "यावद् ब्रह्म विष्ठितं, तावती वाक् ।" विष्ठानं संस्थानं व्याप्तिसीमा ।

या वाक्, स प्राणः, तन् मनः ।

---

संस्कृतव्याख्या

सृष्टिप्रक्रिया प्रदर्श्यते । तत्र सर्वेषामर्थानां मूलभूताया वाचो व्याप्तिस्तावत् प्रदर्श्यते—**यावद् ब्रह्म विष्ठितम्** । विष्ठानम्-अर्थात् संस्थानम्-अर्थाद् व्याप्तिसीमा । अपरिच्छिन्नस्य ब्रह्मणो मायाबलेन परिच्छिन्नेन यावान् परिच्छेदः कृतः, तत्र सर्वत्र प्रदेशे वाग् व्याप्नोतीत्यर्थः । वाक् च न मनःप्राणाभ्यां विनाकृता तिष्ठतीति तावानेव प्राणः, तावदेव च मनोऽपि बोध्यम् । ब्रह्मणो विवर्त्ता मनःप्राणवाचः सर्वस्मिन्नपि जगति (ब्रह्माण्डे) व्याप्नुवानाः सन्तीति तात्पर्यम् ।

'यावद् ब्रह्म विष्ठितं तावती वाक्' इति मूलोक्तो मन्त्रखण्डोऽयम् ।

सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित् तत् ।
सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक् ॥

इति कृत्स्नो मन्त्रः । (ऋक् सं०—८।६।१७)

कृत्स्नस्यास्य मन्त्रस्याशयः प्रकरणार्थस्य ज्ञान एव सम्यग् बोद्धुं शक्यते । नेदानीमत्र व्याख्यायते विस्तरभयात् । प्रपञ्चितस्त्वयमर्थ उपोद्घात इति तत्रैवालोच्यतां सुधीभिः ।

---

भाषाटीका

कही गई । अब सृष्टि का क्रम संक्षेप में दिखाया जाता है । सृष्टि से पूर्व अव्याकृत (भेद रहित—एक रूप में रहने वाला) वह ब्रह्म, सृष्टि के आरम्भ में तीन रूपों में व्याकृत (विभक्त) होता है, अर्थात् फैलता है । वे तीन रूप हैं—मनोमय वाङ्मय और प्राणमय । 'माया' बल से परिच्छिन्न होकर 'पुरुष' रूप हो जाने पर वह परिच्छिन्न ब्रह्म जहाँ तक व्यापक है, वाक् भी उतने ही प्रदेश में व्यापक है । वाक्, प्राण और मन के विना नहीं रहती, इसलिये प्राण और मन भी उतने ही व्यापक हैं । यों वाक् प्राण और मन एक रूप ही हैं । क्योंकि वाक्, प्राण और मन अविनाभूत अर्थात् एक दूसरे पर अवलम्बित रहने वाले सर्वप्रथम विकसित रूप हैं ।

[यहाँ मन शब्द से इन्द्रिय मन नहीं समझना चाहिए, अपितु यह एक सब पदार्थों से परे मनोमय आत्मा है । इसे श्रुति में श्वोवसीयस मन कहते हैं ।]

(६) तन्मनस्त्वादैच्छत्, प्राणत्वादभ्यतपत्, वाक्त्वादभ्यश्राम्यत् ।

अप्राप्तार्थप्राप्तिविषयिणी मनोवृत्तिरिच्छा । मनसि तद्वासना

संस्कृतव्याख्या

श्रुतिषु यत्र यत्र सृष्टिविषयोंशोऽपि प्रस्तूयते, तत्र सर्वत्र प्रायेण 'प्रजापतिरकामयत, सोऽश्राम्यत्, स तपोऽतप्यत, ( शतपथ ६।१।१।८ ) इति कामतपःश्रमाः सृष्टिहेतुत्वेन श्रूयन्ते । तेषां स्वरूपं व्याख्यातुमुपक्रमते—तन्मनस्त्वादैच्छत् । वाङ्मयः प्राणमयो मनोमय आत्मैव सत्यः प्रजापतिः । तत्र मनोऽवच्छेदेन कामः, प्राणावच्छेदेन तपः, वागवच्छेदेन च श्रम इति व्यापारत्रयं विभज्य द्रष्टव्यम् । इच्छैव कामरूपेण परिणमत इति कामं व्याख्यातुं प्रथममिच्छामाह—अप्राप्तार्थप्राप्तिविषयिणी मनोवृत्तिरिच्छा । सुप्रसिद्धमिदं न व्याख्यानसापेक्षम् । अस्या एवेच्छाया वासनापरपर्यायो यः संस्कारो मनसि तिष्ठति, स एवोच्यते काम इति । इच्छुच्च मनः प्राणं प्रेरयति । ननु प्रेरणापि स्वयं सक्रियस्यैव संभवेत्, वागिन्द्रियेण शब्दमुत्पाद्य वा, आघातेन वा, उत्थाप्य प्रक्षेपणेन वा स्वक्रियया परत्र क्रियोत्पादकस्यैव प्रेरकत्वप्रसिद्धेः । ततश्च स्वभावेनाक्रियस्य मनसः कथं प्रेरणाकर्तृत्वमपि

भाषाटीका

(६) यह त्रिरूप आत्मा मनरूप से इच्छा करता है, प्राणरूप से तप करता है और वाक्रूप से श्रम करता है ।

[ सृष्टिविषयक श्रुतियों में प्रायः सब जगह आता है कि 'प्रजापतिरकामयत,'—प्रजापति ने सृष्टि की इच्छा की, 'स तपोऽप्यत' उसके लिये प्रजापति ने तप किया, 'सोऽश्राम्यत्' और श्रम किया । वह प्रजापति वहाँ सत्य है, जो 'त्रिरूप' कहा गया है । उसमें मनोमय होने से इच्छा होती है, उसका वह तप प्राणरूप में होता है, और श्रम वाक्रूप में होता है । इस प्रकार इच्छा तप और श्रम द्वारा इनके आधारभूत मन प्राण और वाक् सृष्टि के आरम्भक होते हैं । ]

अब इच्छा का स्पष्टीकरण करते हैं कि—जो पदार्थ प्राप्त नहीं हुआ है, उसे प्राप्त करने के लिये मन की जो वृत्ति ( परिणति, अवस्था ) होती है, उसे इच्छा कहते हैं । एक बार जिस वस्तु की इच्छा हुई, उस इच्छा का जो संस्कार मन में रह जाता है, वह वासना वा काम कहा जाता है । यद्यपि स्वभावतः मन स्वयं निष्क्रिय ( क्रियारहित ) है, उसमें कोई क्रिया नहीं हो सकती किन्तु प्राण क्रियाशील है,

कामः । स्वतो मनसो निष्क्रियत्वेऽपि प्राणवैशिष्ट्याद् वृत्तिमतो

संस्कृतव्याख्या

भवेन्नामेति शङ्का समाधीयते—**स्वतो मनसो निष्क्रियत्वेऽपि** । प्राण एव क्रियाशील इति मनोवाचौ स्वयमक्रिये प्रतिपाद्येते श्रुतिषु, किन्तु प्राणसंबन्धान्मनोवाचावपि सक्रिये प्रतीयेते । यथा सांख्यानां क्रियाशीलस्य रजसः संबन्धात् सत्त्वतमसी । यथा वायुर्वेद वेदां वातसंबन्धात् पित्तकफौ । तस्मात् प्राणसंबन्धादेव क्रियावदिव मनः प्राणं स्वेच्छाविषयेऽर्थे प्रेरयतीत्युपपद्यते । इयमेव प्राणप्रवर्तनारूपा मनोवृत्तिः—'अशनाया' पदेन व्यवह्रियते श्रुतिषु ।

'मृत्युनैवेदमावृतमासीद्—अशनायया अशनाया हि मृत्युः' इत्यादि
(बृहदा. उप. अ १ ब्रा. २)

अत्र मृत्युपदं बलबोधकम्, बलस्योत्पन्नप्रध्वस्ततया मृत्युरूपत्वात् । तथा चाशनायाया बलत्वमत्र प्रतिपादितम् । अशनस्येच्छा अशनाया—इति इच्छारूपैव सा । सेयमिच्छा द्विविधा—वासनाक्रान्तमनःसमुत्था, विशुद्धमनःसमुत्था च । तत्र निर्वासनया कृतस्य कर्मणो बन्धनहेतुत्वं नास्ति । अत एवेश्वरस्य सर्गस्थितिप्रलयेच्छासत्त्वेऽपि बन्धनाभावः । जीवानां तु वासनाक्रान्ततया स्वेच्छाकृतकर्मणा जायत एव बन्धः । ये तु ज्ञानेन वैराग्येण योगेन वा निर्वासना भवन्ति, तेऽपि न बध्यन्त इति स्फुटं श्रीभगवद्गीतादिषु ।

इदमत्र तात्पर्यम्—दिग्देशकालानवच्छिन्नमनन्तं रसरूपं ब्रह्म यदा मायाबलेन परिच्छिन्नेन ससीमं कृतम्, तदैव पुरुषप्रादुर्भाव इत्यसकृदुक्तम् । पुरुषस्याव्ययस्यैव कला मन इति तस्य परिच्छिन्नत्वं सिद्धमेव । कारणं तु

भाषाटीका

उसके साहचर्य से इच्छावृत्तिवाला मन भी अशन अर्थात् भोज्य-तत्त्व-पदार्थों के ग्रहण करने के लिये प्राण ( अर्क ) को प्रेरित ( प्रवर्तनशील ) करने लगता है, यह प्रवर्तना-प्रेरणा ही अशनाया ( भूख ) अथवा इच्छा कहाती है ।

[ यह इच्छा दो प्रकार की होती है, एक तो वासनायुक्त मन से उठी हुई—सांसारिक हम लोगों की इच्छा, जो कर्मबन्ध का कारण बनती है और उत्तरोत्तर एक के बाद दूसरे कर्म कराने में प्रवृत्त करती रहती है । इस प्रकार यह कामचक्र बढ़ता ही रहता है—और वासनात्मक संस्कार मन में बराबर स्थान पाते रहते हैं । यह वासना ही बन्धन का मुख्य कारण होती है । किन्तु वासनारहित ईश्वर के शुद्ध मन में जो सृष्टि उत्पादन की इच्छा उठती है, जिससे संपूर्ण सृष्टि बनती है, वह वासना रहित होने से बन्धन करने में समर्थ नहीं होती । वह अपना कोई

यदशनाय प्राणप्रवर्त्तना वृत्तिः, साऽशनाया, सेच्छा ।

(७) उक्थार्काशितिलक्षणायां मनोवृत्तौ मनो द्वेधा रूपं धत्ते—पूर्णं चापूर्णं च । यावन्मनः, तावान् प्राणः, तावती वाक्—

---

संस्कृतव्याख्या

अस्य 'परात्परम्' अपरिच्छिन्नमिति अपरिच्छिन्नान्निष्क्रान्तं परिच्छेदमाप्तमिदम् अपरिच्छिन्नमेव भवितुं यतते । यो हि यस्यांशः स स्वांशिनमेवाप्य तद्रूपतया स्थितं निश्चलं भवति—इति नियमोऽयं सर्वत्र दृष्टः । यथा पृथिव्या अंशभूतं लोष्टप्रस्तरादिकमुपरि क्षिप्तमपि स्वकारणेन पृथिव्या आकृष्यमाणमध एव पतति । तत्रैव च स्थितं शान्तं भवति । यथा वा तेजोघनस्य सूर्यस्यांशभूतं प्रदीपादिकमूर्ध्वमुखमेव सदा विलोकयते । तद्वदेव परात्परस्य विभोरंशभूतं मन इदं तदभिमुखमेव तद्रूपतया विभुत्वमाप्तुं सततं सन्नद्धम् । तत एव स्वमपरिपूर्णं मन्यमानस्य सर्वमात्मसात्कृत्य विभुत्वमाप्तुमशनाया विजृम्भते ।

अनया पारमार्थिक्या दृष्ट्या सर्वमेव मनोऽपरिपूर्णम्, अशनायाक्रान्तं च परिच्छिन्नत्वात् । व्यावहारिकदृष्ट्या तु पूर्णत्वापूर्णत्वाभ्यां द्वैविध्यं तस्य प्रतिपाद्यते ग्रन्थे । यत्रेच्छया 'अर्क' रूपेण मनो यावन्तं विकासमाप्तम्, तावानेव तत्र बलवत्प्राणयोगोऽपि स्यात्, तावतीमेव च वाचं गृहीत्वा प्राणो मनस्युपस्थापयेत्, तदा मनसो विकासमाप्तस्य विकासरूपोंऽशोऽपि प्राणेन

---

भाषाटीका

वासनारूप संस्कार भी नहीं छोड़ती, अपि तु सृष्टि रूप कार्य करके वह निवृत्त हो जाती है । वास्तव में किसी वस्तु की न्यूनता हो जाने से, उसे प्राप्त करने के लिये जैसी लौकिक इच्छा होती है—वैसी पूर्णकाम अत एव सर्वथा निष्काम ईश्वर के मन में नहीं होती । अपि तु जैसे-विनोद में वासना न रहते भी कोई पुष्प आदि हाथ में उठा लिया जाता है, उसका खास कोई प्रयोजन नहीं होता, ठीक उस ही तरह यह 'सृष्टि' ईश्वर का विनोद मात्र होती है । अतएव उस इच्छा का कोई संस्कार अवशिष्ट न रहने से, वह बन्धन में कारण नहीं हो पाती । इस ही प्रकार निष्काम, जीवन्मुक्त वा योगयुक्त मनुष्यों में भी वासना न रहने से इच्छा बन्धन नहीं करती । वासनात्मक संस्कार से प्रवृत्ति होने पर तो बन्धकता होती ही है, अस्तु । ]

(७) इन उक्थ, अर्क और अशीति रूप मनोवृत्तियों में—यह मन दो प्रकार का हो जाता है, एक पूर्ण और दूसरा अपूर्ण । जितनी मन की इच्छा है, उतना ही

तत्पूर्णं रूपम् । यत्पूर्णं तदुक्थम्, स आत्मा ।

(८) अथात्मनो भूमस्वाभाव्याद् वृद्धिमभ्युत्क्रममाणस्य मनसो यदभ्युत्थानम्, तत्र प्राणमात्राया असहयोगाद् 'अशिति' लक्षण-वाचोऽसंपत्तिरिति वाचा प्राणेन च शून्यमात्मानं पश्यत् तदभ्युत्थितं मनोऽपूर्णं रूपम् । तद्यथा विशिष्टां सम्पदमाकाङ्क्षमाणा-

---

संस्कृतव्याख्या

वाचा च संभृत इति मनःप्राणवाचां साम्येन पूर्णता जातेति मनः पूर्णमुच्यते । यदा वा प्राणस्य वाचो वा क्वचिदर्पणेन (तपोदानादिना) विस्रंसनान् मनसो रिक्तता (विश्लिष्टाङ्गता) जाता, तदापि यदि तावानेव प्राणः, तावत्येव वाक् चान्यतो लभ्यते, तदा विस्रस्तसंभृतानां मनसि प्राणवाचां साम्येनात्मनो विश्लिष्टाङ्गपूर्त्तेः संभवान् मनः पूर्णमेव ।

यदा तु इच्छया (अर्केण) मनसो विकासो जायते, तस्मिंश्च विकासे प्राणो वाग् वा न पर्याप्नुयात्, तदा प्राणवाग्भ्यां रिक्तमिदं मनः अपूर्णम्—इत्युच्यते । यदा वा प्राणस्य वाचो वा व्ययेन (अन्यत्रार्पणेन) रिक्तता जायते, पूर्तिश्च न भवेत्, तदापि मनोऽपूर्णमित्युच्यते । यावती इच्छा भवति, तावद्यदि प्राप्यते, यावान् वा व्ययो भवति, तावदेव यदि लभ्यते, तदा मनः पूर्णम् । यदा तु इच्छा अधिका, इष्टं तु न प्राप्यते, व्ययीकृतं वा न परिपूर्यते,

---

भाषाटीका

प्राण और उतना ही वाक् का प्रसार होने पर मन का पूर्ण रूप होता है । जो पूर्ण है, वह ही उक्थ है-वह ही आत्मा है-इस प्रकार पूर्ण मन ही आत्मारूप होता है ।

(८) किन्तु यह मन स्वभावतः व्यापक पूर्ण (परात्पर) आत्मा से ही बना है—इसलिये यह भी वैसा ही पूर्ण होना चाहता है, जैसा कि पहले स्पष्ट किया जा चुका है । इस पूर्णता की प्राप्ति के लिये—अर्थात् अपने तात्कालिक रूप से बढ़ने के लिये जब मन उठता तो है, किन्तु प्राणमात्रा के साथ न दे सकने के कारण—अर्थात् मन में अशनाया का उत्थान होने पर भी प्राणरूप तत्त्व के बलवान् न होने से 'अशिति' (अन्न) रूप वाक्-संपत्ति नहीं हो पाती । तब पूरी खुराक न मिलने से वाक् और प्राण की कमी रह जाने के कारण यह मन अपने आप को वाक्, प्राण से शून्य अनुभव करता है । यह उठा हुआ किन्तु अशन न पाता हुआ मन अपूर्ण रूप है । इसका दृष्टान्त यों समझिये कि एक बहुत बड़ी संपत्ति को प्राप्त करने के लिये

सामसमर्थानां दरिद्राणां मनः ।

(९) यद्यपि नैषां वाक्प्राणमनसामेकमन्येन विनाकृतं भवति—अस्ति हि निष्क्रियस्य मनसोऽभ्युत्क्रमणार्थो मनस्यन्तर्यामः प्राणः, अस्ति चेच्छाविषयरूपा मनःस्था वाक् । तथाप्य-

---

संस्कृतव्याख्या

तदा मनः अपूर्णमिति सारः । तत्र दृष्टान्त उच्यते—यथा······दरिद्राणां मनः इति ।

अत्र शङ्कते—मनःप्राणवाचामन्योन्यमविनाकृतत्वं पूर्वमुक्तम्, इदानीन्तु मनसो प्राणवाग्भ्यां रिक्तत्वमुच्यते—इति पूर्वापरविरोध आपततीति । अत्र समाधीयते—द्विविधो हि प्राणः, द्विविधा च वाक् पूर्वं प्रतिपादिता, तत् स्मर्तव्यम् । अन्तर्यामसंबन्धेन मनसा नित्यसंबद्धौ वाक्प्राणौ आत्मभूतौ, तयोर्नाभावः कदापि भवति । यदि अयं प्राणो न स्यात्, तर्हि मनसः स्वयमक्रियत्वात् तस्योत्थानम् ( विकासः ) एव कथं स्यात् । आत्मभूतप्राणसंबन्धादेवोत्थानम् । यदि च तत्रात्मभूता वाङ् न स्यात्, तर्हि वाचम् ( संपत्तिम् ) विषयीकुर्वाणा इच्छैव कथमुदयेत । मनसि वाग्योग एवेच्छेति अग्रे वक्ष्यते । तस्मात्तयोर्नित्यः संबन्धः । यौ तु अर्काशीतिपदवाच्यौ वाक्प्राणौ प्रतिपा-

---

भाषाटीका

किसी दरिद्र मनुष्य का मन उठता तो है, किन्तु शक्ति न होने से उसे प्राप्त नहीं कर सकता—यही अपूर्ण मन का स्वरूप है ।

(९) यहाँ एक शङ्का होती है कि—मन, प्राण और वाक् की जब सर्वदा एक दूसरे के साथ ही स्थिति रहती है, और निष्क्रिय मन का उत्थान भी विना प्राण की सहायता के नहीं होता, जैसा कि कहा जा चुका है । इस ही तरह इच्छा का विषय बननेवाली वाक् भी जब मन के साथ रहती है, (वाक्-अर्थ की ही तो मन इच्छा करता है, इसलिये मन में वह वाक् आ ही गई ) फिर भी मन का अपूर्ण रूप क्यों कहा जाता है ?

इसका उत्तर यों समझिये कि—प्राण और वाक् दो प्रकार के बताये जा चुके हैं—एक प्राण, वाक् वे हैं,—जिनका मन से अन्तर्याम संबन्ध है, अर्थात् जो आत्मारूप बन गये हैं । किन्तु अशनाया से उठनेवाला प्राण ( अर्क ) उसका सहचर अमात्यरूप वा शरीररूप प्राण दूसरा है । इस ही प्रकार अशिति-अन्नरूप

शनायायामशितिं ग्रहीतुं बलं नास्ति, तत एव चाशितिर्नास्ति। तस्माद्यद्यथेच्छति, तत्तथा न शक्नोत्यात्मसात् कर्तुम्-इत्यतस्तन्मनः शून्यमात्मानं पश्यतीत्यपूर्णत्वं मनसो ब्रूमः।

---

संस्कृतव्याख्या

दितौ, तयोर्बहिर्यामसंबन्धः, स चानित्यः। मनसः प्रेरणया योऽयमर्क उत्तिष्ठते, तस्मिन् वाग्ग्रहणाय यदि बलं न स्यात्, तदा न स मनोविकासमनुधावितुं प्रभवेत्। अशनग्रहणायापेक्षितस्य बहिर्यामप्राणस्थ बलं विज्ञानाल्पतया कर्मदोषेण वाल्पं भवति, तदा स नाशितिं वाचं ग्रहीतुं समर्थो भवति। एवं च यावानस्य मनसोऽन्तर्यामप्राणः, यावती चास्येच्छाविषयभूता (बुद्धिमयी) वाक्, तदुभयसाम्येनाशितिलाभो नास्तीति वैषम्यं दुःखापादकं भवति। उभयोरन्तरसत्त्वात्, अन्तरस्य च दुःखापादकतया श्रुतिषु श्रुतत्वात्। ततश्चेयं सवासनेच्छा दुःखमयी भवत्यल्पप्राणस्येति सिद्धम्।

---

भाषाटीका

वाक् आत्मभूत वाक् से भिन्न है। इन अर्क (प्राण) और अशिति (वाक्) का बहिर्याम संबन्ध है। इस अर्क प्राण में विज्ञान की न्यूनता से, स्वभावतः, अथवा पूर्वजन्मोपार्जित कर्मों के दोष से बाहर से पदार्थ—संग्रह करनेवाला बल जब नहीं रहता, तो अर्क दुर्बल रह जाता है। इसलिये अशिति (अन्नरूप वाक्) का संग्रह करने में असमर्थ होता है। तब ही अपूर्णता रहती है। कोई मनुष्य जो चाहता है—उसे ग्रहण नहीं कर पाता है, अपने आत्मा में उसे सम्मिलित नहीं कर सकता, तब शून्यता का अनुभव करता है। यही अपूर्णता का रूप है। स्पष्ट रूप से यों समझो कि मन के साथ अन्तर्याम संबन्ध से रहनेवाले आत्मभूत प्राण में जितना बल है, अन्तर्याम से रहनेवाली (इच्छा का विषय बननेवाली) वाक् का जितना विस्तार है, उतना ही बल और विस्तार यदि अर्क और अशिति में हो, अर्थात् जितनी इच्छा हो, उतनी ही संपत्ति बलवान् प्राण ला सके, तो मन पूर्ण और विना उतने बल के अर्क-प्राण उतना संग्रह न कर सका, तो मन अपूर्ण। क्योंकि भीतर के प्राण-वाक् और बाहर के प्राण-वाक् में अन्तर—विषमता रह गई। वही विषमता दुःख का कारण है। वैषम्य वा अन्तर सर्वत्र दुःखदायक होता ही है। इस ही लिये अल्पप्राण मनुष्य की वासनालिप्त इच्छाएँ, उसके लिये दुःख का कारण बनती हैं। और इस वैषम्य के कारण ही मन भी अपूर्ण रहता है।

(१०) यदपूर्णं रिक्तोदरं लघुत्वाद् विचलितप्रायं विरिष्यमाणम्, तदर्चदचरत् । तस्मादर्को नाम । अर्चनम्–आराधनम्, साधनम्, संपादनम्—अशितिग्रहणाय बलग्रहणमिति यावत् ।

---

संस्कृतव्याख्या

उपसंहरति—यदपूर्णं रिक्तोदरम् । सर्वमेव मनः पारमार्थिकीं दृष्टिमालम्ब्य अपूर्णमित्यवोचाम । तस्मात्सर्वमेव स्वीयामपूर्णतामनुभवत् काले काले विकासमाप्नुवत्, रिक्तस्य स्वोदरस्य परिपूर्त्तये अर्चंश्चरतीति सर्वत्रैवार्को भवति । अर्चंश्चरति—इति श्रौती परिभाषा । तां व्याकर्तुमाह—अर्चनम् आराधनम् । लोके देवार्चनादिष्वेवार्चनशब्दप्रयोगः, इह तु संपादनमेवाराधनम् 'राध संसिद्धौ' इति पाणिनिस्मरणात् । तच्चाशितिग्रहणाय बलग्रहणमेव । एतद्बलविशिष्ट एवार्कः प्राण आत्मसहचरो भवतीति व्याख्यातपूर्वम् । तदेव स्मारयति—प्राणसंपत्तिराख्याता । सोऽयं प्राणो यावतीमशितिं गृह्णाति, तावतीमुक्थ आत्मनि बहिर्यामसंबन्धेन संयोजयति । तदित्थम्–आत्मा, प्राणः, पशुः—इति त्रिवृद्रूपं यत्सत्यं पूर्वमाख्यातम्-तदिदानीम्, 'प्रजा,' 'वित्तम्' इत्युभयं संयोज्य पञ्चकलात्मरूपं धत्ते । अशितिरूपेणाहृताया वाचः, प्रजारूपेण वित्तरूपेण वा स्थितत्वात् । आत्मा, प्राणः, पशवः, प्रजा, वित्तम्–इति पञ्च कलाः । एतावती खल्वात्मनो व्याप्तिः । इदानीमात्मभूतेषु प्रजावित्तादिषु यदि किञ्चिद् दैवादपरस्यात्मन आक्रमणाद्वा च्यवते, तदात्मा स्वं रिक्तं मन्यमानो दुःखयति । रिक्ततायाः पूरणार्थं च यतते । पुनरर्कमशितये प्रयोजयतीति सततमयं क्रमोऽनुवर्त्तते । यावानात्मा, ( आत्मतां गतं वित्तपर्यन्तम् ) तत्सर्वमुक्थरूपम् । पुनस्तत्रापरेच्छा, अपरोऽर्क इति । उत्थानम्, विकासाप्तिः, प्राणप्रेरणम् बलग्रहणं चेति सर्वमपीच्छापदार्थ एवान्तर्भवति । तस्माद् बलग्रहणरूपस्यार्कस्याप्यत्रेच्छात्वमुक्तं ग्रन्थकृता । मनःप्राणवाचा-

---

भाषाटीका

(१०) जब यह मन अपूर्ण रहता है, इसका पेट खाली है, प्राण-वाक् के सहयोग के बिना हल्का हो जाने से ठहरने में असमर्थ—सदा चंचल रहता है, अपने में क्षीणता का अनुभव करता रहता है, ऐसी दशा में वह मन पूर्णत्व प्राप्ति के लिये प्राणों को प्रेरित कर चला देता है । प्राण 'अर्चन' करता हुआ विचरता है—यही विचरना 'अर्क' है । अर्चन शब्द का अर्थ है आराधन, साधन अथवा संपादन,

एनेन प्राणसंपत्तिराख्याता ।

(११) ततोऽशितिं प्राप्य पूर्णं भवदुक्थमात्मा संपद्यते। तत्रायमुक्थस्यार्क एव चरन्नात्मन इच्छा नामोच्यते। तयेच्छया योऽर्थो विषयीक्रियते, मनसि तद्वासना कामः। वाचोऽर्थस्य मानसं रूपं

---

संस्कृतव्याख्या

मविनाभावाच्चायं व्यवहारः। विभागे तु मनसीच्छा, प्राणे च बलग्रहणात्मकं तपः—प्रयतनमिति न प्रस्मर्तव्यम्।

**वाचोऽर्थस्य मानसं रूपं कामः।** अर्था वाच एव विवर्त्ता इति प्रतिपादितमनेकवारम्। मनश्च यानर्थान् स्पृशति, तदाकारतामाप्य संस्काररूपेण स्वस्मिन् तान् संनिवेशयति। इदमेव मानसं जगदित्युच्यते। प्रपञ्चितोऽयमर्थः पञ्चदश्यां द्वैतविवेकप्रकरणे श्रीविद्यारण्यस्वामिभिः। अस्य मानसस्य जगत एव बन्धकत्वं तत्र विस्पष्टीकृतम्। इदमेव वासनाशब्दार्थतया, कामशब्दार्थतया च प्रकृते ग्रन्थकृतोच्यते। अनयोरेव बन्धजनकत्वात्।

योऽर्थो वासनारूपेण मानसे जगति स्थितः, तस्यैवेच्छापि जायते। अज्ञाते विषय इच्छाया अनुदयात्। 'ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्' इति न्यायसिद्धान्तोऽत्र स्मर्तव्यः।

**वाचोऽयमर्क इति।** विषयतायां षष्ठी। वाग्विषयोऽर्क इत्यर्थः। यद्वा

---

भाषाटीका

वा स्पष्टरूप में कहो तो—अशिति-ग्रहण करने के लिये बलग्रहण—उस ही से यहाँ तात्पर्य है। इस प्रकार अर्क प्राण संपन्न होता है।

(११) और इस अर्क द्वारा अशिति ( अन्न ) प्राप्त करके वह अपूर्ण मन, उक्थ वा आत्मा बन जाता है।

[ अर्थात् जो वस्तु प्राप्त होती है, वह भी आत्मा में प्रविष्ट हो जाती है। अत एव श्रुति में प्रजा और वित्त को भी आत्मा रूप माना है। वह वित्त वा संपत्ति किसी कारण अपने से पृथक् हो जाय, तो फिर आत्मा अपने को शून्य मानकर दुःखी होता है। और फिर उस शून्यता की पूर्ति में लगता है। ]

इस प्रकार उक्थ आत्मा हुआ, ( जिसमें इच्छा उठती है ) और उक्थ का अर्क अर्थात् विचरने के लिये प्राण को प्रेरित करना—इच्छा हुई। इस इच्छा में जो विषय उपस्थित होता है, ( अर्थात् जिस वस्तु की इच्छा होती है ) उस विषय का जो मन में संबन्ध ( संस्कार ) रह जाता है, उस ही का नाम वासना अथवा काम है। यों समझो कि—वाक्रूप अर्थ का मानसरूप ही काम कहा जाता है। अथवा यों कहो कि प्राण के साहचर्य से मन में जो वाक् का भोग ( स्थिति ) है,

कामः । यावान् वा प्राणेन मनसि वाचो भोगः, स कामः । वाचोऽयमर्क उत्तिष्ठन्निच्छा भवति । तमर्थं जानानः कामयमान एवेच्छति—इत्युक्तः कामः ।

(१२) अथैतत्तपो निरुच्यते । इच्छया सहैवोत्तिष्ठन् प्राणस्तमर्थमभ्येति, यमिच्छति । अर्थप्राप्तिसाधनविषया प्राणवृत्तिः प्रयत्नः, तत्तपः । मनोर्काहतकायाग्निसमुत्थापितप्राणप्रक्षोभस्तपः । प्रय-

---

संस्कृतव्याख्या

मनसि स्थिता अन्तर्जगद्रूपेण व्याख्याता वागेवार्कमुत्थापयतीति वाग्जन्यत्वमपि तत्र बोध्यम् ।

मनोवृत्तिः कामः स्पष्टीकृतः, प्राणवृत्तिस्तप इदानीं व्याख्यायते—प्राणवृत्तिरूपं तपः प्रयत्न एवेति निष्कर्षः ।

कथं प्रयत्ने तपःशब्दस्य संगतिरित्यत आह—मनोर्काहतकायाग्नि ।

---

भाषाटीका

वह ही काम कहलाता है । वाक् अर्थात् विषय के लिये उठनेवाला अर्क ही इच्छा कहलाता है । क्योंकि किसी भी वस्तुरूप को जान लेने पर ही—उसे प्राप्त करने की कामना उठती है । इस प्रकार काम का वैज्ञानिक निर्वचन किया गया ।

[ वेदान्त के पञ्चदशी ग्रन्थ में जगत् दो प्रकार का बताया गया है—एक बाह्यजगत्, और दूसरा अन्तर्जगत् । बाह्यजगत् के साथ मन, बुद्धि आदि का संबन्ध होने पर वासनारूप से बाह्यजगत् के पदार्थ मन में बस जाते हैं—इसे ही वासना कहते हैं । यह अन्तर्जगत् ही आत्मा का बन्धन करनेवाला है, और इसे ही मुमुक्षु पुरुष को हटाना चाहिए—इत्यादि विवरण पञ्चदशी के द्वैतविवेक प्रकरण में विस्तार से श्रीविद्यारण्य स्वामी ने किया है । वही यहाँ आत्मरूप मन की सहचारिणी 'वाक्' कही गई है । वाक् से ही जगत् के सब पदार्थ बनते हैं—यह अनेक बार कहा जा चुका है । अस्तु, मन का उठना अर्थात् विकास प्राप्त करना, प्राण को प्रेरित करना और प्राण का उत्थान के लिये बलग्रहण—यह सब मिल कर 'इच्छा' शब्द के अर्थ में आ जाता है–ऐसा यहाँ ग्रन्थकार ने बताया है । इसी लक्ष्य से 'अर्क' को भी इच्छा कहा गया । मन और प्राण के नित्य संमिलित रहने के कारण ऐसे व्यवहार होते रहते हैं—इनमें कोई दोष नहीं । ]

(१२) अब तप का स्वरूप बताया जाता है–पूर्व वर्णित इच्छा के साथ ही उठता हुआ प्राण, जिस वस्तु की इच्छा हुई थी, जिसे मन चाहता है, उसकी ओर दौड़ता

तमानस्य प्राणक्षोभजन्योष्मणा योगो वाचस्तपः ।

(१३) उक्तं च मैत्रायणश्रुतौ—"प्रजापतिः प्रजा असृजत। ता वै तपसैवाऽसृजत। स वै स वाचमेवायच्छत्। तपो वा एष

---

संस्कृतव्याख्या

मनःप्रेरणयोत्तिष्ठमानोऽर्कः, कायस्थितं वैश्वानराग्निमाहन्ति । स च कायाग्निः प्राणे (सहचरभूते वायुप्रवर्त्तके) क्षोभमुत्पादयति । तदेतदुक्तं शब्दोत्पत्ति निरूपणे पाणिनीयशिक्षायाम्—

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । इति ।

तथा चाग्निसंबन्धात् तपःशब्दाऽर्थ आञ्जस्येनात्रोपपद्यत इति भावः । यद्यपि मनःप्राणवाचामादिसृष्टौ नास्ति कायः, न वा कायाग्निः, सर्वस्याप्युत्तरकाल उत्पत्स्यमानत्वात् । तथापि इदानीन्तने प्रयत्ने यदाग्निसंबन्धात्तपःशब्द उपपद्यते, तदा आदिभूते प्रयत्नेऽपि तच्छब्दप्रयोगो नानुपपन्नः । प्रयत्नत्वसामान्यात् । आदिभूतव्यापारेषु परोक्षेषु वाङ्मनसातीतेषु दृश्यजगत्साम्येनैव शब्दानां प्रयोगादिति ।

इदं प्राणनिष्ठं तपः प्राणयोगाद् वाच्यपि संक्राम्यतीत्याह—**वाचस्तप इति** ।

एवंविधे शब्दार्थे श्रुतीः प्रमाणयति—**उक्तं च मैत्रायणीश्रुतौ** । अग्निहोत्रकाले वाग्यमनं कर्तव्यमिति विधिमुपपादयितुं श्रुतिरेषा प्रवृत्ता ।

---

भाषाटीका

है । उस वस्तु को प्राप्त करने के लिये जो प्राण की वृत्ति (प्रवृत्ति, परिणति) होती है—उसे प्रयत्न अथवा तप कहते हैं । मन से प्रेरित अर्क के द्वारा जब शरीराग्नि पर आघात होता है (धक्का लगता है) और उस कायाग्नि से ही प्राण में क्षोभ (संचलन) उठता है, उस प्रक्षोभ को ही प्राण का तप कहा जाता है । (तात्पर्य यह कि उस शरीराग्नि के संबन्ध के कारण इसका नाम 'तप' पड़ा) आगे वस्तु ग्रहण करने के लिये प्रयत्नशील प्राण के क्षोभ से जो ऊष्मा (गर्मी) उत्पन्न होती है उससे वाक् का संबन्ध होने पर—वाक् में भी वह तप चला गया ।

(१३) मैत्रायण श्रुति में यही बात स्पष्ट कही गई है । [ अग्निहोत्र के समय वाक् का संयम करना, अर्थात् वाणी से इधर उधर की बात न बोलना, इस विधि की उपपत्ति बताते हुए—कहा जाता है कि ] प्रजापति ने जो प्रजा बनाई वह तप के द्वारा ही बनाई । उसने सर्वप्रथम वाक् का संयमन किया । जो वाक् का संयमन

उपैति यो वाचं यच्छति । सृष्टिः प्रजानामग्निहोत्रम् । उभयत एव प्रजाः सृजते—इतश्चामुतश्चेति ।" ( १।८।४। )

(१४) अपि च तत्रैव श्रूयते—

"तपसो वैताः प्रजाः प्राजायन्त । तपस्त्वं वा एतद् गच्छति, यच्छृतत्वं गच्छति । ततः प्रजायते" ( १।१०।६ ) इति ।

शृतत्वमग्निसंयोगः । वाजिश्रुतावपि तपःस्वरूपं फेनदृष्टान्तेन श्रूयते—

---

संस्कृतव्याख्या

अग्निहोत्रमेव प्रजासृष्टिः, अग्नौ सोमाहुत्यैव सर्वासां प्रजानां जननात् । तस्मात् प्रजासृष्टौ यथा प्रजापतिना वाग्यमनं कृतम्, तथा प्रजाः सृजता अग्निहोत्रकृतापि कर्तव्यम् । तथा सति अग्निहोत्रेण, वाग्यमनेन चोभयथापि प्रजासृष्टिः संपत्स्यत इति । अत्र वाग्यमनमिति वाच्यपि तपःसंबन्ध उक्तः । एवमग्रेऽपि ।

शृतत्वं गच्छति । परिपक्वतामग्निसंयोगेन गच्छतीत्यर्थः । परिपक्वस्यैव बीजादेः प्रजनने सामर्थ्यदर्शनादिति तात्पर्यम् ।

---

भाषाटीका

करता है, वह तप ही करता है। यह अग्निहोत्र भी प्रजाओं की सृष्टि है ( इससे पदार्थ बनते और बढ़ते हैं ) इसलिये वाणी का संयमन करने वाला, दोनों प्रकार से प्रजा उत्पन्न कर रहा है, अग्निहोत्र से भी और वाक् संयम से भी।

(१४) और भी वहाँ दूसरे प्रकरण में कहा गया है कि—तप से ही संपूर्ण प्रजा उत्पन्न होती हैं। शृत होना अर्थात् पकना ही तप है। परिपक्व होकर ही प्रजा उत्पन्न करता है। अग्नि से संयुक्त होना ही पकना कहा जाता है। वाजिश्रुति ( शतपथ ब्राह्मण ) में भी जल से पृथ्वी बनने के प्रकरण में फेन का दृष्टान्त देते हुए तप का वर्णन किया है। ( पृथ्वी के निर्माण काल में जल सर्वप्रथम फेन रूप में परिणत होता है ) यह फेन जो चारों तरफ से घिर कर, जल के ऊपर तैरता रहता है, यही फेन का, तप है।

[जल से पृथिवी बनने में आठ अवस्थाएँ शतपथ ब्राह्मण में बताई गई हैं—जल, फेन, मृत्स्ना ( पांक ), सिकता ( कोमल मृत्तिका ), शर्करा ( मोटी कंकरीली मिट्टी ), अश्मा ( पत्थर ), अयः ( लोहा ), और हिरण्य ( सुवर्ण )। [जल के भीतर वायु का

"एतद्वै फेनस्तप्यते, यदप्स्वावेष्टमानः प्लवते । स यदोपहन्यते, मृदेव भवति ।" ( शत. ६।१।३।४ )

(१५) अन्यत्रापि तैत्तिरीयके कद्रूसुपर्णाख्याने श्रूयते—
"एतत् खलु वाव तप इत्याहुर्यः स्वं ददाति"—इति ।
( तै. सं. ६ कां. १ प्र. ६ अ. ३ कं. )

---

संस्कृतव्याख्या

वाजिश्रुतौ—वाजसनेयशाखायां शतपथब्राह्मणेऽपि फेनदृष्टान्तेन तपो निरुक्तमित्याह—**एतद्वै फेनस्तप्यते** । अपां पृथिवीभावपर्यन्तम्—अष्टावस्थाः शतपथब्राह्मणे षष्ठकाण्डे प्रतिपादिताः—आपः, फेनः, मृत्स्ना, सिकता, शर्करा, अश्मा, अयः, हिरण्यम्—इति । तत्र जलस्य विरलावयवतया तन्मध्ये वायुः काले काले प्रविशति, प्रविश्य च क्षणेन निष्क्राम्यति । यदा तु वायुकृतात् क्षोभादुत्थितं जलमभितः स्तरभावमाप्नुवद् वायुं निष्क्रमणाद्वारयति, तदा मध्ये वायुरभितश्च जलस्तर इति बुद्बुदं भवति । तज्जले प्रतरति, क्षणानन्तरं च वायुर्बलेन निष्क्राम्यतीति तद् विलीयते । यदा तु जलस्यावयवाधिक्यात् स्तरदार्ढ्येन न निष्क्रमितुं प्रभवति चिरं वायुः, तदा परस्परं संघर्षादुभयं स्वस्वरूपं परित्यजत् फेनरूपतामापद्यते । इदं जलस्य तपः । इदानीं फेनो जले प्रतरँस्तपति,—प्लवनमेव तस्य तप इति श्रुतावुक्तम् ।

प्लवमानस्य तस्य पुनः पुनर्वायुनोपहतस्य सूर्यरश्मिसंपर्काद् घनत्वमाप्तस्य मृत्स्नावस्था समुदेतीति श्रुतेरर्थः । अथाग्रे तैत्तिरीयश्रुत्या तपःशब्दार्थः स्पष्टीक्रियते—**एतत्खलु** । स्वं ददाति—स्वीयमंशम्—आत्मांशम्—अन्यत्रार्प-

---

भाषाटीका

प्रवेश होने पर बुद्बुद् उठता है । वह वायु प्रायः धक्का देकर निकल जाया करती है, किन्तु जब वह चारों ओर जल के स्तर से घिरकर निकल नहीं पाती, तो किञ्चित् काल स्थायी होकर जल और वायु की परस्पर रगड़ से फेन बन जाता है । ] इस ही पर जब पुनः पुनः वायु का आघात होने से और स्तर चढ़ते जाते हैं, तब यह फेन ही मृत्स्ना ( पांक ) रूप में परिणत होता है । इस प्रकार यह फेन का तप होता है ।

(१५) दूसरे स्थान में तैत्तिरीयकश्रुति में भी कद्रू सुपर्ण के आख्यान में कहा है कि—अपना अंश जो दूसरे को दिया जाता है, वह तप ही कहा जाता है । अपना अंश दूसरी जगह अर्पित करना ही दान है । यह दान अपना अवदान—अपने अंश का काटना, ही समझना चाहिये । अवदान का अर्थ है काटना, उसमें

**दानं समर्पणम् । तदात्मनोऽवदानादेव संभवतीत्यतोऽवदान-मेवैतद्दानम् । तथा हि—"आत्मदक्षिणं वा एतद् यत्सत्रम् । यदा वै पुरुष आत्मनोऽवद्यति, यं कामयते, तमभ्यश्नुते ।"**

**( ताण्ड्य.—४।९।२०। )**

**इति ताण्ड्यश्रुतौ श्रुतस्यात्मावदानस्यैव तपस्त्वमभ्युपपद्यते ।**

---

संस्कृतव्याख्या

**यतीति तदेव तप उच्यते । एतस्याः श्रुतेस्तात्पर्यं स्फुटयन् ग्रन्थकृदाह—अवदानमेवैतद्दानमिति । अवपूर्वकाद् द्यतेर्निष्पन्नोऽवदानशब्दः—अवखण्डनार्थः । अवयवस्य—अंशस्य पृथक्करणमेव अवखण्डनम् । तदेव अवोपसर्गविलोपे दानमित्युच्यते । दानेऽपि आत्मनोंऽशस्य खण्डनमेव भवति, वित्तपर्यन्तमात्मव्याप्तेरुक्तत्वात्—वित्तपृथक्करणेऽप्यात्मनोऽवदानस्य सुस्पष्टं जायमानत्वात् । एतदपि ताण्ड्यमहाब्राह्मणश्रुत्या ( छान्दोग्यब्राह्मणेन ) प्रमाणीक्रियते—आत्मदक्षिणं वा एतत् । यज्ञे यजमानस्यात्मैव दक्षिणात्वेन दीयते, वित्तस्यात्मत्वात् । आत्मनोऽवदानेन ( अवखण्डनेन ) एव हेतुना यज्ञेऽभीप्सितस्य कामस्याप्तिरिति श्रुत्यर्थः ।**

---

भाषाटीका

अव का लोप होकर दान रह गया । इस प्रकार यह दान शब्द भी अवदान शब्द से ही बना है । विना अपना अंश काटे दान नहीं बनता । क्योंकि लोक में जो 'दान' प्रसिद्ध है—वहाँ भी अपना अंश ही काटा जाता है । कह चुके हैं कि वित्त वा संपत्ति भी आत्मा है, वह आत्मा का अंश काट कर, अन्यत्र जोड़ा जाता है । यह भी श्रुति में कहा है कि—यह जो यज्ञ में अपने द्रव्य की दक्षिणा दी जाती है, वह पुरुष के अपने अंश का खण्डन ( टुकड़ा ) करके ही दी जाती है । इसलिये आत्मा ही द्रव्य रूप से दिया गया । अपनी आत्मा को काटने से ही सब कामनाओं की प्राप्ति होती है । 'यावद्वित्तं तावदात्मा' इस न्याय से यह अवदान ( टुकड़ा करना ) आत्मा का ही होता है । इस प्रकार उक्त ताण्ड्यश्रुति में भी आत्मा के इस अवदान को ही तप का रूप कहा है ।

[ मनु ने भी-'ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्' आदि कहा है । ब्राह्मण सब कुछ भोग साधन छोड़ कर, केवल ज्ञान संग्रह करता रहे—इस प्रकार ज्ञान प्राप्ति ही ब्राह्मण की तपस्या होती है । क्षत्रिय इतर सुखसाधनों को छोड़ कर, केवल समाज की रक्षा करने में तत्पर रहे यही क्षत्रिय का तप होता है । इस प्रकार सब जगह तप की व्यापकता बताई गई है । ज्ञान देना, पढ़ाना, रक्षा के लिये प्रयत्न-ये सब आत्मा के अंशों का काटना ही तो है । ]

(१६) यान्येतानि यज्ञतपोदानानि कर्माणि श्रूयन्ते, तपांस्येवैतानि सर्वाणि । तत्रैतावान् भेदः—आत्मा वितायमानो यत्राधिदैविकैर्देवैः संयोज्यते, मानुषे आत्मनि दैवमात्मानमुत्पाद्य, यत्रैनं दैवमात्मानं दिव्यैर्देवैः संश्लेषयति, तदात्मावदानं यज्ञः ।

---

संस्कृतव्याख्या

ननु तपसि आत्मनोऽशस्य पृथक्करणमाचक्षाणेन दाने यज्ञे वावदानमप्रकृतं किमिति व्याख्यायत इति शङ्कायामाह—यान्येतानि यज्ञतपोदानानि । छान्दोग्योपनिषदि गृहस्थाद्याश्रमत्रयं प्रतिपादयता भगवता वेदपुरुषेणोक्तम्—"त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः--ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" ( छान्दो. २ प्रपा. २३ ख. ) अत्र यज्ञाध्ययनदानानि ( प्रथमस्य ) गृहस्थस्य, तपश्च उपकुर्वाणस्य ( द्वितीयस्य ) ब्रह्मचारिणः, ( तृतीयस्य ) नैष्ठिकब्रह्मचारिणश्च धर्मतयोक्तानि । तत्र श्रुताः सर्वेऽप्येते धर्मास्तपस्येवान्तर्भवन्तीति बोध्यम्, आत्मावदानस्य सर्वत्रापि दृश्यमानत्वात् । तदेवोपपाद्यते—यज्ञेन हि यजमानस्यात्मनि दैव आत्मा उत्पाद्यते, यमतिशयपदेन अपूर्वपदेन च व्याहरन्ति तार्किकमीमांसकाद्याः । सोऽयं दैव आत्मा आत्मविस्तारे व्याख्यातोऽन्यत्र ग्रन्थकृता । प्राज्ञात्मनोऽश एव संस्कृत्य दैवात्मतां प्राप्यते, स च दैव इति दिव्यैः-द्युलोकस्थैर्देवैः संबध्यते । तदाकर्षणादेव यजमानः स्वर्गम् ( देवभावम् ) गच्छतीति आत्मनोऽशस्य देवेभ्यः समर्पणाद्यज्ञस्य तपस्त्वम् । अत्र साक्षादेवात्मा अवद्यत इति मुख्यमिदं तपः ।

---

भाषाटीका

(१६) यज्ञ, तप और दानरूप तीन धर्म जो मुख्य बताये जाते हैं, वास्तव में ये सब तप में ही अन्तर्गत हो जाते हैं। सूक्ष्म रूप से देखने पर तीनों तप रूप ही स्पष्ट भासित होते हैं। भेद केवल इतना रहता है कि—आत्मा व्यापक रूप से वितत ( विस्तृत ) होता हुआ, जब आधिदैविक सर्ग में रहने वाले देवताओं से अपना संबन्ध स्थापित करता है, अर्थात् यह मानव अपनी मानवीय आत्मा में 'दैव' आत्मा को जब ( यज्ञ द्वारा ) उत्पन्न करता है, और उस अपनी आत्मा के अंश मानव भावापन्न आत्मा को उन दिव्य देवों से संबद्ध कर देता है अर्थात् उन्हें अर्पित कर देता है—वही यज्ञ है। इस प्रकार अपने स्वाभाविक आत्मांश का अवदान ( खण्डन ) इस यज्ञरूप धर्म में होता है।

(१७) अथ आत्मनो या विराट्, यच्छरीरम्, तस्य कतिपयांशाः परत्र यदर्प्यन्ते—तत्तपः ।

यथा ध्यानं वाऽनाशकं वा । सर्वमिदम्—अन्तरङ्गाणामात्मां-

---

संस्कृतव्याख्या

**आत्मनो या विराट्** । विराट्पदमग्रे बहु व्याख्यायते । अत्र विराट्पदेन शरीरमेव ग्राह्यमित्युक्तम्–'या विराट्—यच्छरीरम्' इति । शरीरस्यांशास्तपसि परत्रार्प्यन्ते–इति यज्ञापेक्षया बहिरङ्गमपीदं दानाद्यपेक्षयाऽन्तरङ्गं द्रष्टव्यम् ।

तपसो दृष्टान्तमाह—**यथा ध्यानं वा अनाशकं वा** । अनाशकम्—अनशनम्—भोजनपरित्यागः । अत्र ध्याने मनसोंऽश ईश्वरे देवादिषु वा समर्प्यत इति स्फुटमात्मावदानम् । अनशनेऽपि शरीरं कार्श्यमायाति—मांसरुधिरादिकं शुष्यति । 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति निश्चितात् सिद्धान्तात्तपस्विनः शरीरस्य मांसरुधिराद्या अपि नैकान्ततो विलीयन्ते, किन्तु स्थानान्तरमवस्थान्तरं वा गच्छन्ति । यथेह शुष्यत् कुल्याजलं वाष्परूपेणान्यत्र भवति, न विलुप्यते, तथैव सर्वत्रानुसन्धेयम् ।

---

भाषाटीका

(१७) दूसरे तपरूप धर्म में तो स्पष्ट ही—आत्मा के 'विराट'[1] रूप–अर्थात् शरीर में से बहुत सा भाग काटकर अन्यत्र अर्पण किया जाता है, वही तो तप कहाता है । तात्पर्य यह है कि तपस्या–काल में मन वाक् शरीर आदि पर निग्रह किया जाता है, साथ ही इनके परिपुष्ट होने के लिये जो अपेक्षित साधन हैं, उन पर भी नियमन रहता है–वे मिल नहीं पाते हैं । इस प्रकार यह शरीर स्वयं तो परिपुष्ट हो नहीं पाता, अपि तु क्षीण होता हुआ अपने शरीर का अंश अन्यत्र देता रहता है । [ स्मरण रहे कि किसी पदार्थ का सर्वथा अभाव तो होता ही नहीं, स्थान-परिवर्तन वा अवस्था–परिवर्तन होता रहता है । वे शरीर के मांस रुधिर आदि, जो शरीर में न्यून होते हैं, वे बाहर जाकर किसी अवस्था में कहीं अवश्य संमिलित होते हैं । जैसे किसी गड्ढे में जल भरा हो, वह सूख गया—तो इसका यह अर्थ नहीं कि उसका समूल नाश हो गया, अपितु वह भाफ बनकर ऊपर उड़ गया । यहाँ नहीं है, तो अन्तरिक्ष में है । इस ही प्रकार सर्वत्र समझना । इसलिये अन्यत्र अर्पण युक्तियुक्त है । ]

---

टिप्पणी १—विराट् की ब्याख्या आगे होगी ।

शानामर्पणं बोध्यम् ।

(१८) यत्र तु बहिरङ्गाणामात्मीयानामन्नाद्यर्थानामवदानेन परत्रार्पणं क्रियते, तद्दानमिति भाव्यम् । उत्तरोत्तरं ह्येतद् विप्रकृष्टमिति तारतम्यात् पृथक्शब्दा भवन्ति । सर्वथाऽप्या

---

संस्कृतव्याख्या

तथा चात्मनः शरीरस्यावदानं परत्रार्पणं च सिद्धमेव । किं च अस्मदीयमन्नादिकं न यदा वयं भुञ्ज्महे, तदान्ये तद् भुञ्जते—इत्येवं स्वात्मभूतस्यान्नादेः परत्रार्पणं सिद्ध्यत्येव । अत्र तपसि शरीरावदानमिति यज्ञापेक्षया बहिरङ्गमपीदं वित्तदानापेक्षयान्तरङ्गमेवेत्युक्तं प्राक्, तस्मादुभयत्रान्तरङ्गाणामंशानामवदानमुक्तम् ।

दाने तु वित्तभूतानामन्नादीनां बहिरङ्गाणामवदानं स्पष्टमेव । अनेनान्तरङ्गबहिरङ्गभावेनैवात्र पृथक् पृथक् शब्दाः प्रवर्त्तन्ते, अवदानेन तपस्त्वं तु सर्वत्रैव समानमिति । उपलक्षणमेतत् । धर्म्ये प्रजोत्पादनेऽपि आत्मनोऽशस्य

---

भाषाटीका

इसमें दृष्टान्त देते हैं—जैसे ध्यान वा अनशन ( भोजन छोड़ देना ) तप है । जब मनुष्य ध्यानस्थ होकर बैठता है—तब चारों तरफ गति करने वाले मन पर नियन्त्रण करके संपूर्ण भाव से मन को अपने इष्ट में संयत करता है । यह मन का अन्तर्यमन, अपने इष्ट देवता में अपने आत्मा के अंश मन का दान करना ही है, और आत्मा में से उतने अंशों का ( मन की वृत्ति वा मन के भागों का ) खण्डन ( काटना ) भी स्पष्ट ही सिद्ध है । अनशन आदि उपवास क्रियाओं में तो स्पष्ट ही अपने अन्न आदि को स्वयं ग्रहण न करते हुए दूसरे को समर्पण किया जाता है । जब हम अपने भाग की अन्नादि वस्तु नहीं लेते, तो अन्य कोई उसे अवश्य लेता है, यही दान है । और उसमें अपने अंश का आत्मा से पृथक् करना स्पष्ट ही सिद्ध है ।

इस प्रकार यज्ञ और तप में आत्मा वा आत्मा के अन्तरङ्ग अंश ( मन वा शरीर का ) साक्षात् ही अवदान ( खण्डन ) होता है ।

(१८) और दान में आत्मा के बहिरङ्ग अंश अन्न आदि वित्त का अपने आत्मा से संबन्ध काट कर दूसरी जगह अर्पण होता है । [ आत्मा, प्राण, पशु-प्रजा और वित्त-ये पांच कला आत्मा की हैं, उनमें प्रजा और वित्त बहिरङ्ग हैं । ]

यों यज्ञ में साक्षात् आत्मा का अर्पण है, तप में मन व शरीर का और दान में वित्त आदि का । अतः तप में संबन्ध कुछ दूर पड़ा । और दान में अधिक दूर

**त्मावदानं तपः । प्रजोत्पत्तौ वा अग्निपरितापे वा आत्मनः कश्चिदंशोऽवत्तः सन् परत्रोपयुज्यते, तस्मात्तत्सर्वं तप इत्याहुः । मनसोपहितस्य प्राणस्य वाचमभि या वृत्तिस्तत्तपः ।**

---

संस्कृतव्याख्या

शुक्रस्यावदानमस्त्येवेति तदपि तप इत्युक्तम्—**प्रजोत्पत्तौ वा** । भगवता मनुनापि 'ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्' इत्यादिना वर्णधर्माणां रक्षणाध्ययनादीनां तपस्त्वमुक्तम् । तत्रापि श्रमेणात्मावदानसत्त्वादनयैव रीत्या तदुपपाद्यम् ।

यथेदानीं तपसा-आत्मावदानेन प्रजा उत्पाद्यते, तथा पूर्वमपि प्रजापतिना तपसैव प्रजा उत्पादिता अनुमातव्या—इत्यप्याशयोऽत्र बोध्यः । तथैवाध्ययनमपि—इन्द्रियाणां शरीरस्य च शोषणादात्मावदानमिति तपस्त्वान्नातिरिच्यते ।

स्पष्टं तपःशब्दार्थमाह—**मनसोपहितस्य** । न प्राणो मनसा विनाकृतो भवतीति मनसोऽप्यस्त्येवात्र योगः, परं प्राणस्य प्राधान्यान् मनस उपाधित्वमत्रेति मनसोपहितस्येत्युक्तम् । विद्यमानः सन् अगृहीतः सन् व्यावर्तक उपाधिरिति लक्षणमुपाधेः । तथा च मनो यद्यपि स्वरूपेण वर्तमानम्, किन्तु तपसि व्यापारे न तस्योपयोग इति अगृहीतत्वात्तस्योपाधित्वं स्पष्टमेव । प्राणस्य वाचमभि—वाचं ग्रहीतुम्—मनोऽभिमतरूपेण व्यवस्थापयितुं या वृत्तिः—प्रयत्नः—तत्तप उच्यत इत्यर्थः ।

---

भाषाटीका

अर्थात् परंपरा संबन्ध से मुख्य आत्मा का अर्पण हुआ । इस ही समीप संबन्ध और दूर संबन्ध के कारण इन कर्मों में भिन्न भिन्न शब्द प्रवृत्त हो गये । किसी भी प्रकार से सही-आत्मा के अवदान को तप कहते हैं । चाहे प्रजोत्पत्ति के समय, अथवा पञ्चाग्नि तप करते समय किसी भी रूप में आत्मा का अंश खंडित होकर, दूसरी जगह मिलता अवश्य है । इस ही लिये ये सब तप में अन्तर्गत हो जाते हैं । प्रकृत में तप का मुख्य लक्षण यों समझो कि—मन सहित प्राण को जो वाक (अर्थ) की तरफ प्रवृत्ति होती है, वह तप है । यही तप का सामान्य लक्षण है । प्राण मनकी प्रेरणा से वाक् का ग्रहण कर उस मन की इच्छा के अनुकूल व्यवस्थित करता है, यह प्रयत्न ही तप है ।

(१९) एवं प्राणोपहिताया वाचो या स्वस्यां वृत्तिः स श्रमः। एकस्मादेव तत्त्वान्नानारसरूपार्थोत्पत्तौ तपोविशेषप्रवर्तककामवि-

संस्कृतव्याख्या

श्रमं निरूपयति—**प्राणोपहिताया**। अत्राप्युपाधित्वं पूर्ववदेवानुसन्धेयम्। प्राण इति चोपलक्षणं मनसोऽपि। वाचोऽपि मनःप्राणाभ्यामविनाभूतत्वात्। श्रमे वाचः अन्यस्यां वाच्येव वृत्तिः—व्यापारो भवति, यथा कश्चिद् भारवाहको भारभूतामन्नादिवाचं शरीररूपायां वाचि संयोज्य व्याप्रियते। यथा वा कश्चिद् यानपरिचालकः शरीरभूतां वाचं यानरूपायां वाचि व्यापारयति, तदेतत् सर्वं श्रम एवोच्यते।

तथा च यथा इदानीं घट-पट-कुड्यादिरूपस्याभिनवस्यार्थस्य रसरूपताम्-पृथक्तन्त्रप्रवर्तकताम्—अभिनवपदार्थरूपताम् आपाद्यमानस्योत्पत्तौ क्रमेण इच्छा-तपः-श्रमा हेतवो भवन्ति, पूर्वं कुलालादिरिच्छति, ततः प्राणेन प्रयतते, ततो वाचि वाचं संयोज्य (तत्तदर्थानामवयवभूतानां चयनेन) नवपदार्थमुत्पादयति, तथैव प्रजापतेरादिसृष्टिरपि इच्छातपःश्रमजन्येति भाव्यम्। इदानीमपि यथा मनुष्यादिकृता सृष्टिरिच्छादिपूर्विका, तथा मनुष्यादिव्यापारमन्तरेणापि प्रवर्तमाना घास-गैरिक-लोह-फेनादिसृष्टिरिच्छा-तपःश्रमपूर्विकैव द्रष्टव्या, तुल्यन्यायादिति। कामेन तपःप्रवृत्तिः, तपसा च श्रमः, ततः सर्ग इति।

ननु चेतनेषु भवतु नाम इच्छादिक्रमः, जड़ेषु तु कथं तत्संभव इति चेन्नैवं भ्रमितव्यम्। मनोमयस्य प्राणमयस्य वाङ्मयस्य चात्मनो व्यापकताया उक्तत्वात्। सर्वस्मिन्नेव पदार्थे त्रिरूपोऽयमात्मा भवति, आत्मानमन्तरेण

भाषाटीका

(१९) इस ही प्रकार प्राण सहित वाक् की जो अपने आप में वृत्ति है, उसे श्रम कहते हैं। [ श्रम में वाक् पर ही वाक् का प्रयोग होता रहता है। स्मरण रहे कि यहाँ वाक् पद सब अर्थों के मूल तत्त्व का वाचक है, जो बार २ स्पष्ट किया जा चुका है। जैसे बोझा ढोने वाला अपनी शरीरस्थ वाक् पर बाहर की वाक् का आरोपण करता है, वा ठेला आदि चलाने वाला शरीरस्थ वाक् का उस बाह्य वाक् पर प्रयोग करता है, इन्हीं कार्यों को श्रम कहते हैं—इत्यादि ] एक ही मूलतत्त्व से जो अनेक रस-रूप पदार्थों की उत्पत्ति होती है, इस में प्राण व्यापार को प्रवृत्त कराने वाली मन की कामना ही कारण बनती है। इन्द्रिय वाले चेतन प्राणियों में यह बात स्पष्ट सिद्ध है कि-पहले मन में इच्छा होती है, तब प्राण का तप अर्थात् प्रयत्न

शेष एव हेतुः । यदेव यतः किञ्चिदुत्पद्यते, सेन्द्रियाद्वा निरिन्द्रियाद्वा, सर्वत्रैव कामतपःश्रमपूर्वैव सृष्टिर्भवतीति सृष्टिमात्रसा-

---

संस्कृतव्याख्या

कस्याप्यर्थस्य सत्तानुपपत्तेः । किंमूलकस्तर्हि जडचेतनव्यवहार इति चेदुच्यते—

'सेन्द्रियं चेतनद्रव्यं निरिन्द्रियमचेतनम्'

इति चरके समाहितमिदम् । आत्मनः सर्वत्र सत्त्वेऽपि यत्रेन्द्रियविकासः, तच्चेतनमुच्यते, यत्र तु नेन्द्रियाणां चक्षुरादीनां विकासः, स जड उच्यते । तस्मादिन्द्रियभावाभावकृत एव चेतनजडव्यवहारो नात्मभावाभावकृतः । आत्मनः सर्वत्र सत्त्वात् । अत एव जडानां काष्ठगोमयाद्यवयवानां रूपान्तरेण परिणतौ घुणवृश्चिकादिरूपतायाम्, इन्द्रियविकासे त एव चेतना व्यवह्रियन्ते । प्राणिशरीरेभ्यश्चेन्द्रियाणां निष्क्रमणे मृतानि शरीराणि जडत्वमापद्यन्त इति सुस्पष्टमिदं समीक्षाचणानाम् । तस्माच्छ्रौते दर्शने सर्वत्रैवात्मा व्यापकः, सर्वत्रैव मनःप्राणवाचः, सर्वत्रैव च व्याख्याता वैज्ञानिका इच्छातपःश्रमा इति भाव्यम् । यदस्माभिः 'मनः' इति परिचीयते, तत्तु इन्द्रियतया निरिन्द्रियेषु जडेषु न भवति, अस्मत्परिचितः श्वासादिपरिचालकः प्राणोऽपि जडेषु न भवति, इन्द्रियरूपा वागपि न भवति, तस्मादस्मत्परिचिता इच्छातपःश्रमा

---

भाषाटीका

होता है, तब वाक् रूप शरीर में व्यापार होकर, जो कुछ बनाना हो—वह बनता है। इसी प्रकार निरिन्द्रिय अर्थात् अचेतन पत्थर आदि किसी भी वस्तु से कोई भी वस्तु उत्पन्न हो वहाँ भी सब जगह, काम तप और श्रम पूर्वक ही सृष्टि होती है; यह संपूर्ण सृष्टि मात्र का साधारण नियम है। यहाँ ऐसी शङ्का नहीं करना कि जड़ पदार्थों में मन और प्राण कहाँ हैं ? जब मन, प्राण ही नहीं तो इच्छा और तप (प्रयत्न) वहाँ कैसे होंगे ? यह शङ्का व्यर्थ है—क्यों कि 'मनोमय' 'प्राणमय' और 'वाङ्मय' आत्मा व्यापक है, वह सर्वत्र रहता है। जिन्हें हम जड़ समझते हैं, उन में भी आत्मा है। फिर जड़ और चेतन का विभाग किस आधार पर है ? यह प्रश्न हो तो—उसका उत्तर है कि इन्द्रियों के विकास के आधार पर ही यह भेद-व्यवहार चला है। जिन में इन्द्रियों का विकास होगया—वे सेन्द्रिय वा चेतन कहलाते हैं, और जिन में इन्द्रियाँ ( आँख-कान-नाक आदि ) नहीं, वे निरिन्द्रिय, अचेतन वा जड़ कहे जाते हैं। यही भेद है। आत्मा तो सर्वत्र व्यापक है। इसलिये जहाँ भी सृष्टि होती है, अर्थात् नया पदार्थ उत्पन्न होता है, वहाँ इच्छा तप और श्रम अवश्य हैं—यह निश्चय कर लेना चाहिये। इसी तरह आदि सृष्टि भी मूल भूत मन, प्राण और वाक्

धारणो नियमः ।

—:o:—

## प्राजापत्यं कुरुक्षेत्रम् ।

(१) प्राजापत्यं पुरं यज्ञस्थानमस्तीति कारणात् ।
कुरुक्षेत्रमिति ख्यातं क्रियते कर्म तत्र हि ॥

---

संस्कृतव्याख्या

अपि न तत्र संभवन्ति । परन्तु एतानि वाक्प्राणमनांसि येषां मूलतत्त्वानामवस्थाभूतानि, तानि मूलतत्त्वानि तु सर्वत्र व्याप्नुवन्त्येवेति तद्वृत्तिभूता वैज्ञानिका उक्तनिर्वचना इच्छातपःश्रमाः सर्वत्रैव संभवन्तीति सूक्ष्मया दृशालोचनीयम् ।

—:o:—

इदानीं पूर्वप्रकरणोक्तमेव किञ्चिद्विशदयितुम्—उक्थाशीत्योर्यज्ञरूपेण निरूपणमारभते—**प्राजापत्यं पुरम् ।** इन्द्रप्राणरूपोऽनिरुक्तः प्रजापतिराख्यातः, तस्य यत्पुरम्—स्थानम्, तद्यज्ञस्थानं विज्ञेयम् । अर्कः प्राणो यदा अशितिम्—वाचम्, आनीय मनोमयत्वादिरूपेण व्याख्यात आत्मनि समर्पयति, तदा तस्या वाचः प्रथमम् 'ऊर्क्' रूपता जायते, यदोजःपदेन लौकिके संस्कृते व्याह्रियते । तदनु च सा वाक् प्राणरूपेणैव परिणमति, अयं वागूर्क्प्राणानामुत्तरोत्तरक्रम एव यज्ञशब्देन व्यवह्रियते श्रुतिषु । अग्नौ सोमस्याहुतिः, हुतस्य च सोमस्याग्निरूपतेति श्रौती यज्ञपरिभाषा । सोऽयमग्निः प्राणरूप एव तत्र

---

भाषाटीका

के व्यापार—इच्छा ( काम ) तप और श्रम से ही हुई है—यही श्रुति घोषित करती है ।

—:o:—

(१) यह संपूर्ण सृष्टि-रूप कार्य पूर्व वर्णित प्रजापति ( प्राण ) का विस्तार रूप यज्ञ है । [ पूर्व वर्णित प्रधान प्राण का अमात्य-भूत अर्क नामक प्राण जब अशिति रूप वाक् लाकर आत्मा को समर्पित करता है–अर्थात् वाक् जब प्राण रूप में परिणत होने लगती है, तब उस वाक् का पहला रूप होता है 'ऊर्क्' ( अर्थात् 'ओज' ) और आगे का रूप हो जाता है प्राण । यह वाक्, ऊर्क्, और प्राण का परस्पर परिवर्तन ही यज्ञ है । यज्ञ में अग्नि में सोम की आहुति होती है, और वह सोम ( घृत आदि द्रवद्रव्य ) अग्निरूप में परिणत हो जाता है । पूर्व प्रकरणोक्त क्रम में

**(२) मनःप्राणवाक्षु हि प्राण एव प्रधानम् । वाङ्मनसयोरक्रिययोः प्राणाधीनवृत्तिकत्वात् । प्राणो बलम् । बलाश्रिते हि ते वृत्तिं**

---

संस्कृतव्याख्या

तत्र व्याख्यातः । आकृष्टा केन्द्राभिमुखी वाग् भवति सङ्कुचितवृत्तितया सोमरूपा, सैव च केन्द्रान्निष्क्रामन्ती विकासवृत्तितया जायतेऽग्निरूपेति निरूपितं विस्तरेणान्यत्र । तदित्थमर्कानीताशितिरूपा वागेवात्र सोमः, सा च पूर्वोक्तक्रमेण प्राणाग्निरूपतामापद्यत इति यज्ञरूपतात्र सिद्धैव । अस्य यज्ञस्य स्थानं केन्द्रबिन्दुरेव । 'यज्ञो हि श्रेष्ठतमं कर्म' इति चाह भगवती श्रुतिः । तस्माद्यज्ञस्थानमेव कर्मस्थानमिति निर्विवादम् । कर्मस्थानमेवात्रोच्यते 'कुरुक्षेत्र' पदेन । 'कुरु' 'कुरु' इति कर्मकरणार्थं श्रुत्यादावादिश्यते, तदेवानुकृत्य 'कुरु' पदेन कर्म गृहीतम्, क्षेत्रं च स्थानम् । तस्माद्यज्ञस्थानं कुरुक्षेत्रम् । वैज्ञानिक्यां प्रक्रियायां च सर्वमपि वस्तुजातं यज्ञस्थानम्, आदानप्रदानरूपेण यज्ञेन विना कस्यापि पदार्थस्य स्थितेरसंभवादिति सर्वमपीदं कुरुक्षेत्रमुच्यत इति पद्यतात्पर्यम् ।

**प्राण एव प्रधानम् ।** यद्यपि कलापञ्चकमध्यस्थं मन एव प्रधानमिति प्रतिपादितपूर्वम्, परं सृष्टौ क्रियाया मुख्यत्वात्, क्रियाया आश्रयस्य प्राणस्यात्र प्राधान्यमपेक्षाकृतं द्रष्टव्यम् ।

---

भाषाटीका

प्राण ही अग्नि है । बाहर से लाई हुई 'वाक्' सोम है । बाहर से केन्द्र की ओर जाने वाले पदार्थ संकुचित वृत्ति होने के कारण सोम कहे जाते हैं, और केन्द्र से बाहर निकलने वाले विकासवृत्ति होने के कारण अग्नि-यह परिभाषा है । अस्तु-इस प्रकार केन्द्र की आदान-प्रदान क्रिया यज्ञ है-यह सिद्ध हुआ । यज्ञ ही मुख्य कर्म है-यह श्रुति बार बार कहती है । ] अतः यह यज्ञरूप कर्म जहाँ होता है, उस यज्ञ स्थान को कुरुक्षेत्र कहते हैं । जैसा कि श्लोक द्वारा बताया जाता है कि-प्रजापति का पुर (केन्द्र-जहाँ प्रजापति रहता है) यज्ञ होने का स्थान है—इस ही कारण 'कुरुक्षेत्र' इस नाम से प्रसिद्ध है । 'कुरु, क्षेत्र' इन दो शब्दों से बने कुरुक्षेत्र का अर्थ श्लोक के अन्त में किया गया-कि जहाँ काम किया जावे-वह स्थान । 'कुरु' अर्थात करो, इससे क्रिया का तात्पर्य है । जहाँ क्रिया होती हो-वही कुरुक्षेत्र ।

(२) (पहले बताया जा चुका है कि अव्यय पुरुष—मन, प्राण और वाक्-इन तीनों रूपों से संपूर्ण जगत् का आलम्बन बनता है) इन मन, प्राण और वाक् में प्राण ही प्रधान रहता है । स्वतः सर्वथा निष्क्रिय मन और वाक् में इच्छा-ज्ञान, क्रिया और अर्थरूप वृत्तियों का होना, प्राण के ही अधीन है । प्राण ही बल (शक्ति)

लभेते । न च ते प्राणेन कदाचिद् वियुक्ते भवतः । तत्र मनो दिग्देशकालानवच्छिन्नमपि प्राणविशिष्टतया प्राणमात्रानुसारेण

---

संस्कृतव्याख्या

**मनो दिग्देशकालानवच्छिन्नमपि ।** इदं हि मनोऽस्माकं परिचितमिन्द्रियसहकारि, इन्द्रियरूपं वेति न भ्रमितव्यम्, किन्तु सर्वादिभूतमव्ययकलारूपमिदं मनः, यत् श्वोवसीयसं मनः श्रुतावाख्यायते । ननु तथापि असीम्नो रसस्य परिच्छिन्नेन मायाबलेन परिच्छेदे कृते पुरुषरूपता, पुरुषेषु प्रथमोऽव्ययः पुरुषः, तस्यैव च कला मन इति व्याख्यातपूर्वम्, ततश्च मनसो विभुत्वलक्षणं दिग्देशकालाऽनवच्छिन्नत्वं विरुद्धमिव प्रतिभाति—इति चेत्सत्यम् । मनो हि रसप्रधानम्, प्राणश्च बलप्रधानः । परिच्छेदश्चायं मुख्यतया बले एव, रसे तु तत्संबन्धादुपचारमात्रं परिच्छेदस्य । तदेवाभिलक्ष्य रसप्राधान्याद् रसरूपतामेव मनसोऽभिमत्य दिग्देशकालानवच्छिन्नत्वमुक्तम् । अस्यां दिशि वर्तते, अस्यां नेति दिक्परिच्छेदः । अस्मिन् देशे ( स्थाने ) अस्ति, अस्मिँस्तु नेति देशपरिच्छेदः । अस्मिन् कालेऽस्ति, अस्मिँश्च नेति कालपरिच्छेदः । त्रिविधोऽप्ययं परिच्छेदो दृश्यते पदार्थमात्रे समनुस्यूतः । यत्र त्रिविधोऽपि परिच्छेदो नास्ति, तदुच्यते विभुशब्देनेति दार्शनिकी परिभाषा । ब्रह्म च ( रसः ) तथाविधमेवेति वेदान्तानां डिण्डिमः । परिच्छेदो हि गुणक्रियादिभिरेव ज्ञायत इति निर्धर्मके निष्क्रिये च ब्रह्मणि कथं स ज्ञायताम्, अज्ञातं च कथमुपगम्यताम् । किं च अत्रास्ति, तत्र नास्तीत्यादौ नञा सहकृतोऽप्यस्तिः श्रूयत एवेति सत्तारूपस्य ब्रह्मणस्तत्राप्यनुवृत्तिः सिद्धा । अभावोऽपि च ज्ञायत एवेति ज्ञानरूपं ब्रह्मापि तत्रानुवर्तत एव । तथा च भावे अभावेऽपि च समनुगतं ब्रह्म परिच्छेदातीतमिति नात्र संशयः । अभावो नाम नातिरिक्तः पदार्थः, अपि तु 'भावान्तरमभावः' इति बहुदार्शनिकसंमते पक्षे तु ब्रह्मणो नैवाभावः संभवति, तदपेक्षयान्यस्य भावस्यासंभवादिति ।

---

भाषाटीका

है, बल के आधार पर ही मन और वाक्, ज्ञान एवं क्रिया आदि अपनी वृत्तियों को प्राप्त करते हैं। ये मन और वाक्—प्राण से वियुक्त ( पृथक ) कभी नहीं होते। इनमें ज्ञान का प्रभव स्थान मन यद्यपि दिशा-देश-काल से अवच्छिन्न ( घिरा हुआ, सीमित ) नहीं होता, वह व्यापक ही है—तथापि प्राण के साहचर्य से प्राणमात्रा के अनुसार बड़ा अथवा छोटा कहलाने लगता है।

[ यद्यपि पूर्व कहा जा चुका है कि—रस और बल दो मूल तत्व हैं, जब बल जागरित होकर रस को परिच्छिन्न कर लेता है ( घेर लेता है ) तब ही रस 'पुरुष'

**महच्च भवति, क्षुद्रं च । क्षुद्रस्य मनसः क्षुद्रः कामो**

संस्कृतव्याख्या

**प्राणमात्रानुसारेण महच्च भवति, क्षुद्रं च ।** प्राणो हि बलप्रधानत्वाद् बलरूप एव प्रतिपद्यते । बलं च परिच्छिन्नमिति तत्संबन्धाद् रसरूपे मनस्यपि परिच्छेदः प्रतीयत इति भावः । ननु न मनः, प्राणवाग्विनाकृतं भवति, नित्यसंबन्ध एषां त्रयाणामित्यसकृदत्रोक्तम् । अन्यत्रापि च ग्रन्थकृता रसबलयोर्नित्य एव संबन्धः, न क्वापि बलविरहितो रसः संभवतीत्येनकश उद्घुष्टम् । उपपद्यते चापि तथैव । बलमेव हि शक्तिरित्युच्यते, शक्तिशक्तिमतोश्च नित्य एव संबन्धः सर्वत्र दृष्टः । न हि वह्नेः कश्चिदंशो दाहकः, कश्चिच्च शक्तिविरहान्नेति कश्चिदनुन्मत्त उत्प्रेक्षते । तथैव ब्रह्माप्यंशतः शक्तिमत्, अंशतश्च शक्तिरहितमित्यपि न केनचित्सचेतसाऽभ्युपगन्तुं शक्यम् । श्रुतिरपि च 'परास्य शक्तिर्विविधैव श्रूयते' इति शक्तेर्नित्यसंबन्धमाह । कथं चापरिच्छिन्नस्य रसस्य परिच्छिन्नेन बलेन सार्वत्रिको नित्यः संबन्धः संभवेत्, बलाभावप्रदेशे रसस्य निर्बलस्य—निःशक्तिकस्याभ्युपगमापत्तेः । तस्माद् बलस्यापि, अपरिच्छिन्नतैव स्वीकर्तुमापततीति चेन्नैतद्युक्तं वचः । अभिप्रायापरिज्ञानात् । रसवद् बलमप्यनन्तमित्यवश्यमभ्युपगच्छामः, किन्तु बलस्यैतदानन्त्यं संख्यया, न परिमाणेन । रसस्य त्वानन्त्यं परिमाणेन, न संख्ययेति वैषम्यात् । अनन्तानि हि बलानि, प्रत्येकं बलं परिच्छिन्नमपि संख्यानन्त्येन रसमपरिच्छिन्नमभिव्याप्नोति । तस्मान्न रसो बलविनाकृतः, एकस्य बलस्याभावप्रदेशेऽपि बलान्तरस्य सत्त्वा-

भाषाटीका

रूप होता है। पुरुषों में प्रथम अव्ययपुरुष की पाँच कलाएँ हैं—उनमें ही अन्तिम सृष्टिसाक्षी कला—मन, प्राण और वाक् हैं, इसलिये मन को व्यापक वा अपरिच्छिन्न कहना विरुद्ध सा प्रतीत होता है। तथापि यहाँ के निरूपण का अभिप्राय यह है कि उन कलाओं में मन रसप्रधान है, और प्राण बलप्रधान। इसलिये मन को रस समझो और प्राण को बल। अतः रस-रूपता के विचार से मन अपरिच्छिन्न ही है। बलरूप प्राण ही उसका परिच्छेद करता है। यहाँ यह भी शंका हो सकती है कि प्राण को बलप्रधान होने से यदि परिच्छिन्न मान लिया तो अपरिच्छिन्न मन के साथ उसका नित्य संबन्ध कैसे बनेगा, प्राण तो थोड़े प्रदेश में मन के साथ रह सकेगा—जितना कि बड़ा होगा। शेष प्रदेश में तो मन विना प्राण के ही रहा। तो इसका उत्तर है कि एक एक प्राण व्यक्ति—वा बल० यक्ति यद्यपि परिच्छिन्न है, किन्तु वे प्राण व्यक्ति वा बल व्यक्ति संख्या से अनन्त हैं। जैसे समुद्र के जल में एक जगह की तरङ्ग दूसरी जगह नहीं है—एक एक तरंग का देश-

महतश्च महानित्यनन्तविधं तारतम्यं निष्पद्यते ।

---

संस्कृतव्याख्या

दिति न काप्यनुपपत्तिः, अनित्यमपि च तत् प्रवाहनित्यमिति कालपरिच्छेदेऽपि न बलत्वेन बलस्य नित्यत्वहानिः। एकस्य बलस्य प्रध्वंसेऽपि बलान्तरस्य तत्रानुवर्तनात्। यथा हि सुरस्रोतस्विन्यास्तटस्थेन पुरुषेणानुक्षणमुच्छलत्तरङ्गमालाकुलं जलमध्यक्षीक्रियते, परं यज्जलं पूर्वक्षणमासीत्, न तदुत्तरक्षणम् इति, सैवेयं प्रवाहनित्यता। यथा च सरस्वज्जले सर्वत्रैव तरङ्गा अखिलदृश्यीक्रियन्ते, किन्त्वेकत्रावस्थित एव तरङ्गो नान्यत्रेति दृष्टान्तेन संख्यानन्त्यकृतं विभुत्वमध्यवसेयम्। श्रुतिरपि 'परास्य शक्तिर्विविधैव श्रूयते' इति शक्तौ विविधत्वं ब्रुवाणा संख्यानन्त्यमेव व्यवस्थापयतीति सुसूक्ष्ममालोच्यम्। इदं बलमेव मायापदेन वेदान्तिभिर्व्यवह्रियते मितिकरणादित्यवोचाम। मायाया अपि प्रवाहनित्यत्वं सर्वत्र व्याप्तिश्चानयैव रीत्या तैः समाधीयते। सांख्या अपि च सत्त्वरजस्तमसामनयैव रीत्या विभुत्वं नित्यत्वं चाहुः प्रतिक्षण परिणाममभ्युपगच्छन्तोऽपि। शक्तिरूपैव सांख्यानां प्रकृतिः। नैयायिकाभ्युपगतद्रव्यरूपतां तस्या व्याचक्षाणो विज्ञानभिक्षुस्तु नितरां दार्शनिकेऽध्वनि भ्रान्त इति कृतमप्रकृतविस्तरेण।

**क्षुद्रस्य मनसः क्षुद्रः कामः।** बलरूपः परिच्छिन्नः प्राणो हि नानाविधः—महत्तमः, महत्तरः, महान्, क्षुद्रः, क्षुद्रतरः, क्षुद्रतमश्चेति—महत्तायाः

---

भाषाटीका

परिमाण छोटा है, किन्तु दूसरी जगह दूसरी तरंग मौजूद है। अतः संख्या के बाहुल्य से सब ही जल में तरंग रह जाती हैं।

इस ही प्रकार मन वा रस के एक प्रदेश में एक प्राण वा एक बल है, दूसरे प्रदेश में उसके न रहने पर भी, दूसरा प्राण वा दूसरा बल मौजूद है—यों संख्या की अनन्तता से वह रस के साथ अपनी व्याप्ति बना लेता है। यह भी समझ रखना चाहिये कि बल वा बलप्रधान प्राण नष्ट भी होता रहता है, किन्तु प्रवाह रूप से नित्य होने के कारण उसकी व्याप्ति सदा बनी रहती है। जिस प्रकार गंगातट पर बैठा हुआ मनुष्य, प्रतिक्षण अपने सामने जल देखता है, किन्तु जो जल पूर्वक्षण में था, वह उत्तरक्षण में नहीं रहता—वह दूर चला गया, किन्तु दूसरा जल आ गया। इसे ही प्रवाहनित्यता कहते हैं, ऐसी ही प्रवाह नित्यता बल वा प्राण की समझना।]

छोटे मन का काम (अर्क वा वासना) छोटा होता है, और बड़े (उदार) मन का बड़ा होता है। इस प्रकार इस छोटेपन के तारतम्य का अनन्त विस्तार

(३) कामबलमात्रानुसारात् तदाश्रितवाचो मण्डलं क्षुद्रं महद्वा नानाजातीयमुत्पद्यते । ततोऽनन्तान्येतानि मनःप्राणवाङ्मयानि प्राजापत्यसंज्ञानि कुरुक्षेत्रसंज्ञानि च ब्रह्मरूपाणि संभूतानि ।

(४) प्राणजातय एव त्वनन्तविधास्तद्भेदहेतुः ।

"विरूपास इदृषयस्त इद् गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे ॥"

( ऋ० सं० १०।६२।५ )

---

संस्कृतव्याख्या

क्षुद्रतायाश्चापेक्षिकत्वात् न नियतत्वमित्यनन्ता विधास्तत्र संभवन्ति । तेन परिच्छिन्नं मनोऽप्यनन्ततां याति । मनसश्चोत्थानमिच्छा, तत्परिणतिरेव च काम इति निरूपितं प्राक् । तदिदमुत्थानमाश्रयमेवानु संभवतीत्यत्र न विवादावसरः । तस्मात् क्षुद्रे मनसि क्षुद्रः कामः, महति च महानित्यपि निर्विवादम् ।

**कामबलमात्रानुसाराद्** । यावाँश्च मनसः कामः, यावद्वा प्राणे बलम्, तावदेव वाचो मण्डलमपि भवति, त्रयाणां परस्परमनुसंविधानादिति अनन्तविधता जगति जायत इति भावः । सर्वं चोच्यते ब्रह्म, कुरुक्षेत्रम्, प्राजापत्यं क्षेत्रं चेति सर्वेषामेषामानन्त्यं सिद्धमेव ।

प्राणजातय एव बहुविधाः, तत्कृतमेव च जगति भिन्नत्वमित्यत्र श्रुतिं प्रमाणयति—**विरूपास इद् ऋषयः** । मन्त्रेऽस्मिन् ऋषिपदेन प्राणा एव विवक्षिताः । प्राणानामृषित्वमनेकैः श्रुतिवाक्यैः साधितपूर्वम् । ऋषय

---

भाषाटीका

होता है । एक छोटा–उससे भी दूसरा छोटा, उससे तीसरा छोटा, यों ही एक बडा दूसरा उससे बडा, तीसरा उससे भी बडा—यही तारतम्य कहा जाता है ।

(३) काम ( वासना ) और बल की मात्रा के अनुसार इनके ही आश्रित वाङ्मण्डल ( वाक् से उत्पन्न भिन्न भिन्न पदार्थ ) भी छोटे बडे अनेक जाति के उत्पन्न होते हैं ।

इस प्रकार ये अनन्त ( असंख्य ) मन प्राण वाङ्मय प्रजापति के पुर अथवा कुरुक्षेत्र नाम के जो उत्पन्न होते हैं वे ब्रह्म के ही रूप हैं । प्राण की अनेक जातियाँ हैं ।

(४) इस अनेकता में श्रुति का प्रमाण देते हैं कि 'ऋषि विविध स्वरूप के हैं, इनके कम्पन ( क्रिया ) गम्भीर होते हैं । ये ऋषि अङ्गिरा के पुत्र हैं, ये अग्नि से ही

इत्याद्याः श्रुतयः प्राणजातीनामनन्तविधत्वे प्रमाणम् । तत्रा-प्येकैकप्राणसामान्यखण्डे कामाधीना नानाविशेषा अवान्तरा उत्पद्यन्ते । तेषां च विशेषाणां यदविशेषं पौर्विकं प्राणसामान्य-खण्डमाख्यातं तमसत्प्राणमाचक्षते, ऋषिप्राणं च । न तद्रूपं विद्यमानकार्यरूपवदस्तीत्यसदुच्यते ।

"असद्वा इदमग्र आसीत् । ऋषयो वाव तेऽग्रेऽसदासीत् । प्राणा वा ऋषयः ते यत्पुरास्मात् सर्वस्मादिदमिच्छन्तः श्रमेण

---

संस्कृतव्याख्या

इद्-प्राणा एव, विरूपासः—विभिन्नरूपाः—नानारूपाः, त इद्—त एव च, गम्भीरवेपसः—अन्तर्निहितक्रियाः, अन्तर्निहितमनसो वा । गम्भीरकर्माणः गम्भीरप्रज्ञा वा इति निरुक्तम् । त एते अङ्गिरसः पुत्राः, यतो हि अग्नेः सकाशादुत्पन्ना इति । तदेतदग्रे अङ्गिरःप्रकरणे स्फुटं व्याख्यास्यते ।

**नानाविशेषा अवान्तराः ।** बलावच्छिन्ने रसे, पुनरवान्तरबलप्रादुर्भाव इति एकैकस्मिन् महति खण्डे पुनः खण्डान्तराणि भवन्ति । यथैक-कल्लोलाक्रान्तेऽपि जले पुनरवान्तरास्तरङ्गाः, यथा वा गृहावच्छिन्न आकाशे पुनर्मठघटाद्यवच्छिन्ना विविधा आकाशाः । एतान्यवान्तराणि बलानि 'योग-माया' इत्युच्यन्ते । एतेषामवान्तरविभागानां जनकं यन्मूलभूतं प्राणसामान्यं तदृषिपदेनोच्यते—इत्यत्र पूर्वोदाहृतां श्रुतिं पुनः स्मारयति ।

---

भाषाटीका

प्रकट हुए हैं'—इत्यादि श्रुतियाँ प्राणजातियों की अनन्तरूपता बतलाती हैं । प्राणों को ही ऋषि कहते हैं—यह अनेक बार कहा जा चुका है, इस प्रकार प्राण के अनन्त खण्ड हो जाते हैं । इन असंख्य सामान्य प्राणखण्डों में एक एक प्राण-खण्ड की भी काम ( अर्क ) के कारण, अनेक अवान्तर विभिन्न जातियां बनती जाती हैं । प्राणों के इन असंख्य विभागों में जो सब से प्रथम मूलभूत सामान्य ( सर्वत्र समान भाव से रहनेवाला—कभी विकृत न होने वाला ) प्राण बताया गया है—उसे असत् प्राण अथवा ऋषि प्राण कहते हैं । इस सामान्य प्राण की जगत् के पदार्थों के समान कोई रूपमय ( दिखाई देने वाली ) सत्ता नहीं होती—इसलिये यह असत्प्राण कहा जाता है । इसमें पूर्वोक्त शतपथ श्रुति का प्रमाण पुनः दिया है कि—इस संपूर्ण जगत् की उत्पत्ति के पहले केवल वह ऋषि प्राण ( असत्प्राण ) ही थे । उनने इस जगत् को उत्पन्न करने की इच्छा से प्रेरित

तपसारिषन् तस्मादृषयः ।" (६।१।१) इति हि वाजिश्रुतिः श्रूयते । "प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजाः" इत्यैतरेय श्रुतिश्च । (ऐ. ब्रा. ९ अ. ३ ख.)

(५) तस्मादेवासदभिधानाद् ऋषिप्राणखण्डात् तदन्तः सृष्टयो

---

संस्कृतव्याख्या

तत्रासच्छब्दमृषिशब्दं चोपपादयति । सर्वस्मात्पूर्वम्-अरिषन्-क्रियाशीला जाताः, तस्माद्दृषय इति श्रुत्यर्थः । 'ऋषी गतौ' इति धातोरेव 'अरिषन्' इति श्रौतः प्रयोगः । अरिषन्-आर्षन्-इति भाष्यकृन्माधवः । अन्यद् व्याख्यातपूर्वम् ।

अथ **प्राणा वा ऋषय** इत्यैतरेयश्रुतौ प्राणानामृषीणां विशेषणचतुष्टयं श्रूयते—दैव्यासः, तनूपावानः, तन्वः, तपोजाः—इति । दैव्यासः—देवानां हिताः, देवोत्पादका इत्यर्थः । ऋषय एव पितॄनुत्पाद्य तद्द्वारेण देवानुत्पादयन्तीत्युक्तं प्राक् । देवेषु भवाः-इति वा । उपादानकारणानां कार्येषूपलम्भस्य नियतत्वात् । तन्वः—इति रसरूपस्य मनस इमे प्राणाः-शरीरभूताः, परिच्छेदकत्वात् । तपोजाः—तपसा जनयन्ति सृष्टिमित्यन्तर्भावितण्यर्थो जनिः । तनूपावान इति—स्वस्मिन् पूर्वोक्तरीत्या समुत्पन्नान् प्राणखण्डविशेषान् स्वस्य शरीरभूतान्, पान्ति-रक्षन्ति, सामान्यं बिना विशेषस्य स्थितेरसंभवात् । पावयन्ति-पवित्रयन्ति-विशोधयन्ति वा । ऋषिप्राणानामेवोत्तरसृष्टिविशोधकत्वादिति ।

---

भाषाटीका

होकर श्रम एवं तप (इनका स्वरूप पूर्व प्रकरण में बताया जा चुका है) के द्वारा ही गति की, इससे वे ऋषि कहे जाते हैं। (गत्यर्थक ऋष् धातु से ऋषि शब्द बना है—यह कहा जा चुका है)।

इस ही प्रकार ऐतरेय श्रुति में भी कहा है कि—प्राण ही दिव्य ऋषि शरीर को पवित्र करनेवाले हैं, वे ही आत्मा के मुख्य शरीर हैं, वे तप द्वारा दूसरे पदार्थों की रचना करते हैं। इसलिये 'तपोजा' कहलाते हैं। इन दोनों श्रुतियों से पूर्व असत् प्राण की विद्यमानता बताई गई है।

(५) इस असत् नामक ऋषि कहानेवाले मुख्य प्राण-खण्ड से—इसही के अन्तर्गत अनन्त सृष्टि उत्पन्न होती है। [ उपरोक्त ऐतरेय श्रुति में प्राण रूप ऋषि को तनू—तपोजा नाम से कहा है,—इस तपोजा शब्द में (प्रेरणार्थक णिच के

जायन्ते । तत्र प्राणा वा ऋषयस्तन्वस्तपोजाः—इति श्रुत्या ऋषिप्राणानां तपसा सृष्टिजनकत्वमवगम्यते ।

(६) तथा हि—अव्ययपुरुषालम्बनः क्षरपुरुषसाधनो विश्व-

---

संस्कृतव्याख्या

तामिमां सृष्टिप्रक्रियां संक्षिप्तैरक्षरैर्विशदयति—

अव्ययपुरुषालम्बनः । अव्ययः, अक्षरः, क्षरः—इति त्रयः पुरुषा

---

भाषाटीका

अन्तर्भूत रहने के कारण ) तप के द्वारा सृष्टिजनकता ( उत्पादकता ) ज्ञात होती है । अर्थात् वे असत् रूप से वर्तमान प्राणरूप ऋषि, स्वतः सर्वथा अविकृत रहते हुए, तप द्वारा संपूर्ण जगत् की रचना करने में समर्थ होते हैं ] ।

[ पूर्व में बताया जा चुका है कि—आरम्भावस्था में बल जब जागरित होता है, तब परिच्छेद ( सीमा ) बनाता है, ऐसा परिच्छेद हो जाने पर पुरुष बन जाता है, ऐसे—तीन अव्यय, अक्षर एवं क्षर पुरुषों के नाम भी बताये गये हैं । इन में अव्यय पुरुष की विज्ञान, आनन्द, मन, प्राण और वाक् ये पांच कलाएं भी कही जा चुकी हैं । उनमें प्राण के आधार पर अक्षर पुरुष का और वाक् के आधार पर क्षर पुरुष का विकास होता है । अब अव्यय पुरुष की पाँच कलाओं के समान—अक्षर एवं क्षर की भी पांच-पांच कलाएं होती हैं । ब्रह्मा, विष्णु, इन्द्र, अग्नि और सोम-ये अक्षर पुरुष की ५ कलाएं हैं, और क्षर पुरुष की—आध्यात्मिक, आधिभौतिक आदि रूपों में पृथक् पृथक् ५—५ कलाएं होती हैं । अविकृत आत्मभूत क्षरपुरुष की कलाएं अक्षर के सामान ब्रह्मा, विष्णु आदि नामों से ही कही जाती हैं । आगे विकृत होने पर जगत् की उत्पादकता के रूप में उनके नाम प्राण, आप्, वाक्, अन्नाद और अन्न होते हैं । स्मरण रहे कि—ये प्राण-वाक् स्थूल रूप हैं, पूर्वोक्त प्राण-वाक् यहाँ न समझें । इन पाँच कलाओं को प्रकृतिब्रह्म कहा जाता है । ये 'शुक्र' को साथ लेकर आगे बताये जानेवाले मण्डल बनाती हैं । इनके अध्यात्मिक आधिदैविक आदि विस्तार में आधिदैविक स्वयम्भू आदि कलाएं आती हैं । उक्त तीन पुरुषों में अक्षर पुरुष ही मुख्य रूप से सृष्टिकर्त्ता है । अव्यय पुरुष कभी विकृत नहीं होता, तथापि जगत् के निमित्तकारण रूप अक्षर पुरुष का आलम्बन ( आधार ) अवश्य बनता है । इसलिये साक्षिरूपता से वही मुख्य कारण कहा जाता है । जगत् का उपादान कारण बनता है क्षर पुरुष, वही प्रकृतिरूप में परिणत होता है । प्रकृति को भी ब्रह्म कहते हैं । वह प्रकृति ब्रह्म भी ५ रूपों में पारिणत होता है–१-स्वयम्भू, २-परमेष्ठी ३-सूर्य, ४-चन्द्र, और ५-पृथ्वी । यही सब विषय यहाँ कहा जाता है । ]

(६) इस प्रकार अव्यय पुरुष जिसका आलम्बन है, और जगत् का उपादान क्षर पुरुष जिसका साधन है—ऐसा विश्वव्यापक अक्षर पुरुष, जब प्रकृति से संयुक्त

व्यापी कश्चिदक्षरपुरुषः प्रकृत्या विशिष्टः सन् प्रकृतिब्रह्मणः पाञ्चविध्यात् पञ्चधात्मानमाधत्ते—स प्राणमयः स्वयम्भूः । स

---

संस्कृतव्याख्या

आरम्भ एव निरूपिताः । तत्राऽव्ययपुरुषः कार्यकारणातीतः, सर्वेषामालम्बनमात्रम् । अक्षरो निमित्तकारणम्, क्षरस्तूपादानकारणमित्यपि प्रत्यपीपदाम । प्रत्येकमेषां पञ्च पञ्च कलाः, तत्राऽव्ययस्य आनन्दः, विज्ञानम्, मनः, प्राणः, वागिति पञ्च कलाः प्रागुक्ताः । अत्र प्राणमालम्ब्याक्षरपुरुषः, वाचमालम्ब्य च क्षरपुरुषः स्वस्वरूपं धत्ते तिष्ठति चेत्यपि स्मर्यताम् । पूर्वप्रकरणे अर्काशीतिप्रक्रियां प्रदर्शयता अक्षरक्षरयोर्विकासप्रक्रिया निदर्शिता संक्षेपेण । तस्याक्षरपुरुषस्य पञ्च कलाः–ब्रह्मा, विष्णुः, इन्द्रः, अग्निः, सोमः–इत्याख्यायन्ते । क्षरस्य तु नानाविधाः । क्षरस्यार्द्धममृतम् अर्द्धं च मर्त्यम्, अर्धांशेन सोऽविकृत आत्मरूपतया तिष्ठति, अर्द्धेन तु विकारभागिति प्रतिपादितं श्रुत्या । तत्रात्मभूतस्य क्षरस्य कला अक्षरकलानामभिरेव ब्रह्मा, विष्णुरित्यादिभिर्व्यवह्रियन्ते, विकृतास्तु क्रमेण प्राणः, आपः, वाक्, अन्नादः, अन्नम्–इतिनामभिः । ता एताः प्राणाद्याः कला एव सर्वजगदुत्पादकत्वात् प्रकृतिब्रह्मेत्यप्युच्यन्ते । आसां च अधिदैवम्, अधिभूतम्, अध्यात्मं च भवति महान् विस्तर इति प्रतिपादितमुपोद्घातेऽस्माभिः । तत्राधिदैवतं पञ्च कलाः—स्वयम्भूः, परमेष्ठी, सूर्यः, पृथ्वी, चन्द्रः–इति पञ्च मण्डलरूपाणि धारयन्तीत्यत्र मूले व्याख्यातम् । यद्यपि सर्वेष्वपि मण्डलेषु पञ्चापि कलाः संनिविशन्ते—तासां परस्परमविनाभूतत्वात्, तथापि प्राधान्येन व्यपदेशा भवन्तीति न्यायमनुसृत्य तत्तत्कलाप्राधान्यात् तत्तन्मयत्वं तत्तन्मण्डलस्योक्तम् । एतेषु पञ्चसु रूपेषु अव्ययस्यालम्बनत्वम्, आत्मक्षरस्य अक्षरसहकारितया साधनत्वम्, प्राणादीनां प्रकृतित्वम् प्रकृतिब्रह्मत्वं च, अक्षरस्य च मुख्यं कर्तृत्वमत्र मूले व्यव-

---

भाषाटीका

होता है, तब प्रकृति रूप ब्रह्म के पाँच रूप होने के कारण स्वयं भी पांच रूप धारण करता है। प्राणमय (क्षर की प्राणकला को साथ रखकर) अक्षर पुरुष, 'स्वयम्भू' कहा जाता है। आपोमय अर्थात् क्षर की 'आप्' कला को साथ लेकर उसमें व्याप्त अक्षर पुरुष परमेष्ठी है। इस ही प्रकार वाङ्मय अक्षर पुरुष सूर्य है, अन्नमय वही चन्द्र है और अन्नादमय यह अक्षर पुरुष ही पृथ्वी लोक है।

[ पूर्व प्रकरण में जो 'अर्क' 'अशिति' आदि क्रम बताया है, वही 'अक्षर' और 'क्षर' पुरुष के विकास की प्रक्रिया है। कहा जा चुका है कि अव्यय की चौथी कला प्राण के आधार से अक्षर पुरुष का विकास होता है, और पाँचवी कला 'वाक'

**आपोमयः परमेष्ठी। स वाङ्मयः सूर्यः। सोऽन्नमयश्चन्द्रः। सोऽन्नादमयः पृथिवीलोकः।**

---

संस्कृतव्याख्या

हृतम्, निमित्तकारणस्यैव कर्तृतया सर्वत्र व्यवहारदर्शनात्। स चाक्षर-पुरुषो न केवलं कुम्भकारः कुम्भमिव मण्डलानीमानि निर्माति, अपि तु स्वयमपि पञ्चभिः कलाभिरेकैकं मण्डलमधितिष्ठतीति 'पञ्चधात्मानमाधत्ते' इत्युक्तं मूले। मण्डलानि च शुक्रेण निर्मीयन्ते। तदेतत्सर्वमुपोद्धाते प्रपञ्चि-तमिति तत्रैव द्रष्टव्यम्।

**आपोमयः परमेष्ठी।** व्याकरणरीत्या यद्यप्यम्मय इत्येव वक्तुमुचितम्, तथापि श्रुतिस्मृत्योरापोमयशब्दस्य भूयो व्यवहारदर्शनात्, स्पष्टमर्थप्रतिपा-दकत्वदर्शनाच्च बाहुलकेन विभक्तेरलुगत्र स्वीकार्य इत्यभिप्रायेण 'आपोमय'-शब्द एव बहुत्र व्यवहृतो ग्रन्थकृता। प्रयुक्तानामन्वाख्यानं व्याकरणमिति सिद्धान्तो न विस्मर्तव्यः।

**सोऽन्नमयश्चन्द्रः।** यद्यपि अक्षरकलासु-अग्निः—सोमः—इति क्रमः, तदनुसारी चक्षरकलास्वपि अन्नादः—अन्नम्-इति क्रमः उक्तः, अग्नेरन्नादत्वात्, सोमस्य चान्नत्वात्। तथा चेहापि अग्निगर्भायाः पृथिव्याः पूर्वम्, सोमगर्भस्य चन्द्रस्य तु परस्तादुपन्यास उचितः। परमग्रे व्याहृतिरूपेणैषामाख्यास्य-मानत्वात् चन्द्रस्यान्तरिक्षस्थस्य 'भुवः' पदेन पृथिव्या उपरि श्रवणादत्र क्रमव्यत्यासः कृत इत्यनुसन्धेयम्।

---

भाषाटीका

के आधार से क्षर पुरुष का—इसलिये अक्षर पुरुष कई जगह प्राण नाम से कहा जाता है, और क्षर पुरुष वाक् नाम से। नामसादृश्य से भ्रान्ति न हो, इसलिये इस विषय को खूब स्मरण रखना चाहिये। यद्यपि अक्षर की कलाओं में अग्नि-सोम यह क्रम है, तदनुसार क्षर की कलाओं में भी 'अन्नाद' 'अन्न' यही क्रम रक्खा गया है। अग्नि, सोम को खाता है—इसलिये अग्नि अन्नाद है और सोम अन्न। इसके अनुसार मण्डलों में अग्निप्रधान पृथ्वी का नाम पहले और सोमप्रधान चन्द्र का नाम पीछे होना चाहिये था, किन्तु चन्द्रमा भूमि के अधीन होता हुआ भी रहता है अन्तरिक्ष में, और अन्तरिक्ष—'भूः, भुवः' आदि व्याहृतियों में पृथिवी से ऊपर दूसरा लोक 'भुवः' नाम का माना गया है। इसलिये मण्डलों में वह क्रम बदल दिया गया—अर्थात् चन्द्रमा को पहले लिखा और पृथिवी को पीछे।]

**(७) तत्र स्वयम्भूः सत्यलोको[७] द्यौः, परमेष्ठी जनल्लोकः[५] पृथिवी। तयोरन्तरतोऽन्तरिक्षं तपोलोकः[६]। अथ परमेष्ठी द्यौः। सूर्यः पृथ्वी तयोरन्तरतोऽन्तरिक्षं महर्लोकः[४]। अथ सूर्यः, स्वर्लोको[३] द्यौः।**

---

संस्कृतव्याख्या

सैव व्याहृतिवाच्यता इदानीमुपपाद्यते—**तत्र स्वयम्भूः सत्यलोको द्यौः**। भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम्—इति सप्त व्याहृतयो भूशब्दवाच्यां पृथिवीमिमामस्मदधिष्ठितामारभ्य ऊर्ध्वक्रमेण सप्त लोकान् व्याहरन्ति। एतान्येव पृथिवीपुटैरतलवितलादिभिः सप्तभिः संयोज्य चतुर्दश भुवनानि व्याप्यन्ते पुराणादिषु। तत्रोर्ध्वस्थितेषु सप्तसु लोकेषु भूः (पृथिवी) स्वः (सूर्यः) जनः (परमेष्ठी) सत्यम् (स्वयंभूः) इति चत्वारि मण्डलानि। भुवः, महः, तपः—इति त्रीणि तु मध्ये मध्येऽन्तरिक्षाणि। अन्तरिक्षेष्वपि तानि तानि वरुण-बृहस्पति-ब्रह्मणस्पत्यादीनि नक्षत्रमण्डलानि स्थितानि, परं मुख्येषु मण्डलेषु तेषां गणना न क्रियते। तेषां प्रकीर्णत्वाद्—अस्मत्पृथिव्या सह विशिष्य सम्बन्धाभावाच्च। भुवर्लोकस्थेन चन्द्रेण त्वस्माकं विशिष्य सम्बन्ध इति सोऽन्तरिक्षस्थोऽपि मण्डलतया परिगण्यते। तदित्थं पञ्च मण्डलान्याख्यातानि। महः, तपः—इति द्वे तु

---

भाषाटीका

(७) इस प्रकार इन हमारे चिरपरिचित भूः, भुवः, स्वः, महः,: जनः, तपः, सत्यम् नाम के सप्त लोकों में यह अक्षर पुरुष व्याप्त है। इन सातों लोकों में तीन 'त्रिलोकी' बनती हैं। त्रिलोकी में नीचे का मण्डल पृथिवी कहा जाता है, ऊपर का दिव् (द्यौ) और दोनों के मध्य में अन्तरिक्ष—ये ही तीन लोक मिलकर एक त्रिलोकी होती है। अब ऊपर से आरम्भ करके पृथक् पृथक् द्यौ और पृथिवी का सन्निवेश समझाया जाता है—सब से ऊपर के सत्यलोक को द्यौ (दिव्) समझो, तो उससे नीचे के पांचवें परमेष्ठी-जन-लोक को पृथ्वी स्थान में मानों, तब इन दोनों के मध्य का तप लोक अन्तरिक्ष हुआ। यह एक त्रिलोकी हुई। इस ही प्रकार क्रम से पांचवां जन परमेष्ठी यदि द्यौः हो, तब तीसरा सूर्य (स्वः) पृथ्वी-स्थानीय माना जाय; और दोनों के मध्य में अन्तरिक्ष रूप चौथा महर्लोक है। तो यह दूसरी त्रिलोकी हुई। अब तीसरा यह हमारा सूर्य (स्वः) ही 'द्यौ' है, और पृथ्वी के स्थान पर पृथ्वी है, इन दोनों के मध्य में अन्तरिक्ष दूसरा भुवर्लोक है। यह तीसरी त्रिलोकी हुई।

[ यद्यपि मध्य मध्य के अन्तरिक्षों में (महः और तपः में) भी वरुण, बृहस्पति, ब्रह्मणस्पति आदि अनेक तारामण्डल हैं, तथापि पृथक् पृथक्

**इयं पृथिवी पृथ्वी । तयोरन्तरनोऽन्तरिक्षं भुवर्लोकः[2] । अथेयं पृथ्वी भूर्लोकः[1] । तेऽमी सप्त लोका उत्तरोत्तरं क्रमेण सन्निविशन्ते ।**

---

### संस्कृतव्याख्या

**अन्तरिक्षे एव । अत्र च त्रिविधा त्रिलोकी । इयमस्मदधिष्ठिता भूः पृथिवी, सूर्यो द्यौः, मध्ये तु चन्द्राधिष्ठितमन्तरिक्षमित्येका त्रिलोकी । तदनु सूर्यं पृथिवीस्थाने मत्वा परमेष्ठिनं च द्युस्थाने मत्वा महःपदवाच्येनान्तरिक्षेण सहेयं द्वितीया त्रिलोकी । अथ परमेष्ठिनं पृथिवीस्थाने भावयित्वा स्वयम्भुवं तु द्युस्थाने भावयित्वा तपःपदवाच्येनान्तरिक्षेण तृतीयेयं त्रिलोकी । अत्र सूर्यस्य परमेष्ठिनश्च पृथिवीरूपेण द्युलोकरूपेण च द्वेधा गणनात् सप्तभिरेव लोकैस्तिस्रस्त्रिलोक्यः संपद्यन्ते । एता एव तिस्रो द्यावः, तिस्रः पृथिव्यश्च बहुधा मन्त्रेषु श्रुता इति व्याख्यातमुपोद्घाते । तदेवात्र निरूपितं मूले । व्याहृतिषु यद्यपि जन इत्यकारान्तः शब्द उपादीयते, परं ब्राह्मणेषु 'जनत्' इति तकारान्तोऽपि श्रूयते—इति 'जनल्लोक' व्यवहारोऽत्र मूले द्रष्टव्यः ।**

---

### भाषाटीका

रहने से और हमारी इस पृथ्वी पर उनका विशेष प्रभाव न होने से प्रधान मण्डलों में वे नहीं गिने जाते, किन्तु हमारे इस अन्तरिक्ष 'भुवः' लोक का चन्द्रमा, पृथ्वी पर बहुत प्रभाव डालता है, उस से नित्य संबद्ध भी है, इसलिये वह मण्डलों में गिन लिया जाता है। यों सात लोकों में यद्यपि मण्डल ४ और मध्य के अन्तरिक्ष ३ होना युक्तियुक्त था, किन्तु चन्द्रमा को मण्डलों में गिन लेने से मण्डल ५ होगये और अन्तरिक्ष २ ही रह गये ]

पहला भूलोक तो यह पृथिवी मण्डल है ही । इस प्रकार क्रम से उत्तरोत्तर ये सात लोक विराजमान हैं । वे ही यहां से आरम्भ कर भूः, भुवः, स्वः आदि सात व्याहृतियों से कहे जाते हैं ।

[ इस प्रकार अक्षर पुरुष की पाँच कलाओं का विकास होता है । वा यों कहिये कि निमित्तभूत अक्षर से प्रेरित, क्षरपुरुष ही प्रकृतिरूप में परिणत हो कर पांच रूपों में आता है । ये अक्षर अथवा क्षर की पांचों कलाएँ साथ ही रहती हैं, इसलिये सब मण्डलों में सब कलाएँ हैं, तो भी एक-एक कला अक्षर पुरुष की और एक-एक क्षर की एक-एक मण्डल में प्रधान ( अङ्गीरूप ) होती है, दूसरी उस की अङ्गभूत बनती हैं । अक्षर पुरुष की कलाओं में वर्तमान अग्नि, सोम संपूर्ण जगत् में व्याप्त हैं । उनमें भी यह तारतम्य है कि—पृथ्वी, सूर्य और स्वयम्भू ये तीन मण्डल अग्निप्रधान होने से आग्नेय मण्डल, एवं चन्द्रमा और परमेष्ठी, सोमप्रधान होने से सौम्यमण्डल कहाते हैं ]

(८) तत्रायं सत्यलोकः स्वयम्भूर्ब्रह्माग्निलोकः। ऋक्साम-यजुषां यजुर्ब्रह्माग्निरुच्यते। यच्च जूश्चेति व्युत्पत्त्या वाय्वाकाशभे-

संस्कृतव्याख्या

अत्र त्रीणि मण्डलान्याग्नेयानि, द्वे तु सौम्ये। त्रयाणामग्नीनां व्यवहारार्थं संज्ञाभेदः। तिस्रस्तिस्रश्च प्रत्येकं मनोता इति सर्वमिदमुपोद्घाते प्रपञ्चितम्। तद्रीत्या स्वयम्भूमण्डलं ब्रह्माग्निमयमित्याह-**स्वयंभूर्ब्रह्माग्निलोकः।** कोऽयं ब्रह्माग्निरिति जिज्ञासायां तत्स्वरूपमुपपाद्यते-**यजुर्ब्रह्माग्निरुच्यते।** वेदमयः स्वयम्भूरिति प्रतिपादितपूर्वम्। वेदानां च त्रयी प्रसिद्धा। तत्र ऋक्सामे केवलमायतनभूते, तयोरायतनयोर्व्यासं यजुस्तु ब्रह्माग्निरूपम्। एतच्च यजुःपदं यच्च जूश्चेति शब्दद्वयेन परोक्षवृत्त्या संसाधितं वाजसनेयब्राह्मणे। तत्र यदिति गतिशीलतामाह, जूरिति तु स्थितिशीलताम्। ततश्च गतिस्थितिशीलौ वाय्वाकाशौ यजुःपदार्थः। वायुरयं न भौतिकः, भूतानां परतरमुत्पत्स्यमानत्वात्। अयं तु प्राणरूपो दैवतं वायुरिति स्मर्तव्यम्। भूतरूपो वायुरप्यत एवोत्पद्यत इत्यन्यत्।

अत्रेदमपि मनसि करणीयम्—अनुपदमेव ग्रन्थे स्वयम्भूमण्डलस्य प्राणमयत्वमुक्तम्, इदानीं तु ब्रह्माग्निमयत्वमुच्यते—इति ब्रह्माग्निरूप एवायं प्राणः प्रतिपत्तव्यः। अत्र च प्राणपदं नाव्ययकलारूपस्य प्राणस्य बोधकम्, तस्य कार्यकारणातीततायाः प्रतिपादितत्वात। अयं तु प्राणः क्षरकलारूपः। योऽयमुपादानकारणतां प्रतिपद्यते इत्यादि न विस्मर्तव्यम्। अस्य प्राणरूपस्य चांशा अमी प्रस्तुता ऋषय इति प्रकरणस्यास्य प्रकृतेन संबन्धः। एते च सत्यलोके तिरोहितावयवभेदा 'असत्' पदेन ऋषिपदेन चोच्यन्ते, तपोलोके तु क्रियाशीलाः परिक्षुब्धाः, जनलोके उद्बुद्धावयवाः पितृरूपतया परिणमन्ति। जगदुत्पादनप्रवृत्तिरेव पितृत्वविकासः, उत्पादकस्यैव पितृत्वप्रसिद्धेः। तपोजा इत्यादि पूर्वोक्तमेव स्मारितम्।

भाषाटीका

(८) उक्त सातों लोकों में सत्यलोक स्वयम्भू है—इस को कोई दूसरा उत्पन्न नहीं करता, यह ब्रह्माग्निलोक कहलाता है। अर्थात् इस में व्याप्त अग्नि, ब्रह्माग्नि नाम से प्रसिद्ध है। कह चुके हैं कि स्वयम्भू मण्डल 'वेदमय' है। वेद तीन प्रसिद्ध ही हैं। इन ऋग, यजु और साम में यजु को ब्रह्माग्नि कहा जाता है। यजुः शब्द 'यत्' और 'जूः' से बना है, ( यच्च जूश्च, यजुः। ) इस में गत्यर्थक 'इ' धातु से बने हुए यत् शब्द से गतिशील वायु का बोध होता है, और दूसरे जू धातु से बने जू शब्द

दभिन्नोऽयं ब्रह्माग्निः । तत्रानन्ता वायवोऽमी ऋषय उच्यन्ते ।

---

संस्कृतव्याख्या

ननु ग्रन्थारम्भे मूलभूतानामव्ययकलारूपाणां मनःप्राणवाचामन्यतमस्य प्राणस्यैवासत्पदवाच्यस्य ऋषित्वमुक्तम्, इहापि चानुपदम्—'यदविशेषं पौर्विकं प्राणसामान्यखण्डमाख्यातम्, तमसत्प्राणमाचक्षते, ऋषिप्राणं च' इति सर्वमूलस्यैव ऋषित्वं स्पष्टमुक्तं मूले, तत्कथमिदानीं क्षरकलारूपस्य प्राणस्यांशा ऋष्यादयो व्याख्यायन्त इति चेच्छ्रूयताम् । अव्ययकलारूपं प्राणमालम्ब्याक्षरपुरुषविकासः, अक्षरानुप्रवेशादेव च क्षरस्य प्राणाद्याः पञ्च कला इति क्षरभूतस्यापि प्राणस्य मुख्यप्राणविकासरूपतैव । ततश्च कार्यकारणयोरभेदोपचारान्नैवंविधा दोषाः प्रसरन्ति । क्षरभूतोऽपि च प्राणो रूपादिविशेषगुणविरहादसत्पदवाच्योऽर्हति भवितुम् । 'विरूपास इदृषयः' इति मन्त्रं चोदाहरता ग्रन्थकृता 'ते अङ्गिरसः सूनवः' 'ते अग्नेः परिजज्ञिरे' इति ऋषिप्राणानामुत्पत्तिं प्रमाणीकुर्वता क्षररूपतैषां कण्ठत एवोक्तप्राया । न हि अव्ययकलारूपः प्राणः कुतश्चिदुत्पद्यते नाम । तस्य सर्वोत्पादकत्वात् । ग्रन्थारम्भेऽपि च तान्येतानि वाक्प्राणमनांस्येव सर्वाणि कर्मब्रह्माणि इति सर्वत्र प्राणादिव्याप्तिं व्याहरता, क्षरादिष्वपि तेषामेव मुख्यानां समन्वय उक्त इत्यभेदभावनाद्रढीकरणान्नायं दोषः प्रसरति । 'नानाजातीयाश्चैते प्राणाः' इत्यारम्भेऽपि नानात्वमुपक्षिप्य क्रमेणैव ऋषिपित्रादिप्रादुर्भावः स्पष्टमभिव्यञ्जितः । अन्येषु च ग्रन्थेषु ऋषिपितृदेवानां वाग्रूपता विस्तृत्य प्रतिपादितेति नात्र संदेहस्य कोऽप्यवसरः । ग्रन्थारम्भे व्याख्यायां च मनःप्राणवाचः सृष्टिप्रक्रियानिर्वाहकमन्यं स्वरूपं प्राकृते प्रपञ्चे दधते, सोऽयं प्राण

---

भाषाटीका

से अचल, वायु के आधार आकाश का बोध होता है। अर्थात् वायु और आकाश इन दोनों के संमिलित रूप का नाम यजु वा ब्रह्माग्नि है। वा यों कहो कि ब्रह्माग्नि को यदि विभक्त रूप में समझना चाहें—तो आकाश और वायु नाम से उस के दो रूपों का परिचय होगा।

[ यह स्मरण रहे कि यह वायु भौतिक वायु नहीं है। यह प्राण रूप आधिदैविक वायु है। भौतिक वायु का विकास आगे चल कर होता है, उसमें इस वायु की कारणता अवश्य रहती है। यह भी स्मरण रहे कि अभी पूर्व स्वयम्भू मण्डल को प्राणमय कहा है, और अब उसे 'ब्रह्माग्निमय' 'यजुर्मय' वा 'वाय्वाकाशमय' कहा जाता है, इस का यह तात्पर्य है कि क्षर की प्रथम कला रूप प्राण, वायु और आकाश का संमिलित रूप ही है। एक ही तत्त्व को 'प्राण'

(९) ते च द्विविधाः—उन्मुग्धावयवाः, उद्बुद्धावयवाश्च। आद्याः असत्प्राणाः सत्यलोकेऽवतिष्ठन्ते । अथैते तपोलोकमागत्य तप्यमानाः परिक्षुब्धाः सन्तः क्रमेण तृतीये पारमेष्ठ्ये जनल्लोके समागता उद्बुद्धावयवा भूत्वा द्वितीयाः पितरो जायन्ते तपोजा हीमे तपसैव नानारूपा जायन्ते ।

(१०) तत्रोद्बुद्धावस्थायामवयवधर्मतो भेदादमी ऋषयोऽनन्तविधा भवन्ति । तेषु द्वादशातिस्तुतयः स्मर्यन्ते—भृग्वङ्गिरसौ,

---

संस्कृतव्याख्या

एव ऋष्यादिरूपेण व्याख्यायते इति यदवदाम, तदेतत्सर्वं रहस्यं क्रोडीकृत्यैवावदामेति सुचिरं निध्याय सन्तोष्टव्यम् ।

द्वादशाभिस्तुतयः । द्वादशानां सृष्टिविधौ मुख्यं कार्यकारित्वम्, अत एव श्रुतौ भूयसी स्तुतिः—प्रस्तुतिरमीषामित्येते अभिस्तुतयो अतिस्तुतयो

---

भाषाटीका

'यजुः' 'वाय्वाकाश' आदि भिन्न भिन्न नामों से कहा गया है । अब आगे इस प्रकरण में प्राण पद से—यह तत्कलारूप ही प्राण लिया जायगा, और इस के ही अंश 'ऋषि' 'पितृ' आदि बताये जांयगे । ]

इस 'यजुः' में ये 'यत' नाम के वायु अनन्त हैं, उन्हें ही प्रस्तुत ऋषि नाम से कहा जाता है ।

(६) इनके प्रधानतया दो भेद हैं-एक उन्मुग्धावयव-अर्थात् जिन में अवयवों का पृथक् पृथक् विकास नहीं हुआ है-अवयव तिरोहित हैं, और दूसरे उद्बुद्धावयव-जिन में अवयवों का विकास होगया है, अर्थात् जिनके पृथक् पृथक् अवयव स्पष्ट प्रकट हैं । पहले प्रकार के 'असत् प्राण' कहे जाते हैं, जो सत्यलोक में रहते हैं । ये स्वभावतः गतिशील होने के कारण जब आगे के 'तप' लोक में आते हैं-तप करते हैं-अर्थात् गतिशील होते हैं; तब प्रतप्त होने के कारण अत्यन्त क्षुब्ध हो जाते हैं, और क्रम से परमेष्ठिमण्डल रूप जनलोक में आकर इनके अवयव स्पष्ट पृथक् पृथक् हो जाते हैं, तब इस दूसरे रूप में इनका नाम 'पितृ' हो जाता है, अर्थात् जनलोक में 'ऋषि' ही 'पितृ' रूप में परिणत हो जाते हैं। यह प्राण का दूसरा रूप है । तप से बने हुए वा तप से रचना करनेवाले ये ऋषि तप के द्वारा हो अनेक रूपों में परिणत होते हैं ।

(१०) उद्बुद्ध होने पर अर्थात् अवयवों के पृथक् पृथक् रूप में प्रकट होने पर, अवयवों के भेद के कारण धर्मभेद प्राप्त कर ये ऋषि अनन्त जाति के हो जाते हैं ।

**अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ, वसिष्ठागस्त्यौ, विश्वामित्रविश्वकर्माणौ—इति ॥**

**(११) त एते पितृसंज्ञाः सृष्टिकर्त्तारः प्राणा वाच्येव योनौ**

---

संस्कृतव्याख्या

वा प्रसिद्ध्यन्ति । एषां च द्वयोर्द्वयोर्घनिष्ठः संबन्ध इति द्वन्द्वरूपेणैते प्रतिपादिताः ।

**त एते पितृसंज्ञाः ।** यद्यपि नामानीमानि भृग्वङ्गिरःप्रभृतीनि ऋषीणामेव श्रूयन्ते स्मर्यन्ते च, पितृरूपेण परिणतानां त्वग्निष्वात्तादीनि

---

भाषाटीका

[ स्मरण रहे कि यहाँ ऋषि और पितृ आदि को क्षर की प्रथम कला—प्राण के रूप में बताया गया है । क्षरपुरुष के 'वाक्'रूप होने के कारण अन्य ग्रन्थों में ऋषि, पितृ, देव आदि को 'वाङ्मय' भी कहा गया है । यह क्षर प्राण भी अक्षर की प्रेरणा के बिना नहीं बनता, और अक्षर मुख्य प्राण ( अव्यय की कला ) के अवलम्ब से विकसित है, इसलिये ग्रन्थ के आरम्भ में वा इस प्रकरण के आरम्भ में जो ऋषि आदि की मुख्य-प्राणरूपता प्रतीत होती है उससे विरोध नहीं समझना । अव्यय सब का आलम्बन है, सब में समन्वित है, इसलिये सब में उसकी अभेद-भावना सदा रहनी चाहिये । ]

इन अनन्त ऋषियों में बारह 'अभिस्तुति' वा 'अतिस्तुति' कहे जाते हैं, अर्थात् निम्नलिखित ऋषियों के कार्य बहुत हैं, अतः इनकी स्तुति ( प्रशंसा ) भी प्रधानतया होती है । इनके नाम हैं—भृगु[१]-अङ्गिरा[२], अत्रि[३]-मरीचि[४], पुलस्त्य[५]-पुलह[६], क्रतु[७]-दक्ष[८], वसिष्ठ[९]-अगस्त्य[१०], और विश्वामित्र[११]-विश्वकर्मा[१२] ।

[ यद्यपि ये १२ नाम ऋषियों के ही प्रसिद्ध हैं, 'पितृ' अवस्था में इनके 'अग्निष्वात्त' आदि दूसरे नाम हो जाते हैं, किन्तु ये ऋषि ही पितृरूप से परिणत होते हैं, इसलिये यहाँ पितरों के भी ये ही नाम लिख दिये गये । वैज्ञानिक प्रक्रिया में वस्तुस्वरूप पर ध्यान रहना चाहिये—शब्दों पर विशेष आग्रह नहीं रहता । अथ वा 'त एते पितृसंज्ञाः' का अर्थ यों लगा लेना कि ये १२ ऋषि ही जब पितृसंज्ञा में अर्थात् पितृरूप में आते हैं—तब सृष्टि-कर्ता होते हैं । दो दो का परस्पर अत्यन्त सहयोग होने के कारण—इन्हें द्वन्द्व रूप से लिखा गया है, यह बात आगे स्पष्ट होगी । ]

(११) पितृनाम प्राप्त कर ये सृष्टि के रचयिता ऋषिप्राण, वाक्-रूप योनि में ( वीर्य रूप से ) अपने आपको सिक्त करते हुए—अर्थात् क्षर रूप वक्षा में

**आत्मानं सिञ्चन्तोऽक्षरपुरुषमनोविशेषगृहीतबलप्रयोगाद् विभिन्न-**

संस्कृतव्याख्या

नामान्तराणि भवन्तीति स्पष्टं ग्रन्थान्तरेष्वनेनैव ग्रन्थकृता व्याख्यातम्, तथापि कार्यकारणयोरनन्यत्वाभिमानेनेह पितृत्वमेषां द्वादशानामुक्तमिति समाधेयम् । वैज्ञानिके पथि एवंविधस्य विरोधस्याप्रसरात्, वस्तुप्रतिपादन एव तत्र मुख्यतातत्पर्यात् । यद्वा, द्वादशाभिस्तुतय ऋषयो नामभिरुक्ताः त एवैते यदा पितृसंज्ञा जायन्ते—पितृरूपेण परिणमन्ति, तदा सृष्टिकर्तारो भवन्तीति व्याख्येयम् ।

**ते एते पितृसंज्ञाः ।** क्षरस्य पुरुषस्य पञ्च कलाः प्रतिपादिताः, तासु मुख्यस्य प्राणस्यैवांशा ऋषयः पितरश्चेत्युक्तम् । ता इमाः सर्वा वाचः अव्ययस्य वाचमालम्ब्यैव क्षरस्य पुरुषस्य विकास इत्यसकृदुक्तत्वात् । तस्माद् वाच एवैते ऋषयः, पितरो, देवाश्चेत्यपि शक्यते वक्तुम् । क्षरकलासु विशिष्यापि वाङ्नाम्ना कलैका प्रतिपादितैव । आसां कलानां पञ्चधा स्वरूपमुपोद्घाते प्रपञ्चितम् । स्वस्वरूपेणैता विश्वसृजः (१) पञ्चीकृताः पञ्चजना इत्याख्यायन्ते (२) पुनः सर्वहुति यज्ञे परस्परं हुताः पुरञ्जनाख्याः परमाणुरूपतामापद्यन्ते (३) स्कन्धरूपतामापन्नास्तु ब्रह्मपुराणि, यानि पञ्च मण्डलान्युक्तानि (४) तदुपादानभूतानि ब्रह्माणि सुब्रह्माहुतौ तु शुक्रतां गतानि (५) इति । सैव सर्वहुतो यज्ञस्य प्रक्रियात्र निदर्श्यते—वाचि-योनौ पितृरूपाः प्राणा आत्मानं सिञ्चन्तीति । वाचि प्राणप्रवेशाद्विभिन्ना विकृतयो जायन्त इति सारः । अत्र योनित्वेन प्रतिपादिता वागपि न मुख्या वाक्, या खलु अव्ययस्य पञ्चमी कला । इयन्तु क्षरपुरुषकलारूपा वाक्, या सर्वस्य जगत उपादानतां यातीति नामसादृश्ये भ्रान्तिवारणाय भूयो भूयः स्मार्यते ।

**अक्षरपुरुषमनोविशेष···।** यत्खलु मुख्यं श्वोवसीयसं मनः, तत्सर्वालम्बनभूतं निष्क्रियमुक्तम् । ततोऽर्काशीतिप्रक्रियया अक्षरपुरुषविकासे तत्रापि तन्मनः समन्वेति, समन्वयादेव तस्य सर्वालम्बनत्वसिद्धेः । योऽयमिच्छाजन्योऽर्कः पूर्वस्मिन् प्रकरणे प्रतिपादितः, सोऽक्षरसमन्वितस्यैव मनसो

भाषाटीका

प्रविष्ट होते हुए, अक्षरपुरुष के मन की इच्छा द्वारा प्राप्त बल के प्रयोग से विभिन्नरूप होकर सम्पूर्ण सृष्टि उत्पन्न कर देते हैं।

[ अक्षर-पुरुष में भी अव्यय समन्वित है, अतः उसमें भी मन है। अर्करूप इच्छा उसी में होती है। बिना इच्छा के प्राण का व्यापार नहीं होता—यह

रूपा एताः सर्वाः सृष्टीरुत्पादयन्ति ।
तथा चैतरेयश्रुतिराह—

"प्राणो वा आयुः । प्राणो रेतः । वाग् योनिः । योनिं तदुपसन्धाय रेतः सिञ्चति । रेतस्तत् सिक्तं विकरोति । सिक्तिर्वा अग्रेऽथ विकृतिः । रेतस्तद् विकृतं प्रजनयति । विकृतिर्वा अग्रेऽथ जातिः ।" ( १०।३८,३९ ) । इति ।

(१२) एष च प्राणो मनसेषितो वाचि सिच्यते । "सोमो वै

---

संस्कृतव्याख्या

विज्ञेयः । तदेव बलं गृह्णाति । सर्वाऽपि च सृष्टिः, कामतपःश्रममूलिकेति मनोव्यापारस्य कामस्य सर्वत्र सत्ता प्रतिपादितैव । तदेतत्सर्वं स्पष्टीकर्तुमिह अक्षरपुरुषमनसा गृहीतं यद् बलम्, तस्य प्रयोगात् पितरः सर्वाः सृष्टीर्जनयन्तीत्युक्तम् । अक्षरप्रेरणां विना क्षरभागा ऋषिपित्राद्या न सृष्टौ क्षमा इति तात्पर्यम् ।

अत्र प्रमाणतया श्रुतिमुदाहरति-**प्राणो वा आयुः** । वाचि सिक्तं प्राणरूपं रेत एव विकरोति—वाचि विक्रियां जनयति । पूर्वं सिक्तिः—सेचनम्, तदनु वाचो विकृतिरिति प्राणिनां गर्भावस्थासाम्यमुदाहृतं श्रुत्या । विकृतेरनन्तरं च जातिः—जन्म भवति तत्तदर्थानामिति स्पष्टं सर्वम् ।

मनसा प्रेरित एव प्राणो वाचि प्रविशतीत्यत्रापि श्रुतिं प्रमाणयति—**सोमो वै रेतोधाः** इति । अत्र सोमपदेन मन एव विवक्षितम् । मनसः

---

भाषाटीका

कई बार कह चुके हैं । क्षर की कला प्राण, वाक् आदि का यह परस्पर प्रवेश 'सर्वहुत' यज्ञ है । जिसका विवरण उपोद्घात में हो चुका है । ]

यही बात ऐतरेय श्रुति में बताई गई है कि—"प्राण ही आयु ( जीवन ) है । प्राण ही वीर्य है । वाक् योनि ( उत्पत्तिस्थान ) है । योनि को लक्ष्य कर ( उसके समीप आकर ) वीर्य का सेचन किया जाता है । अर्थात् प्राण यहाँ स्वयं सिक्त होता है, और सींचा गया वह वीर्य आगे विकृत ( विकारों के रूप में परिणत ) होता है । वा यों कहिये कि वीर्य के सेचन से वाक् में विकृति होती है । पहले सेचन आगे विकृति यह क्रम है । यह रेत ही विकृत होकर अनेक वस्तु उत्पन्न कर देता है, इसलिये प्रथम विकृति फिर ( वस्तुओं का ) जन्म, यह भी क्रम जानना ।

(१२) मन में कामना उठने पर यह प्राण वाणी में सिक्त होता है । यह बात भी श्रुति में बहुधा कही गई है कि 'सोम ही रेत ( वीर्य ) का आधान करता

रेतोधाः" इति बहुधा श्रवणात् । सोममयं मन एवादौ कामयते, मानसं रूपं प्रकल्प्य तदर्थं प्राणं नियुङ्क्ते । प्राणेन चाहता वाग् विक्रियते । "त्वष्टा रूपाणि विकरोति" । स एष सर्वसृष्टिसाधारणो नियमः ।

---

संस्कृतव्याख्या

सौम्यत्वात् । अक्षरपुरुषस्यान्तिमा कला सोम इत्युदाहराम पूर्वम् । तत्परिणतिरेवाक्षरपुरुषे मनः । अस्माकं मनश्चापि सोमस्यैव परिणतिरिति स्पष्टीकृतमन्यत्र । यथास्मदादिभिर्मनोव्यापारपूर्वकमेव ते तेऽर्था निर्मीयन्ते, तथैवादिसृष्टिरपि मुख्यमनोव्यापारपूर्विकेति पुनः स्मारितम्—'सर्वसृष्टिसाधारणो नियमः' इति मूलग्रन्थे । 'त्वष्टा रूपाणि विकरोति' इति श्रुतौ त्वष्टेति प्राण उक्त इति विभाव्यम् ।

---

भाषाटीका

है' । यहाँ सोम शब्द से मन ही कहा जाता है ।

[ यह दूसरा अवर कक्षा का मन सोम का ही परिणाम है । सर्वप्रधान मुख्य मन यहाँ विवक्षित नहीं है । संसार दशा में भी हम लोगों के सब उत्पादन मन की क्रिया के अनुसार होते हैं, इस ही तरह आरम्भ में भी उत्पादन मन के द्वारा समझना—यह दृष्टान्त रूप से समझाया गया है । ] आरम्भ में सोममय मन ही सृष्टि की कामना करता है, और उसके एक मानस रूप की कल्पना भी कर लेता है । इसके अनन्तर उस मनोगत रूप की स्पष्ट रचना के लिये वही मन प्राण को नियुक्त करता है—और प्राणद्वारा प्रेरणा पाकर वाक् ही सब पदार्थों के रूप में फैलती है । अन्यत्र भी श्रुति में कहा है कि—त्वष्टा अर्थात् प्राण ही रूपों को भिन्न भिन्न दशा में ले जाता है । यह मन, प्राण और वाक् की क्रियाओं का क्रम संपूर्ण सृष्टि मात्र के लिये साधारण नियम है ।



## प्राणस्य सप्त विभागाः।

**(१) अक्षरगताकाशे प्राणवायुश्चतुर्धा व्यासज्जते इन्द्रः, आत्मा, पक्षौ, पुच्छम्।**

**(२) अथैष तावदृषिप्राणः स्वभावात् परिमण्डलरूपः प्रायेण**

---

संस्कृतव्याख्या

अथोक्तमेवार्थं तत्र तत्र कंचिद्विशेषं विशदयितुं श्रुतिप्रमाणैः समर्थयितुं च प्रकारान्तरेण निरूपयति—अग्रिमे प्रकरणे। तस्य शीर्षके—**अक्षरगताकाशे**। बृहदारण्यकोपनिषदि जनकयज्ञाख्याने (३ अ. ८ ब्रा.) भगवन्तं याज्ञवल्क्यं प्रति गार्ग्याः प्रथमः प्रश्नः—यदिदं किञ्चित् सप्तसु भुवनेषु, तत् कस्मिन्नोतं च प्रोतं च। आकाशे तदोतं च प्रोतं चेति याज्ञवल्क्यस्योत्तरम्। अथ कस्मिन्नाकाश ओतश्च प्रोतश्चेति द्वितीयः प्रश्नः। "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादि याज्ञवल्क्यस्योत्तरम्। तेन आकाशोऽक्षरपुरुषे ओतप्रोतभावेन स्थित इति सिद्धम्। अत्राकाशपदेन वाङ्मण्डलं गृह्यते, अक्षरपुरुषस्तु प्राणस्य विवर्त्त इति अक्षराधारेण वाग्विवर्तस्य क्षरस्य स्थितिर्बोधिता। तदनुसृत्यैवात्रोच्यते—अक्षरगतः—तदाधारेण स्थितो य आकाशः—वाङ्मण्डलम्, तस्मिन् यज्जूरित्यत्र व्याख्यातो यः प्राणाख्यः क्षरकलारूपो गतिशीलो वायुः, स चतुर्धा व्यवतिष्ठते इत्यर्थः। तेन क्षरकलात्मकस्य सर्वत्रानुस्यूतस्य प्राणस्य चत्वारो विभागा अग्रे वर्णनीयाः, अयं च प्राणोऽव्ययकलारूपस्य मुख्यप्राणस्याधारेण स्थित इति बोधितम्। अस्यैव च वाग्विवर्त्तस्य क्षरप्राणस्य ऋषित्वं प्रागुक्तमिति स्पष्टीकृतमेव तत्र। अयं प्राणः परिमण्डलम्—अर्थाद् वर्तुलं वृत्तं निर्माय तिष्ठति।

---

भाषाटीका

अब पूर्वोक्त अर्थ को ही कुछ विशेषता के साथ अधिक स्पष्ट करने एवं श्रुतियों से प्रमाणित करने के लिये आगे का प्रकरण आरम्भ होता है।

(१) अक्षरगत आकाश में अर्थात् अक्षर पुरुष के आधार पर स्थित, क्षर पुरुष की कला वाक् के वाङ्मय मण्डल में प्राणवायु अर्थात् क्षर की कलारूप 'यजुः' के अन्तर्गत प्राण, चार रूपों में विभक्त होकर रहता है। वे रूप हैं—इन्द्र, आत्मा, पक्ष और पुच्छ। इनका निरूपण नीचे किया जाता है।

(२) जिस ऋषिप्राण का ऊपर वर्णन हुआ है—यह स्वभावतः प्रायः गोल

संपद्यते । तच्चैनत् परिमण्डलं वर्ष्म स्वभावतस्त्रेधा विभज्यते—अभयम्, सामन्तम्, पारावतञ्च । "मध्यं वै नाभिः, मध्यमभयम्"। (शत. १।१।२।२३)

एष खलु मध्यमः प्राणो द्वेधोपपद्यते—सवीर्यो वा, क्वचिन्निर्वीर्यो वा । ब्रह्म क्षत्रं विडिति वीर्याणि ।

---

संस्कृतव्याख्या

प्रायेणेत्यर्धेन्द्रव्यावृत्तिः प्रदर्शिता, तदेतदग्रिमे प्रकरणे व्याख्यास्यते । परिमण्डलस्य च तच्छरीरं त्रेधा विभक्तमाह—**अभयं सामन्तं पारावतम् ।** पूर्वस्मिन् कार्यब्रह्मप्रकरणे यत् प्रतिष्ठा, उक्थम्, सामेति त्रैविध्यमुक्तम्, तदेव किञ्चिद्वैलक्षण्येनेहाभयसामन्तपारावतशब्दैः क्रमेण निर्दिश्यते । तत्रोक्तान्येव लक्षणानीह द्वये संगमनीयानि । तृतीयन्तु किञ्चिद् विलक्षणम् ।

अभयनामकस्य नभ्यप्राणस्य द्वैविध्यमाह—**सवीर्यो वा क्वचिन्निर्वीर्यो वा ।** पञ्चानामक्षरकलानां क्रमेण वेद-यज्ञ-प्रजा-लोक-धर्माख्याः पञ्च विवर्ता भवन्तीति व्याख्यातं विज्ञानविद्युदादिषु ग्रन्थान्तरेषु, विवृतं च तदेतदुपोद्घातेऽस्माभिः । तत्र सोमस्य विवर्त्ता ये धर्माः, त एव वीर्याणीत्युच्यन्ते । तानि यत्र नभ्यप्राणे प्राचुर्येण समवयन्ति, स सवीर्यः, यत्र तु अत्यल्पं समवयन्ति, स निर्वीर्य इति ।

तस्य वीर्यस्य त्रैविध्यमाह—**ब्रह्म, क्षत्रं, विडिति ।**

---

भाषाटीका

मण्डल रूप होता है। और यह गोल मण्डल रूप उसका शरीर स्वभावतः तीन रूपों में विभक्त होता है, वे रूप—अभय, सामन्त और पारावत नामों से व्यवहृत होते हैं। (पूर्व प्रकरण में जो प्रतिष्ठा, उक्थ और साम ये प्राण के तीन रूप बताये गये थे—वे ही कुछ विलक्षणता के साथ पिण्ड में स्थित अभय, सामन्त और पारावत नाम से कहे गये हैं।) इनमें मध्य के नाभि 'केन्द्र' में अभय प्राण रहता है, इसमें श्रुति का प्रमाण दिया गया है कि 'मध्य ही नाभि है'। 'वह मध्य ही 'अभय' स्थान है'। यह मध्य का अभय प्राण—सवीर्य अथवा निर्वीर्य रूप से दो प्रकार का होता है। वीर्य तीन प्रकार का है, 'ब्रह्म, क्षत्र और विट्' ये इन तीन वीर्यों के नाम हैं। (यह वीर्य अक्षर पुरुष की पञ्चम कला सोम का ही परिणत रूप है—यह बात अन्य ग्रन्थों में स्पष्ट की गई है।)

( आत्मनो-वीर्यत्रयम् । )

(३) तत्रैतदात्मनो मनोऽवच्छेदेन ज्ञानानामुत्थानप्रतिबन्धका धर्म्मा उपसन्ना ज्ञानव्याघातः पाप्मा । क्रियोत्थानप्रतिबन्धका धर्माः प्राणावच्छेदेनोपसन्नाः क्रियाव्याघातः पाप्मा । अर्थोपलब्धि-प्रतिबन्धका धर्मा वागवच्छेदेनोपसन्ना अर्थव्याघातः पाप्मा । तेषां चायमप्रतिबन्धो वीर्यम् । तत् त्रिविधम्—ब्रह्म, क्षत्रम्, विडिति ।

---

संस्कृतव्याख्या

वीर्याणां स्वरूप-माह—तत्रैतदात्मनः । वाङ्मयः प्राणमयो मनोमय आत्मा व्यावाहरिकोजगच्चक्रनिर्वाहकः प्राग् व्याख्यातः । तत्र मनो ज्ञानस्योपादानम्, प्राणःक्रियायाः, वाक् तु अर्थानाम् । तेषां ज्ञानादीनां मनआदिषु स्वाभाविकी-मुत्पत्तिं किञ्चिद्विजातीयं बलं यदा कदा च निरुणद्धि, तत् 'प्रतिबन्धकः' 'पाप्मा' इत्युच्यते । तं तु प्रतिबन्धकं निराकृत्य यद्बलं ज्ञानादीनां मन-आदिषूत्पत्तेरनुकूलतामाचरति, तत्सोमपरिणतिभूतं 'वीर्यम्' इत्युच्यत इत्यर्थः । मनआद्यधिष्ठानभेदेनैव वीर्यस्यास्य त्रैविध्यमाह—यन्मनोऽवच्छेदेन कार्यं करोति, तत्र ज्ञानरूपतापरिणतेः प्रतिबन्धकं निराकरोति, तद् ब्रह्मवीर्यमित्यादि मूले त्रिविधानां वीर्याणां कार्याणि विवृतानि । निराकृते च प्रतिबन्धे ज्ञानादिसहचराणि ब्रह्मवर्चसादीनि बलानि तत्तदात्मन्युत्पद्यन्त इत्यपि मूल एव स्पष्टीकृतम् ।

---

भाषाटीका

(३) यह पहले कहा जा चुका है कि—मन संपूर्ण ज्ञानों का, प्राण सब क्रियाओं का और वाक् रूप सब पदार्थों का उत्पादक है । बल के अनन्त भेद हैं, उनमें कुछ विरोधी बल ऐसे भी होते हैं, जो मन, प्राण, वाक् में उत्पन्न होने वाले ज्ञान आदि का प्रतिबन्ध करते हैं, अर्थात् उत्पन्न नहीं होने देते । उन बलों को पाप्मा अर्थात् 'पाप' कहते हैं । मनोमय, प्राणमय—और वाङ्मय त्रिरूप आत्मा में, मन भाग में उठनेवाले ज्ञान के प्रतिबन्धक धर्म ज्ञान व्याघातक पाप कहे जाते हैं । इस ही प्रकार प्राणों में उत्थित होने वाली क्रियाशक्ति को रोकने वाले प्राण में प्राप्त विपरीत धर्म क्रियाव्याघातक पाप कहाते हैं, और वाक् में उत्पन्न होने वाली अर्थ साधन-रूपता में अवरोध करने वाले, वाक् में प्राप्त विपरीत धर्म अर्थ व्याघातक पाप कहे जाते हैं । इन तीनों पापरूप बलों को हटाकर जो बलरूप धर्म ज्ञान, क्रिया एवं अर्थों की उत्पत्ति में सहायक होते हैं—उनको वीर्य कहते हैं । ये वीर्य ब्रह्म, क्षत्र और विट् तीन जाति के हैं ।

**(४) येनात्मनि दिव्यभावः संपद्यते, तदात्मनि मनोऽवच्छेदेन ज्ञानोदर्कोदयाप्रतिबन्धो ब्रह्मवीर्यम् । ततोऽस्मिन् ब्रह्मवर्चसं तेजः, आकारः, तपः, विद्या, बुद्धिरित्येतानि बलानि संभवन्ति । अथ येन वीरभावः, तदात्मनि प्राणावच्छेदेन क्रियोदर्कोदयाप्रतिबन्धः क्षत्रवीर्यम् । ततोऽस्मिन् ओजः, वाजस्तेजः, आकारः, ऐश्वर्य-पराक्रमोत्साह-प्रतापा इत्येतानि बलानि संभवन्ति । अथ**

---

संस्कृतव्याख्या

अत्र ब्रह्मवीर्येण दिव्यभावः—देवत्वप्राप्तियोग्यता, क्षत्रवीर्येण वीरभावः—वीरव्यवहारयोग्यता, विड्वीर्येण तु पशुभावः—पशुसंग्रहयोग्यतेति त्रयो भावा उक्ताः । सुवर्णरत्नादिकं सर्वं पशुपदेनोच्यत इत्यग्रिमे पशुप्रकरणे स्पष्टीक्रियेत । त्रिभ्यश्च वीर्येभ्यो जायमानानां तेजसां नामान्यपि पृथक् पृथगुक्तानि—ब्रह्मवीर्येण ब्रह्मवर्चसं नाम तेजः, क्षत्रवीर्येण ओजो वाज इति नामभ्यां ख्यातं तेजः, विड्वीर्येण तु द्युम्नपदाभिधेयं तेज इति ।

'आकारः' इति त्रयाणामपि वीर्याणां जन्येषु धर्मेष्वभिदधता ग्रन्थकृता यत्र यत्र यद्वीर्यप्राधान्यम्, तत्रतत्कृतमाकारवैलक्षण्यमपि भवतीति सूचितम्, यदेतद्विदन्त्यनुभवशीला विवेचकाः । आधुनिका वैज्ञानिका अपि च मनुष्याणां रुधिरेषु चतुर्धा वैलक्षण्यमुद्घोषयन्तस्तदिदं द्रढयन्ति ।

अन्वर्था चैता वीर्याणां संज्ञाः—ब्रह्मशब्दो बृहिधातोः, तस्य च बृंहणमर्थः । बृंहणं नाम स्वयमक्षीणस्य कार्योत्पादनम् । मनसि वीर्यं तथाविधमेव, स्वयमंशतोऽपि क्षयमप्राप्नुवत एव मनसो ज्ञानादिजननात् । तस्मान्मनोवीर्येऽन्वर्थको ब्रह्मशब्दः । प्राणे च यद्वीर्यं पराक्रमरूपं तदेव क्षतत्राणकर्तृ—विपद्यमानानां परेषां रक्षकमिति तत्र क्षत्रशब्दः सर्वथा सुप्रयुक्त एव । विडिति 'विश्' शब्दस्य प्रथमान्तम्, 'विश्' शब्दश्चायं विश् धातोर्निष्पन्नः । यदन्यस्मिन् विशति—अन्याधारेण तिष्ठति रक्षणार्थं

---

भाषाटीका

(४) जिसके द्वारा आत्मा में दिव्य भाव बनता है, आत्मा के मन भाग में होने वाले ज्ञान रूप उदर्क अर्थात् परिणाम, के उदय अर्थात् विकास का जो अप्रतिबन्धक—प्रतिबन्ध को हटाने वाला है, वह वीर्य ब्रह्मवीर्य कहा जाता है । जहाँ यह वीर्य प्रचुर मात्रा में रहता है, वहाँ इस वीर्य से 'ब्रह्मवर्चस' नामक तेज, उसके अनुकूल विलक्षण आकार, और तप, विद्या, बुद्धि आदि बल उत्पन्न होते हैं । जिसके द्वारा आत्मा में वीरभाव बनता है, वह आत्मा के प्राण भाग में होनेवाले

येन पशुभावः, तदात्मनि वागवच्छेदेन धर्मोदर्कोदयाप्रतिबन्धो विड्वीर्यम् । ततोऽस्मिन् द्युम्नं तेजः, आकारः, वाणिज्यम्, धनमित्येतानि बलानि संभवन्ति । अथ यत्र शारीरबलमात्रमुपपद्यते, नात्मबलानामन्यतमसिद्धिः, तद् वीर्यं—शूद्ररूपम् । ततो हि स आत्मा आशु शीघ्रमुत्कर्षेण द्रवति–क्लिन्नो भवति विषादति,

संस्कृतव्याख्या

परमाश्रयति, तद् बलं विडिति । वाग्बलं हि संपद्रूपं परमाश्रित्यैव तिष्ठति, संपत्तिमतामेव रक्षणापेक्षेति स्थानेऽत्र विट्शब्दः प्रयुक्तः । अत्रैव प्रवेशनोपवेशनादयोऽर्था अप्यन्तर्भवन्ति, तेन प्रविशन्ति संपदो यत्र, उपविशति–स्थानमेकं समाश्रयतीत्याद्या अपि धर्माः शब्दवाच्या अनुसन्धेयाः ।

एतान्येव वीर्याणि खल्वस्माकं वर्णव्यवस्थाया निदानानि । ब्रह्मवीर्यप्रधानो ब्रह्म इति ब्राह्मण इति च व्यपदिश्यते । क्षत्रवीर्यप्रधानः क्षत्र इति क्षत्रिय इति च, विड्वीर्यप्रधानस्तु 'विड्' इति वैश्य इति च । यत्र तु नैतेष्वात्मबलेषु किमपि प्रचुरम्, स शारीरबलमात्रप्रधानः 'शूद्र' इति व्यपदिष्टो विज्ञेयः । शूद्र इति पदम् 'शु' 'उद्' 'द्र' इति पदत्रयांशघटितम् । शीघ्रार्थकस्य आशुपदस्यादिलोपे शिष्यते 'शु' इति, 'उद्' इत्युपसर्गः, द्रवणार्थकाद् 'द्रु' धातोः, अथवा कुत्सितगत्यर्थकाद्, निद्रार्थकाद्वा द्राधातोर्निष्पन्नं 'द्र' इति । त्रयाणां मेलने उपसर्ग 'द्'कारस्य पृषोदरादित्वाल्लोपे च शूद्रशब्दो निरुक्तः श्रुत्यादिषु । तदेव निर्वचनमत्र ग्रन्थेऽप्युक्तम् । मध्यप्राणस्य द्वैविध्यमभिदधता यो निर्वीर्यो मध्यप्राणः प्रागुक्तः, स एवायं शूद्रः प्रतिपत्तव्यः । अत्र निर्वीर्यत्वं नाम अल्पवीर्यत्वमित्यग्रे वक्ष्यते । अयं वैज्ञानिको वर्णत्रिभागः

भाषाटीका

क्रिया रूप परिणाम के विकास का अप्रतिबन्धक (प्रतिबन्ध को हटाने वाला) क्षत्र वीर्य है । इस वीर्य की प्रधानता से ओज और वाज नाम के तेज, इस बल के अनुकूल विलक्षण आकार और ऐश्वर्य (हुकूमत), पराक्रम, उत्साह, प्रताप आदि बल उत्पन्न होते हैं । इस ही प्रकार जिसके द्वारा आत्मा में पशुभाव बनता है, वह आत्मा के 'वाक्' भाग में आत्मा के बाह्य धर्म बननेवाले संपत्ति रूप पदार्थों के विकास का अप्रतिबन्धक वीर्य, विड्वीर्य नाम से कहा जाता है । विड्वीर्य की अधिकता से द्युम्न नामक तेज उसके अनुरूप आकार और वाणिज्य, धन आदि बल उत्पन्न होते हैं ।

[स्मरण रहे कि मध्यप्राण दो प्रकार का कहा गया है—सवीर्य और

अपि चातितरां निद्राति-शेते, निष्कर्मालस्यं च धत्ते, तेनायं शूद्रो

---

संस्कृतव्याख्या

सर्वेष्वेव पदार्थेषु जागर्ति । तत एव सोमादिवल्लीषु, रत्न-धात्वादिषु, पशुपक्षिप्रभृतिषु, तारासु, देवपित्रादिषु च सर्वत्रैव वर्णविभागस्तत्तच्छास्त्रेषूपलभ्यते । इममेव वैज्ञानिकं विभागमुपजीव्य भारतीयानां सामाजिकी व्यवस्थापि चातुर्वर्ण्याधारेणैव प्रवृत्ता । विज्ञानदृष्ट्या सर्वस्यापि भूमण्डलस्य मनुष्येषु वर्तत एव वर्णविभागः, यदा पश्वादिषु तिर्यग्योनिषु जडेष्वपि चाभ्युपगम्यते तदा का नाम कथा देशान्तरीयाणां मनुष्याणाम् !!

परमन्यदेशेषु वैज्ञानिकवीर्यपरिचयाभावात्समाजे वर्णव्यवस्था दृढं न प्रवृत्ता। भारतीयास्तु विज्ञानपारंगतास्तामिमां व्यवस्थां समाजेऽपि दृढं न्ययमयन्निस्येव भेदः । कार्यविभागलक्षणो विद्यावत्-सैनिक-व्यापारि-श्रमिकादिवर्गविभागस्तु अस्त्यन्यत्रापि, किन्तु 'कारणगुणाः कार्यगुणानारभन्ते' इति प्रकृतिनियममाद्रियमाणा भारतीया ऋषयो ब्रह्मवीर्यानुविद्धशुक्रशोणिताभ्यामुत्पद्यमाने पुत्रादिशरीरेऽपि ब्रह्मवीर्यानुवेधं दृढं निश्चिन्वन्तस्तामेतां व्यवस्थां जन्माधारेणैव स्थापितवन्तः । गुणकर्मादिकन्तु तत्तद्वीर्यस्याभिव्यञ्जकमात्रम्. न तु वर्णोत्पत्तौ हेतुभूतम् । तत्तद्वर्णत्वे हेतुस्तु कुलक्रमेणानुवर्तमानं तत्तद्वीर्यमेवेति निर्विवादम् । तत एव वीर्यबोधकैः 'ब्रह्मक्षत्रविट्' शब्दैरपि वर्णानां व्यपदेशः, अपत्यप्रत्ययान्तैरपि च तैः 'ब्राह्मणक्षत्रियवैश्य' रूपतां गतैः शब्दैस्तथैव व्यपदेशः । सोऽयमपत्यप्रत्ययान्तशब्दव्यपदेश एव जन्मसिद्धां वर्णव्यवस्थां सुतरां द्रढयति ।

---

भाषाटीका

निर्वीर्य । उनमें सवीर्य के तीन भेद बताये जा चुके, अब निर्वीर्य प्राण को 'शूद्र' रूप बताया जाता है । यहाँ निर्वीर्य का अर्थ यह न समझना कि उसमें कोई वीर्य है ही नहीं, किन्तु कोई भी वीर्य प्रचुर मात्रा में नहीं है—यह अभिप्राय है । यह आगे मूलग्रन्थ में स्पष्ट होगा । ]

इन तीनों के अतिरिक्त जहाँ शरीर मात्र का बल रहता है, उपरोक्त आत्मा के बलों में से कोई विशेष मात्रा में नहीं रहता—वह केवल शरीर का वीर्य कहा जाता है । इस वीर्य से संबद्ध आत्मा आशु-अति शीघ्र द्रुत हो जाता है, अर्थात स्थिरता नहीं रख सकता । उच्च भावना से बहुत शीघ्र गिर जाता है, दृढता न रहने से पिघल सा जाता है, क्लेश का अनुभव करता है, अथवा उलटी चाल चलता है, सोता रहता है, निकम्मेपन और आलस्य को धारण किये रहता है—

नाम। एतावदात्मनो वीर्यम्। यावद्वीर्यं तावद्वित्तम्, यावद्वित्तं

---

संस्कृतव्याख्या

इमानि च सर्वाण्येव वीर्याणि मात्रया सर्वत्रानुगच्छन्ति, परं प्राधान्येन व्यपदेशा भवन्तीति न्यायेन प्रधानं वीर्यमालम्ब्य तत्तद्वर्णव्यपदेश इति वदत्यग्रे ग्रन्थकृत्। ततश्च केनचिद्धेतुना गुणभूते बलेऽपि क्वचित्प्राधान्यमाप्ते गुणकर्मादिलक्षणलांकर्यदर्शनेऽपि कारणगुणाः कार्यगुणानारभन्त इत्यत्र नियमं प्राधान्येनावलम्बमाना सामाजिकी व्यवस्थाऽस्माकं न च्यवते। तत एव भीष्मादिषूत्कटेऽपि मनोविकासे न ब्राह्मणव्यपदेशप्रवृत्तिः, न वा परशुरामद्रोणादिषूत्कटेऽपि वीरभावे क्षत्रशब्दप्रवृत्तिः। विश्वामित्रादिषु ब्राह्मणव्यपदेशप्रवृत्तिस्तु वीर्यमूलिकैव, तदुत्पत्तिहेतुभूते चरौ तपोबलेन ऋचीक-

---

भाषाटीका

इसीलिये इसका नाम शूद्र है। शूद्र शब्द 'शु' 'उत्' और 'द्र' से बना है। शु-आशु-शीघ्र, उत्-उत्कर्ष से—विशेषता से, द्र-द्रु-पिघलना, वा 'द्रा' उलटी चाल चलना, वा सोना यही इसका शब्दार्थ है।

[ इस ही प्रकार पूर्वोक्त तीनों शब्द भी अनुगत अर्थ रखते हैं। ब्रह्म शब्द का अर्थ है बृंहण। जिस की व्याख्या की जा चुकी है कि कारण की क्षति ( विनाश ) के विना ही वृद्धि होना। मन में जो ज्ञानादि की सृष्टि होती है, उस में यही बात है। मन स्वयं अक्षीण रहता हुआ ही ज्ञानादिकों उत्पन्न करता है। प्राण आदि में ऐसा नहीं होता। पराक्रम करने पर प्राण की आंशिक क्षति होती है, प्राण क्षीण होता है। वाक् भी जब दूसरे रूप में परिणत होती है, पहला रूप बिगड़ जाता है—जैसा बीज से अङ्कुर पैदा होने पर बीज नहीं रहता। इत्यादि। अस्तु। मन ज्ञानादिकों उत्पन्न करता हुआ भी स्वयं क्षीण नहीं होता, इसलिये उसके वीर्य को 'ब्रह्म' कहना युक्तियुक्त है। क्षत्र का अर्थ है दूसरे को क्षत अर्थात् आपत्ति से बचाना। यह बात प्राण के वीर्य से ही उत्पन्न होती है। इस ही तरह विट् शब्द विश् धातु से बना है—उसका अर्थ है दूसरे में प्रविष्ट होना—अर्थात् अन्य वीर्य के आधार से रहना। संपत्तिवालों को रक्षा के लिये पराश्रित रहना पड़ता है। दूसरा अर्थ है उपवेशन अर्थात् एक स्थान से संबन्ध, वह भी संपत्तिवाले का होता ही है। [ तात्पर्य यह है कि भिन्न भिन्न वीर्य से भिन्न भिन्न प्रकार का तेज होता है—जिसके पृथक् पृथक नाम कहे गये हैं, आकार ( स्वरूप ) में भी विलक्षणता होती है, प्रवृत्ति भी भिन्न भिन्न प्रकार की होती है, और सहचारी धर्म भी विलक्षण उत्पन्न होते हैं, यह आकार की विलक्षणता अनुभवशील पुरुषों द्वारा पहचानी जाती है। आधुनिक वैज्ञानिकों ने भी सिद्ध किया है कि प्राणियों के विशेष कर मनुष्यों के रुधिर में

तावदात्मा ।

(५) तत्र ब्रह्मवीर्यत्वे दिव्यभावोपपन्नोऽयमात्मा प्रशान्तवृत्तिर्धृतिमान् शान्तिप्रधानो ज्ञानशीलः संपद्यते । क्षत्रवीर्यत्वे

---

संस्कृतव्याख्या

महर्षिणा ब्रह्मवीर्यस्याहितत्वादिति स्पष्टं पुराणेषु । स्वस्वाचारपरित्यागपूर्वकं तत्तद्वीर्याणामत्यन्तविरुद्धेष्वाहारविहाराद्याचारेषु परिशील्यमानेषु तु तस्य तस्य वीर्यस्य दुरतिशयेन भस्मनाग्नेरिवात्यन्तमाच्छन्नतायां न तदनुकूलकार्याणां संभव इति पातित्यं निरूपयन्त्येव शास्त्राणीति सम्यगालोच्यम् ।

'मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरुद्वह !
यस्तून्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ।'
(श्री भाग. ३ स्क. ६ अ. ३० श्लो.)

इत्यादिना श्रीमद्भागवते पूर्वं ब्रह्मक्षत्रादिवीर्योत्पत्तिमुक्त्वा तदाधारेणैव मनुष्येषु ब्राह्मणादिव्यवस्था स्पष्टीकृता । बृहदारण्यकोपनिषदि तु पूर्वं ब्रह्मवीर्यम्, तस्मादेव क्रमेणोत्पन्नानि क्षत्रादिवीर्याणि, तेषां विकासः पूर्वं देवेषु, तत्तद्देवसंबन्धाच्च तदनु व्यवस्था मनुष्येष्विति 'ब्रह्म वा इदमग्र आसीद्' (अ. १ ब्रा. ४ क. ११) इत्यादिना स्पष्टीकृतम् । ब्राह्मणादीनां मुखबाहूरुपद्भ्य उत्पत्तिरिति तु रहस्यमप्रकृतत्वान्नेह प्रतन्यते । वर्णव्यवस्थाप्रतिपादनप्रसङ्ग एव ग्रन्थान्तरे तदालोकनीयमिति ।

एषां वीर्याणां प्रभावेण मनुष्येषु यादृशानि बाह्यलक्षणानि जायन्ते, यैस्तत्तद्वीर्यप्राधान्यं शक्यमनुमातुम्, तानि लक्षणान्यपि व्याचष्टे—तत्र ब्रह्मवीर्यत्वे इत्यादिना । स्पष्टमिदं न व्याख्यासापेक्षम् ।

---

भाषाटीका

चार प्रकार के भेद होते हैं । उन भेदों के नाम उनने अपनी परिभाषा से 'ओ' 'बो' आदि रक्खे हैं । यह सब भेद इन ही वीर्यों का परिणाम समझना चाहिये ]।

इस प्रकार ये चारों वीर्य आत्मा से संबद्ध कहे गये हैं । जहां तक वीर्य की सत्ता है, अर्थात् जितना वीर्य जहां हो, वहां तक—उस के अनुकूल ही वित्त अर्थात् संपत्ति भी होती है ( विद्या, बल—आदि भी संपत्ति ही हैं ) और जहां तक वित्त ( संपत्ति ) का प्रसार है—वहां तक आत्मा भी व्यापक रहता है ।

(५) इन वीर्यों का मनुष्यों में परिणाम बताया जाता है कि उपरोक्त ब्रह्म, क्षत्र, विड् वीर्यों में से ब्रह्मवीर्य-संपन्न आत्मा, दिव्य-अच्छे—उदार भावों से युक्त, संतोष वृत्तिवाला, धैर्य-शाली, शान्तिप्रधान, एवं ज्ञानशील ( विद्याव्यसनी ) होता है ।

वीरभावतया स्वतन्त्रवृत्तिर्महोत्साहः क्षोभप्रधानः पराक्रमणशीलः संपद्यते । विड्वीर्यत्वे पशुभावतयाऽन्यानुरोधी परतन्त्रवृत्ति-

---

भाषाटीका

क्षत्रवीर्य से संपन्न आत्मा वीरभाववाला होने के कारण स्वतन्त्रता की वृत्ति रखने वाला, महा उत्साही, क्षोभप्रधान एवं स्वभावतः पराक्रमी ( हिम्मतवाला ) होता है। इस ही तरह विड्वीर्य से संपन्न आत्मा पशुभाव होने के कारण, पदार्थ-संग्रहशील, परतन्त्रवृत्ति ( दूसरे की इच्छानुसार चलनेवाला ), दूसरे के आधार की इच्छा रखनेवाला, दूसरों के काम आनेवाला बनता है।

ये वीर्यसंपन्न आत्मा के रूप हैं, निर्वीर्य आत्मा तो मृतप्राय पड़ा रहता है, दूसरों से तिरस्कृत होता है, छोटा सा एवं च अधीर होने के कारण शीघ्र विशेष रूपसे पिघल जानेवाला—गिर जानेवाला, होता है।

[ स्मरण रहे कि ये वीर्य सृष्टि की आदि में उत्पन्न हुए हैं, और इन के आधार पर ही हमारी यह वर्णव्यवस्था प्रचलित है। ब्रह्मवीर्य जिस में प्रधान है, वह ब्रह्म अथवा ब्राह्मण कहलाता है। क्षत्रवीर्य प्रधान क्षत्र अथवा क्षत्रिय, और विड्वीर्य प्रधान विड् अथवा वैश्य कहलाता है। आगे कहा जाता है कि यद्यपि सोम की सर्वत्र व्यापकता रहने के कारण, सोम के परिणामरूप ये तीनों ही वीर्य सब जगह रहते हैं, किन्तु भिन्न-भिन्न वर्ग में किसी एक की अधिकता के कारण वह प्रधान हो जाता है, और प्रधान के नाम से ही उस वर्ग वा जाति का नाम होता है। जहां आत्मा के इन बलों में से कोई भी अधिक मात्रा में नहीं रहता, केवल शारीरिक बल की ही प्रधानता होती है, वह शूद्र कहा जाता है।

यह वैज्ञानिक वर्णविभाग सब जगत् में व्यापक है, अर्थात् संसार के सब पदार्थों में—सोमलता आदि लताओं में, तथा रत्न, धातु आदि अचल पदार्थों में, पशु-पक्षियों में, नक्षत्रों में, देव, पितरों में सब जगह वर्णविभाग तत्तत् शास्त्रों में वर्णित है। इस वैज्ञानिक विभाग को आधार मान कर ही भारतवासियों की सामाजिक चातुर्वर्ण्य-व्यवस्था भी प्रचलित है। विज्ञान की दृष्टि से तो संपूर्ण भू-मण्डल के मनुष्यों में वर्णविभाग रहता है, जब अचेतन तथा पशुपक्षी आदि योनियों में भी वर्णविभाग है—तब मानव-समुदाय में सुतरां सिद्ध ही है। किन्तु, अन्य देशों में इस विज्ञान का परिचय न होने के कारण सामाजिक वर्ण-व्यवस्था दृढता से नहीं चल पाई। विज्ञान के पारंगत भारतीयों ने इस व्यवस्था से समाज का ग्रथन दृढ कर लिया—यह ही भारत की अन्य देशों से विशेषता है। वैसे तो कार्यविभाग के कारण वर्गविभाग सब ही देशों में मिलता है, विद्या-व्यवसायी, सैनिक, व्यापारी और मजदूरों के वर्ग सर्वत्र ही रहते हैं, किन्तु कारण-गत गुण-धर्मों से ही कार्यगत गुण-धर्म बनते हैं-इस प्रकृति के सर्वसाधारण नियम को जानने तथा माननेवाले भारतीय ऋषियोंने—ब्रह्मवीर्यसंपन्न शुक्रशोणित से

राश्रयसापेक्षः परार्थव्यवसायशीलः संपद्यते । एतानि सवीर्याणां रूपाणि । निर्वीर्यस्तु मृतप्रायभावोपपन्न आत्मा पराभिभवनीयो लघुत्वादधीरत्वाच्चाशूद्द्रवणशीलो भवति ।

(६) यद्यपि सर्व एवात्मा मनःप्राणवाङ्मयत्वात् त्रिवीर्य

---

संस्कृतव्याख्या

यद्यपि सर्व एवात्मा । वाक्प्राणमनःसु वीर्याणां स्थितिरुक्ता, न च

---

भाषाटीका

उत्पन्न हुई संतान में भी ब्रह्मवीर्य ही रहेगा—यह निश्चय कर इस व्यवस्था को जन्म के आधार पर ही स्वीकार किया है । गुण-कर्म आदि तो उस वीर्य के परिचायक मात्र हैं, वर्ण की उत्पत्ति में कारण नहीं । तत्तद् वर्णविभाग में कारणभूत तो, कुलपरंपरागत 'वीर्य' ही हैं, यह निर्विवाद सत्य है । यह ही कारण है कि—ब्रह्म, क्षत्र, विट्—शब्दों से, तथा इनसे अपत्यप्रत्यय ( संतान-सूचक ) होने पर बने ब्राह्मण, क्षत्रिय, वैश्य शब्दों से भी समानरूप से ब्राह्मण आदि जातियों का परिचय होता है । यह जो सन्तान-सूचक प्रत्ययान्त शब्दों से जातियों का व्यवहार है—यह ही जन्मसिद्ध वर्ण-व्यवस्था को स्वभावतः दृढ बता रहा है । कहा जा चुका है कि कुछ मात्रा में सब में ही सब वीर्य रहते हैं, एक प्रधान और अन्य अप्रधान ( गौण ) भाव से रहा करते हैं । तब कहीं-कहीं किसी विशेष कारण से गौणवीर्य के प्रधान हो जानेपर भी उपरोक्त ( कारण-गुण कार्यगुण के आरंभक हैं ) नियम के आधार पर चलनेवाली हमारी वर्णव्यवस्था विचलित नहीं होती, यह ही कारण है कि भीष्म आदि में प्रबल ज्ञान का विकास होने पर भी ब्राह्मणरूपता का, तथा परशुराम, द्रोणाचार्य आदि में पूर्ण वीरभाव जागरित रहने पर भी क्षत्रियरूपता का व्यवहार नहीं हुआ । विश्वामित्र को जो ब्राह्मणत्व प्राप्त हुआ-वह तो तपस्या तथा योगद्वारा स्थापित वीर्य के ही आधार पर है । वे जिस चरु के द्वारा उत्पन्न हुए थे, ऋचीक महर्षि ने तपस्याद्वारा उस चरु में ब्रह्म-वीर्य का आधान किया था, यह आख्यान पुराणों में स्पष्ट है । कुलपरंपरागत-वीर्यप्रधान व्यक्तियों में जब अत्यन्त विरुद्ध आहार-विहार आदि प्रवृत्त हो जाते हैं, तो जैसे बहुत से राख के ढेर में नीचे अग्नि दब जाती है, वैसे ही ये वीर्य भी आगत मलों से आच्छन्न हो जाते हैं । तब शुद्ध वीर्यों से जो महान् कार्य संभव हो सकते हैं, वे इनसे नहीं हो पाते, ऐसी दशा में उन व्यक्तियों को जाति से पतित मान लिया जाता है । इसका विचारपूर्वक आलोचन करना चाहिये । यहां अप्रस्तुत होने से इस विषय का विशेष विस्तार नहीं किया जाता ।

(६) सब ही आत्मा मनोमय, प्राणमय और वाङ्मय हैं, इस कारण इन

**एवास्ति, तथापि वैशेष्यानुरोधिनि व्यपदेशो पृथगिव वीर्यसमा-**

---

संस्कृतव्याख्या

**कश्चिदप्यात्मा वाक्प्राणमनसामेकेनापि विरहितः, त्रिरूप एव सर्वोऽप्यात्मेत्याख्यातत्वात् । तथा च त्रयाणां धर्मरूपाणि त्रिविधान्यपि वीर्याणि सर्वत्रैव सिद्धानि, ततश्च कथमेकैकेन वीर्येण ब्राह्मणत्वादिप्रसिद्धिरिति शङ्का 'वैशेष्यात्तु तद्वादः' इति समाधीयते । यत्र यस्य वीर्यस्याधिक्यम्, तत्र प्राधान्यं प्राप्तेन तेनैव वीर्यहेतुका समाख्या भवतीति पृथक् पृथक् समाख्याः प्रवर्तन्त इति भावः । न्यूनाधिकतारतम्यन्तु बलस्य स्वभावसिद्धम्, पूर्वपूर्वकर्मजनितसंस्कारकारितं च तदार्यशास्त्रेऽभिमन्यत एवेति न पर्यनुयोज्यतामर्हति ।**

---

भाषाटीका

तीनों ( मन, प्राण और वाक् ) के उक्त तीनों वीर्य भी यद्यपि सब में ही रहते हैं, किन्तु विशेषता के कारण व्यवहार हुआ करता है, इसलिये जो वीर्य जहाँ विशेष होने के कारण प्रधान हो गया है, उस ही के नाम से उस आत्माका नाम हो जाता है । इस लिये यह व्यावहारिक आत्मा चार प्रकार का सिद्ध हुआ—ब्राह्मण, क्षत्रिय, वैश्य और शूद्र ।

[ यहां ब्राह्मण, क्षत्रिय आदि भेद आत्मा के हैं–यह स्पष्ट कहा गया। यह स्मरण रहे कि आरम्भ में ही मध्य केन्द्र में रहने वाले वाक्प्राणमनोमय, व्यावहारिक, इन्द्र-नामक प्राणरूप आत्मा में ही वीर्यों का सन्निवेश बताया गया है। इसलिये इस इन्द्रप्राण रूप व्यावहारिक आत्मा के ही ब्राह्मण आदि चारों भेद होते हैं–यह स्पष्ट सिद्ध है। आरम्भ में इस ही आत्मा को 'सवीर्य' और 'निर्वीर्य' रूप में दो प्रकार का कहा था, तदनुसार आदि के ब्राह्मण आदि तीन भेद सवीर्य के हुए हैं, और चौथा भेद शूद्र निर्वीर्य कहा गया। निर्वीर्य अर्थात् अल्पवीर्य—यह पहले कहा जा चुका है।

वर्ण-व्यवस्था में कुछ लोग यह प्रश्न उठाया करते हैं कि–ये ब्राह्मणत्व आदि धर्म शरीर के धर्म हैं, अथवा आत्मा के ? अर्थात् शरीर को ब्राह्मण, क्षत्रिय आदि कहा जाय, अथवा आत्मा को ? यदि शरीर को ब्राह्मण आदि माना जायगा, तब तो ब्राह्मण आदि के रूप में किये गये संस्कारों का दूसरे जन्म में फल न हो सकेगा,–क्यों कि शरीर तो यहां ही समाप्त हो जाता है, जब ब्राह्मण नष्ट हो गया–तो ब्राह्मण के संस्कार किस आधार से रहेंगे ? किन्तु शास्त्र तो ऐसे संस्कारों की जन्मान्तर में अनुवृत्ति मानता है। शास्त्रों में धर्मनिरत ब्राह्मण, क्षत्रिय आदि को

ख्या क्रियते । तथा चायमात्मा चतुर्विधो व्यवतिष्ठते—ब्राह्मणः,

---

संस्कृतव्याख्या

**तथा चायमात्मा ।** वाक्प्राणमनोमये व्यावहारिके इन्द्राख्यमध्यप्राणरूप आत्मन्येव वीर्याणां संनिवेशो व्याख्यातः, तस्मात्तस्यैव भेदचतुष्टयमिदं विज्ञेयम् । तत्र त्रिविधः स आत्मा सवीर्य उच्यते, चतुर्थस्तु निर्वीर्यः । निर्वीर्यो नामाल्पवीर्य इत्युक्तमेव प्राक् । तथा च ब्राह्मणत्वादिकं किं शरीरनिष्ठम्, उत आत्मनिष्ठम् ? शरीरनिष्ठत्वे जन्मान्तरे तज्जनितसंस्काराणामनुवृत्ति-र्दुर्लभा, शरीरस्येहैव विनाशात् । एवं च ब्राह्मणानामेवंविधा लोकाः, क्षत्रियाणामेवंविधाः—इत्यादिशास्त्रव्याकोपप्रसङ्गः । शरीरस्य बाल्यकौमार-यौवनादिभेदैर्भिन्नतयात्रैव वर्णपरिवर्तनापत्तिश्च । सर्वेषामेव च देहस्य पाञ्चभौतिकतया समानत्वमिति तत्र ब्राह्मणत्वादिवैषम्यानुपपत्तिरपि । पित्रा-दीनां शरीरदाहे पुत्रादीनां ब्रह्महत्याप्रसङ्ग इत्यपि दोषो वज्रसूचिकोप-निषद्यभिहितः । आत्मनिष्ठत्वे तु एकस्मिन् जन्मनि यो ब्राह्मणः स

---

भाषाटीका

विभिन्न लोकों की प्राप्ति बताई है, वह सब निर्मूल सिद्ध हो जायगा ? दूसरी बात यह कि बाल-अवस्था, कुमार-अवस्था, जवानी आदि में शरीर बदलता रहता है, तब शरीर से संबद्ध वर्ण भी यहां ही बदलने लगेंगे, एक ही शरीर अवस्थाभेद से सब वर्णों का अभिमानी हो सकेगा । तीसरे, सब ही के शरीर तो समान रूप से पांच भूतों के बने होते हैं, तब कोई ब्राह्मण और कोई क्षत्रिय-यह कैसे संभव होगा ? सब एक ही वर्ण के होने चाहियें । इसके अतिरिक्त वज्रसूचिकोपनिषद् में यह भी दोष दिया है कि मृत पिता के शरीर को जलाने पर पुत्र को ब्रह्महत्या लग जायगी । निष्कर्ष यह निकला कि ब्राह्मणत्व आदि शरीर के धर्म नहीं हो सकते । तब यदि ये आत्मा के धर्म माने जांय, तब तो जो आज ब्राह्मण है, वह सदा ( आगे के जन्मों में भी ) ब्राह्मण ही रहना चाहिये, क्योंकि आत्मा सदा नित्य-एक रूप ही है । तब 'छान्दोग्य उपनिषद्' की पञ्चाग्निविद्या में जो यह कहा है कि—'जो प्राणी यहां उत्तम कर्मों का अनुष्ठान करते हैं-वे दूसरे जन्म में ब्राह्मण, क्षत्रिय, वैश्य आदि उत्तम योनियों में जन्म लेते हैं, और जो दुराचारी होते हैं-बुरे कर्म ही करते रहते हैं, वे मरणानन्तर दूसरे जन्म में श्वान, शूकर, चाण्डाल आदि बुरी योनि प्राप्त करते हैं—' यह सब निर्मूल सिद्ध होगा ! और यह भी देखना है कि आत्मा में ब्राह्मणत्वादि धर्म रह ही कैसे सकते हैं-जब कि श्रुति आत्मा को सर्वथा निर्धर्मक ( सब धर्मों से रहित ) कह रही है । इसलिये न शरीर ब्राह्मण हो

क्षत्रियः, वैश्यः, शूद्रश्चेति ।

संस्कृतव्याख्या

सततमेव ब्राह्मण एव स्थास्यति, आत्मनोऽनपायात् । तथा च "तद्य इह रमणीयचरणाः, अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्—ब्राह्मणयोनिं वा, क्षत्रिययोनिं वा, वैश्ययोनिं वा । अथ य इह कपूयचरणाः, अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्,—श्वयोनिं वा, सूकरयोनिं वा, चाण्डालयोनिं वा" ( छान्दोग्योप० ५प्रपा०१०ख.७क० ) इति पञ्चाग्निविद्याश्रुतेर्व्याकोपप्रसङ्गः । न चात्मनिष्ठता ब्राह्मणत्वादीनां धर्माणां संभवति, आत्मनो निर्धर्मकतायाः श्रुतिषूपपादनादित्याद्याः प्रश्ना अन्यत्र समाहिता वेदितव्याः । इन्द्रप्राणरूपव्यावहारिकात्मनिष्ठं हि ब्राह्मणत्वादिकमिह प्रतिपादितम्, सोऽयं व्यावहारिक आत्मा न निर्धर्मकः, न वा सर्वदैवापरिणामी, आहारविहाराद्याचारैस्तत्र परिणामसंभवात् । तथा च परिस्थित्या वीर्यान्तरस्य प्राचुर्यलक्षणे प्राधान्ये जन्मान्तरे वर्णान्तरतापत्तौ नास्त्यनुपपत्तिः । न चायं सत्यस्मिन् शरीरे परिवर्तयितुं शक्यते, तत्परिवृत्तौ शरीरस्यापि परिवर्तनस्यावश्यंभावित्वात्, तदधीनत्वाच्छरीरस्य । न चायं शरीरेण समं नश्यति, अमृतरूपस्य तस्य सूक्ष्म-

भाषाटीका

सकता है न आत्मा । फिर ब्राह्मण, क्षत्रिय है कौन ? इन प्रश्नों का समाधान भी यहां ही प्रसङ्गागत होगया । क्योंकि इन्द्रप्राण रूप व्यवहार चलानेवाले आत्मा में ब्राह्मणत्व आदि धर्मों की स्थिति मानी गई है । यह व्यावहारिक आत्मा निर्धर्मक ( विना धर्म का ) नहीं है । श्रुतियों में मुख्य निर्विशेष आत्मा को ही निर्धर्मक कहा गया है । और इस आत्मा में कभी परिणाम ( फेर-बदल ) न होता हो—ऐसा भी नहीं है, आहार-विहार आदि बाह्य आचरणों से इसका परिणाम होता ही रहता है । इस ही कारण तो ब्राह्मणादि वीर्यों में परस्पर न्यूनाधिकता संभव होती है । अर्थात् यद्यपि सब वीर्य सब जगह रहते हैं—किन्तु आहारादि आचारों के और यज्ञ आदि धर्मों के भेद से किसी वीर्यविशेष की प्रबलता हो जाती है । इस ही प्रबलता के आधार पर दूसरे जन्म में वर्णभेद भी हो सकता है । यह वर्णभेद एक शरीर रहते संभव नहीं होता—क्यों कि यह शरीर तो उस एक आत्मा ( इन्द्र ) के ही अधीन रहता है—वह इन्द्र आत्मा यदि बदलेगा—तो उसके आश्रित शरीर तत्काल बदल जायगा । नभ्यप्राण के परिवर्तित होने पर भी शरीर यही बना रहे—यह संभव ही नहीं । कोई भी वस्तु नभ्य प्राण के बदलते ही अपने स्वरूप से विच्युत हो जायगी—यह समझाया जा चुका है । इसलिये परिवर्तन का परिणाम दूसरा शरीर ही होगा । यह भी स्मरण रहे कि—यह इन्द्र आत्मा शरीर के साथ ही नष्ट भी नहीं हो जाता । आगे सूक्ष्म शरीर में रहने वाले इस आत्मा के—

**चन्द्रस्यात्मा ब्राह्मणः। सूर्यस्य क्षत्रियः। पृथिव्या वैश्यः। एतेषु**

---

संस्कृतव्याख्या

शरीराद्यधिष्ठातृताया अपि वक्ष्यमाणत्वात्। तस्मात् समुचिताचारस्य जन्मान्तरेऽपि तत्संस्कारोपभोगः, अत्यन्तमाचारभ्रंशे तु भस्माच्छन्नस्याग्नेरिव कार्यकरणयोग्यताभावलक्षणं पातित्यम्, जन्मान्तरे तत्तद्वीर्यपरिवर्तनं चेति सर्वं सम्यगुपपन्नम्।

चन्द्रस्यात्मा। चन्द्रमण्डलस्य मध्यगत इन्द्रप्राणो ब्रह्मवीर्यविशिष्ट इत्यर्थः। तत एव चन्द्रस्य शान्तो जनाह्लादकरः प्रकाशः। सूर्यमण्डले तु मध्यप्राणः क्षत्रवीर्यः, तत एव तत्प्रकाशे प्रखरता, असह्यता च। पृथिवीमण्डले मध्यप्राणो विड्वीर्यः, तेन संपद्रूपाणामन्नादीनामत्र प्राचुर्येणोत्पत्तिः, न च मण्डले प्रकाशः। एषु मण्डलेषु ये व्याख्यास्यमानाः पशवस्तृणौषध्यादयः सन्ति, न तदधिष्ठातरि प्राणे पृथिव्यादिमण्डलवद्विशिष्टं प्रचुरं किमपि वीर्यमस्तीति तेषां प्राणः शूद्र उच्यते। एतच्च पृथिव्यादिमण्डलापेक्षयैव निर्वीर्यत्वमुक्तम्। वस्तुगत्या तु तत्रापि मात्रया तत्तद्वीर्यप्राधान्यमस्त्येवेत्यग्रे मूल

---

भाषाटीका

अमृत रूप का वर्णन ग्रन्थकार स्वयं करनेवाले हैं। निष्कर्ष यह निकला कि ब्राह्मणत्व आदि कों इन्द्र आत्मा का धर्म मान लेने पर—उत्तम आचरण करनेवालों कों दूसरे जन्म में पूर्व संस्कारों का भोग अर्थात् उत्तमलोकप्राप्ति और पुनः उसी वर्ण वा उत्तमवर्ण में उत्पत्ति, तथा दुराचारियों का जन्मान्तर में पतन सिद्ध हो जाता है। इस जन्म में भी भस्मकी ढेरी में छुपी हुई अग्नि के समान उत्तम कार्य कर सकने की योग्यता का अभाव अर्थात् पतितावस्था हो सकती है—यह कह चुके हैं। इस प्रकार उचित रूप से सब व्यवस्था बन जाती है, और सब शङ्काओं का समाधान हो जाता है]

पूर्वोक्त ब्राह्मणादि का उदाहरण देते हैं कि—चन्द्रमण्डल का आत्मा (इस मण्डल के केन्द्र में स्थित मध्यप्राण) ब्राह्मण है। (अत एव चन्द्रमा का प्रकाश शान्त और आह्लादक होता है) तेजोमय सूर्यमण्डल का आत्मा क्षत्रिय है, (अत एव सूर्य के प्रकाश में तीव्रता है) और सब के आधारभूत पृथिवीमण्डल का आत्मा वैश्य है, (अत एव संपत्ति रूप अन्नादि पृथिवी में विशेष रूपसे उत्पन्न होते हैं—और प्रकाश नहीं होता)। और इन तीनों से उत्पन्न हुए पशुओं (तृण-औषध-शरीर आदि) का आत्मा शूद्र होता है। यह समझना चाहिये।

[यह स्मरण रहै कि मण्डलों के आत्मा की अपेक्षा पशुओं के आत्मा कों

सतां पशूनां त्वात्मा शूद्रः—इति विवेक्तव्यम् ।

(७) विशेषानादरे तु सर्वत्र ब्रह्मक्षत्रवीर्यानुरोधात् प्रजापति शब्दश्चेन्द्रशब्दश्च प्रयुज्येते । तत्र "प्रजापतिश्चरति गर्भे"

---

संस्कृतव्याख्या

एवाभिधास्यते । तेनौषधरत्नादिष्वपि मनुष्यपश्वादिष्वपि च ब्राह्मणत्वादिव्यवहारे न विरोधः । मनुष्यपश्वादीनामपि पशुत्वमेवाग्रे वक्ष्यते ।

**विशेषानादरे ।** तत्तत्प्राणेषु प्राचुर्यकृतप्राधान्यविवक्षया ब्राह्मणत्वादिविशेषा दर्शिताः । एवंविधस्य प्राचुर्यस्य प्राधान्यस्य वा विवक्षाभावे तु सर्वत्र—यत्र कुत्रापि वस्तुनि स्थिते मध्यगते नभ्यप्राणे प्रजापतिशब्दः, इन्द्रशब्दश्च प्रयुज्येते । सर्वत्र नभ्यप्राणः प्रजापतिरिति, इन्द्र इति चोच्यत इति भावः । तत्र प्रजापतिशब्दप्रयोगे हेतुर्ब्रह्मवीर्यम्, इन्द्रशब्दप्रयोगे च हेतुः क्षत्रवीर्यम् । श्रुतिषु प्रजापतेर्ब्राह्मणत्वेन, इन्द्रस्य च क्षत्रियत्वेन प्रतिपादनात् । इमे च ब्रह्मक्षत्रवीर्ये सर्वत्रैव प्रचुरमात्रयाल्पमात्रया वा विद्येते—इति प्राचुर्यमविवक्षित्वा तद्धेतुकप्रजापतीन्द्रशब्दप्रयोग उपपद्यत इति भावः । तत्र नभ्यस्य प्रजापतिशब्दवाच्यत्वे श्रुतिं प्रमाणयति, **प्रजापतिश्चरति गर्भे ।**

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥
( यजुः सं. ३१।१९ )

---

भाषाटीका

निर्वीर्य वा अल्पवीर्य कहा है । वैसे तो मात्रा के अनुसार इन में भी तत्तद्वीर्य की प्रधानता रहती ही है—यह बात आगे मूल में भी स्पष्ट कही जायगी । ]

(७) यदि उक्त वीर्यों के प्रधान वा गौण भाव का विचार न किया जाय, तो सर्वत्र ब्रह्म क्षत्र वीर्यों के सतत वर्तमान रहने के कारण सामान्यतया सब वस्तुओं के ही मध्यप्राण में प्रजापति और इन्द्र शब्द का व्यवहार होता है ।

( प्रजापतिशब्द ब्रह्मवीर्य के कारण और इन्द्रशब्द क्षत्रवीर्य होने के कारण प्रवृत्त है । इन देवताओं को श्रुति में इन ही वर्णों का कहा गया है । ) यह विषय 'प्रजापतिश्चरति गर्भे' आदि श्रुति में स्पष्ट हुआ है । मन्त्र का अर्थ है कि 'गर्भे अर्थात् मध्य केन्द्रस्थान में भीतर प्रजापति रहता है, वह स्वयं अविकृत रहता हुआ अनन्त रूपों को उत्पन्न करता है । प्रजापति जहां ( केन्द्र में ) रहता है–उस प्रभवस्थान को धैर्यशाली विद्वान् लोग ही देख सकते हैं । संपूर्ण चतुर्दश भुवनात्मक विश्व ( अर्थात् विश्व के सब ही पदार्थ ) इसके ही आधार पर स्थित रहते हैं ।'

संस्कृतव्याख्या

इति हि पूर्णो मन्त्रः । मन्त्रार्थस्तु-प्रजापतिः, गर्भे । अन्तः, सर्वस्यापि पिण्डजातस्य मध्ये निलीनः चरति । चरतीति गतिनिर्देशेन तस्य प्राणरूपता व्यज्यते । स स्वयमजायमानः-अनुत्पद्यमानः—रूपान्तरमप्राप्नुवन्नेव, बहुधा विजायते-स्वरूपादनेकविधानर्थानुत्पादयति, प्रजापतेरेव मूलात्पिण्डादिनिर्माणमत्र वैदिकप्रक्रियायां निरूप्यत इति । तस्य प्रजापतेः, योनिम्-स्थानम्, धीराः-विद्वांस एव, परिपश्यन्ति-विचार्य विजानन्ति । वृत्ताकारे पिण्डे केन्द्रज्ञानं संभवति सौकर्येण, मुख्यः केन्द्रबिन्दुस्तु तत्रापि काठिन्येनैव ज्ञेयः, किन्तु प्रलम्बे चतुष्कोणे चिपिटे वा पदार्थेऽतिदुष्करं केन्द्रज्ञानमित्याधुनिका गणितज्ञा अप्येतद् ब्रुवन्ति ।

तस्मिन् प्रजापतौ, विश्वा भुवनानि— सर्वे पदार्थाः, तस्थुः—तदाधारेणैव स्थिता इति ह–प्रसिद्धमिदम् । केन्द्रशक्त्याधारेणैव सर्वेषां पदार्थानां स्थितिः । केन्द्रे प्रहृते सर्व एव विशीर्यन्ते । यश्च केन्द्रं परिचिनोति, सोऽल्पशक्तिरपि महत्तरं महत्तमं वा पिण्डं धारयितुं शक्नोति, केन्द्रस्थानेऽङ्गुलिमात्रनिवेशेऽपि महामहतां पदार्थानामपि धृतिर्जायते, इति आधुनिका वैज्ञानिका अप्यभिमन्वते ।

प्रजापतिः—ईश्वरः, गर्भे चरति, अवतारग्रहणार्थं गर्भे प्रविशति, स्वयमजायमानः अजन्मापि, बहुधा विजायते नानारूपैरुत्पद्यत इव । तस्य योनिं-स्थानम्—अवतारशरीरम्, धीरा—विद्वांस एव जानन्ति, न तु रावणकंसदुर्योधनाद्यास्तामसाः परिचिन्वन्ति । अवतारकाले तदाश्रितान्येव सर्वाणि भुवनानि तिष्ठन्ति, तदधीनान्येव सर्वाणि भवन्तीत्यवतारसिद्धान्तप्रतिपादकतयापि मन्त्रोऽयं व्याख्यायते । श्रीमहीधरादिभिर्भाष्यकारैश्च 'प्रजापतिः—परमात्मैव, अन्तः—हृदयस्थोऽपि, गर्भे ( जीवरूपेण ) प्रविशति, अजन्मा ह्यनेकधा जगद्रूपेण प्रादुर्भवति । तस्य योनिम्—स्थानम्—स्थितिम्, धीरा एव स्वात्मनि 'अहं ब्रह्म' इति परिपश्यन्ति, तदाश्रितान्येव भुवनानि' इत्येवमद्वैतपरत्वेन मन्त्रो व्याख्यातः । तच्छ्रुतीनां बह्वर्थगर्भितया सर्वमेवो-

---

भाषाटीका

[ वर्तमान वैज्ञानिक भी मानते हैं कि लम्बे चौकोर चिपटे आदि पदार्थों में केन्द्र का पता लगाना बहुत कठिन है। केन्द्र पर किञ्चित् भी आघात होने पर वस्तु नष्ट हो जायगी, और केन्द्र का पता लग जाने पर अल्प शक्ति पुरुष भी बहुत भारी वस्तु को उठा कर रख सकता है। केन्द्रस्थान में एक अङ्गुली लगा देने पर भी भारी से भारी वस्तु खड़ी रह सकती है इत्यादि। यही केन्द्रशक्ति मुख्य स्थान है यहां से 'मण्डल' ( सब वस्तुओं के आकार ) उत्पन्न होते हैं। इस मन्त्र को अवतारवाद पर और अद्वैतवाद पर भी कई व्याख्याकारों ने लगाया है। श्रुति के एक एक मन्त्र में अनेक गम्भीर अर्थ रहते हैं इसलिये कोई विरोध न समझना चाहिये। वे व्याख्याएँ

इति श्रुतेः स प्रजापतिरुच्यते । अपि च—तदध्याश्रितास्तन्नहनाः समन्तात् प्राणाः प्रथन्ते—इत्येतेषां सामन्तप्राणानामेष मध्यमः

---

संस्कृतव्याख्या

पपन्नमिति न कश्चिद्विरोधः । वैज्ञानिकप्रक्रियायान्तु पूर्वोक्त एवार्थः ।

एतेन नभ्यस्य प्राणस्य प्रजापतिशब्दवाच्यता स्फुटीभूता ।

अथेन्द्रशब्दवाच्यतां विवृण्वन् शतपथब्राह्मणस्य षष्ठकाण्डारम्भगताः श्रुतीरर्थतोऽनुवदत्यस्मिन् प्रकरणे—तदध्याश्रितास्तन्नहना इत्यादिना ।

"स योऽयं मध्ये प्राणः, एष एवेन्द्रः, तानेष प्राणान् मध्यत इन्द्रियेणैन्ध" (शत. ६।१।१।२) इत्याद्या श्रुतिरिहानुसन्धेया । वक्ष्यमाणाः सप्त भागाः, शिरसि पृथक् सप्तभागाश्चेति सर्वमपि तत्र विवृतं द्रष्टव्यम् । 'सप्तर्षयः' इति ऋषिषु सुप्रसिद्धा येयं सप्तसंख्या, सा प्राणविधेषु ऋषिषु इमानेव सप्त भागानभिलक्ष्योपपादनीया ।

तदध्याश्रितास्तन्नहनाः । अभयम्, सामन्तम्, पारावतं चेति भेदत्रयं प्राणानां यदस्य प्रकरणस्यारम्भ उपक्रान्तम्, तत्राभयं मध्यप्राणरूपेण व्याख्यातम् । अथ मध्यप्राणादाविर्भूय तत्तत्पिण्डेषु समन्ताद्ये प्रचरन्ति प्राणाः, ते 'समन्तात् स्थिताः' इति हेतोरेव सामन्ता उच्यन्ते । मध्यमस्य प्राणस्येन्द्रस्य इमे सामन्ताः—परिकरभूताः—क्षुद्रा राजानः—इति वा सामन्ताः । त इमे नभ्यप्राणमिन्द्रमेवाश्रिताः, तन्नहनाः—तेनैव बद्धाः । एतांश्च सर्वान् स एव

---

भाषाटीका

संस्कृत टीका में लिख दी गई हैं । वैज्ञानिक प्रक्रिया की प्रकृत व्याख्या यही है । ]

इस प्रकार मुख्य मध्य प्राण में प्रजापतिशब्द का व्यवहार श्रुति में स्पष्ट हुआ । आगे इन्द्र शब्द का व्यवहार बताते हैं कि इस के आधार से रहनेवाले अथवा इससे बंधे हुए प्राण ही चारों तरफ विकसित होते हैं । इन फैलनेवाले सामन्त नाम के प्राणों में जो मध्यगत प्राण है—वह इन्द्र कहा जाता है । यह मध्य में रहता हुआ सामन्त प्राणों को प्रदीप्त करता है ( क्रिया शील बनाता है ) इस तरह दीप्त्यर्थक इन्धिधातु से बना हुआ इन्ध शब्द ही आगे इन्द्ररूप से व्यवहृत हुआ है । [ यह सब विषय शतपथ ब्राह्मण के षष्ठकाण्ड के आरम्भिकअध्याय के आधार पर लिखागया है, वह श्रुति ही इस में प्रमाण है । 'समन्तात्' अर्थात् चारों तरफ होने के कारण पिण्डगत प्राणों को सामन्त प्राण कहा जाता है । अथवा मध्य का प्राण इन्द्र अर्थात् राजा है, और ये चारों ओर फैले हुए प्राण उसके परिकर 'सामन्त' अर्थात् सर्दार लोग हैं—इसलिये भी सामन्त शब्द का व्यवहार उपपन्न

प्राण इन्द्रः । स मध्यतः सन्निन्धे सामन्तान् प्राणानितीन्धः सन्निन्द्र उच्यते ।

(८) इद्धाश्चैते सामन्तप्राणाः सप्तधा विभज्यन्ते—नाभेरूर्ध्वमधस्ताच्च द्वौ द्वौ पुरुषाविति चत्वारः प्राणा आत्मा, सोऽङ्गी । ततो बहिर्धा त्रयः पुरुषाः पक्षपुच्छानीत्यङ्गानि ।

---

संस्कृतव्याख्या

मध्यमः प्राण इन्धे—दीपयति, इन्धनादेव इन्धः, इन्द्रो वा एष परोक्षवृत्त्या इन्द्र इत्युच्यते ।

अथैतेषु सामन्तप्राणेषु श्रुत्युक्तान् सप्त भागानुपपादयति—इद्धाश्चैते । नाभिः—मध्यं यत् प्रागुक्तम्, ततश्चतसृषु दिक्षु ये प्रसृताः प्राणाः, तेषु ऊर्ध्वभागं द्वेधा विभज्य द्वौ पुरुषौ पृथग् व्यवस्थापनीयौ, अधोभागं च द्वेधा विभज्य द्वौ पुरुषौ तत्र व्यवस्थाप्य चत्वारः पुरुषा इमे आत्मभूता मन्तव्याः । इमानेवाभिलक्ष्य मानवशरीरे प्रतिप्रादेशं द्वादशदलादीनि चक्राणि व्यवस्थापयन्ति तान्त्रिकाः हठयोगिनश्च । प्रादेशमितः 'प्राणः'-इति श्रुतिरप्युद्घोषयति । पूर्वपश्चिमरूपाद् ऊर्ध्वभागादधोभागाच्च तिर्यग्भूतौ यौ दक्षिणोत्तरौ भागौ, तौ द्वौ पक्षाविति गणनीयौ । विभक्ताभ्यां दक्षिणोत्तराभ्यामधःकोणे यो भागोऽवशिष्यते-तत्पुच्छमिति कल्पनीयम् । इदं पुच्छमेव प्रतिष्ठेति शतपथ उक्तम् । एवं चत्वार आत्मभूताः, द्वौ पक्षौ, एकं पुच्छमिति सामन्तानां प्राणानां सप्त भागाः कल्पिताः, इन्द्रस्तु अभयपदवाच्य एभ्यः पृथगेवेति न विस्मर्तव्यम् । तत्र आत्मभूताश्चत्वारः प्राणा अङ्गिनः, पक्षपुच्छभूतास्त्रयस्त्वङ्गानि । एषवात्मभूतानामङ्गभूतानां च वैलक्षण्यं मूल एवोपपादितमग्रे ।

---

भाषाटीका

हो जाता है । पूर्वोक्त ३ भागों में पहला भाग अभय और दूसरा सामन्त है—यह स्मरण रखिये ]

(८) मध्यगत इन्द्र प्राण के द्वारा प्रदीप्त होनेवाले ये सामन्त प्राण सात रूपों में विभक्त होते हैं । नाभि से ऊपरी भाग में ( नाभि की सीध में ) दो पुरुष ( प्राण ) और नीचे के भाग में ( नाभि की सीध में ) दो पुरुष – इस प्रकार चार प्राण आत्मास्वरूप होते हैं, वे ही मुख्य अङ्गीरूप हैं । इनसे बाहर के भाग में तीन पुरुष पक्ष और पुच्छ रूप में अङ्ग बन जाते हैं । नाभि के दाहिने, बांये भाग में दो पक्ष, और नीचे की ओर का तिरछा भाग पुच्छ समझना चाहिये ।

(९) तथा च—"त्रिवृद्वै चक्षुः शुक्लं कृष्णं लोहितम्" ( ३-८ ) इति कौषीतकश्रुतेः कनीनिकाकृष्णशुक्लैरक्षिवदिदं वर्तुलवृत्तं त्रिवृद्रूपं संपद्यते—मध्यबिन्दुरनिरुक्तोऽक्षरपुरुषसंपरिष्वक्तः प्राण इन्द्रः, स एको भागः। तं परितश्चत्वारः प्राणाः आत्मा, स द्वितीयो भागः। तं परितो द्वौ पक्षावेकं पुच्छमिति त्रयः प्राणा

---

संस्कृतव्याख्या

दृष्टान्तविधया तदेतत्स्पष्टयति श्रुतिरेव—त्रिवृद्वै चक्षुः। चक्षुर्गोलकं यदस्मदादीनां दृश्यते, तत् त्रिभी रूपैः परस्परसंबद्धैर्विरचितमित्यर्थः। बहिर्धा अभितः शुक्लो भागः, तन्मध्ये गोलः कृष्णो भागः, तस्यापि मध्ये च प्रदीप्त इव दृश्यमानः प्रदीप्तत्वादेव रक्तपदेन श्रुतावुक्तः सर्वान्तरस्तृतीयो भागः। इमं सर्वमध्यभूतं तृतीयं भागमवधीकृत्य उपरि द्वौ भागौ-कृष्णः, तत्संमुखीनः श्वेतश्च, अधोऽपिद्वौ भागौ-कृष्णः तत्संमुखीनः श्वेतश्च। अथ दक्षिणवामौ कृष्ण-

---

भाषाटीका

(९) इस तरह इनतीन भागों में विभक्त सातों-प्राणों का एक तीन लड़वाला गोलवृत्त ( मण्डल ) बनता है। चक्षु का दृष्टान्त बताते हुए कौषीतक श्रुति में कहा है कि आँख का गोलक सफेद काले और लाल रंग के तीन भागों से बना हुआ है, अर्थात् कनीनिका नाम आंख में बीच का चमकदार—तारा-काले और श्वेत भाग से घिरा रहता है।

आँख के ही समान प्रत्येक गोलवृत्त त्रिवृत ( तीन भागों का ) ही होता है। नेत्र गोलक में जैसे मध्य का चमकदार तारा एक भाग है, उसके ऊपर का काला भाग एक और उसकी सीध का श्वेतभाग एक ये ऊपर के दो भाग, इस ही प्रकार नीचे के काले और श्वेत दो भाग-ये चार आत्मा वा अङ्ग हैं, और दाहिनी बाईं ओर के सीध के दोनों श्वेत भाग-पक्ष-एवं-नीचे की ओर का बचा हुआ भाग पुच्छ है, यों तारा के अतिरिक्त सात भाग हो गये और उनका वर्गीकरण तीन में हुआ। इस ही प्रकार सब वस्तुओं में मध्य विन्दु ( केन्द्र) में रहने वाला अनिरुक्त अर्थात् जिस का विभाग नहीं हो सकता, और स्थान का परिचय न होने से सर्वसाधारण जिसका निरूपण भी नहीं कर सकते, एवम् अक्षर पुरुष से संबद्ध रहने वाला वह इन्द्ररूप प्राण इस वर्त्तुलवृत्त का एक भाग है, और इस के चारों तरफ आत्मा अथवा अङ्गीरूप जो चार प्राण बताये गये हैं-वह इस वृत्त का दूसरा भाग है, इस ही तरह इसके दोनों तरफ दो पक्ष ( पंख ) और एक पुच्छ ( पूंछ-मूलस्थान ) है,

अङ्गानीति तृतीयो भागः ।

(१०) अत्राङ्गिप्राणविगमे साङ्गोपाङ्गं विनश्यति । किन्तु यद्विगमे सत्यपि नाङ्गी स्वसत्तातश्च्यवते, तदङ्गम् । यथा हस्तपादादिविगमेऽपि प्राणी जीवत्येव । नाभिहृदयमस्तिष्काद्यात्मप्राणापाये तु सद्यः प्राणी म्रियते ।

तेनैतत्कायारम्भकाणां प्राणानां नभ्येन्द्रेणोपनहनतारतम्यान्मुख्यामुख्यत्वाभ्यांभेदोऽवकल्पते । यत्र यत्र प्राणेनार्थः, तत्र

---

संस्कृतव्याख्या

भागात् तिर्यग्भूतौ द्वौ श्वेतभागौ पक्षौ । ततोऽप्युर्वरितः श्वेतोऽधोभागश्च पुच्छमिति । अनयैव रीत्या सर्वे पिण्डा विभज्य द्रष्टव्याः ।

अत्र समानेऽपि सर्वत्र प्राणत्वे कुतः कस्यचिदङ्गित्वम्, कुतो वा कस्यचिदङ्गत्वमिति प्रश्ने तत्र हेतुमाह—**नभ्येन्द्रेणोपनहनतारतम्यात्** । नभ्येन मुख्यप्राणेन, यत्सामन्तप्राणानामुपनहनम् बन्धनम्, तत्र यस्तरतमभावः, कस्यचित्प्राणस्य दृढं तेन बन्धनम्, कस्यचित्तु शिथिलमिति तत एवेदं वैषम्यम् । यस्य मुख्यप्राणेन दृढं बन्धनम्-सोऽङ्गी प्राणः, यस्य तु

---

भाषाटीका

ये अङ्गभूत तीनों प्राण-उस वृत्त का तीसरा भाग है । इस प्रकार प्रत्येक वृत्त इन तीन भागों में विभक्त होता है ।

(१०) इनमें अङ्गी अर्थात् आत्मास्वरूप प्राण के नाश होने पर संपूर्ण वृत्त अथवा पिण्ड (वस्तु का आकार) ही नष्ट हो जाता है। किन्तु जिन प्राणों के नष्ट हो जाने पर भी प्रधान अङ्गी अपने स्वरूप से च्युत नहीं होता (केवल टूटा फूटा कहा जाता है, वे प्राण अङ्ग माने जाते हैं। जैसे हाथ पैर कट जाने पर भी प्राणी जीवित रहता है, किन्तु नाभि, हृदय मस्तिष्क आदि आत्मास्वरूप प्राणों के नष्ट हो जाने पर तो प्राणी तत्काल ही मर जाता है ।

इन प्राणों में परस्पर प्रधान-गौणभाव होने में मुख्य हेतु-इस शरीर को बनानेवाले प्राणों का नाभिगत इन्द्रप्राण से गहन अथवा शिथिल बन्धन ही है, अथवा यों कहिये कि नाभिगत इन्द्र प्राण से जो प्राण दृढता से बंधे रहते हैं वे मुख्य, अङ्गी अथवा आत्मा कहे जाते हैं, और जो उतनी दृढता से बद्ध नहीं होते, अर्थात् जिनका मुख्य प्राण से बन्धन शिथिलसा रहता है वे गौण प्राण अङ्ग माने जाते हैं । इसही आधार पर प्रधान तथा गौण भेद की कल्पना है । इस प्रकार जहां जहां प्राणों का विवेचन हो, वहां सब जगह इन्द्र-आत्मा और अङ्ग ये तीन विभाग

सर्वत्रैवमिन्द्रात्माङ्गभेदात् त्रैविध्यमिति साधारणो नियमः । तच्चेदमात्मप्राणाङ्गप्राणद्वैविध्यकृतं रूपमिन्द्रस्यात्मनोऽधिष्ठानं

---

संस्कृतव्याख्या

शिथिलम्, सोऽङ्गप्राण इति । सर्वत्र प्राणेष्वयं साधारणः संनिवेशनियमो विज्ञेयः-मध्य इन्द्रः, तत्सन्निहिता आत्मभूताश्चत्वारः, तिर्यग्भूताश्च पक्षपुच्छा-स्त्रयोऽङ्गभूता इति । त एते सप्त प्राणाः संमिलिताः 'सर्वः प्रजापतिः' इत्युच्यन्ते । तदेतत्प्रकोष्ठके दर्शितं मूले । इन्द्रादतिरिक्ताः सप्त तत्र प्रजापतिकोष्ठे दर्शिताः । इन्द्रोऽपि प्रजापतिः प्रागुक्तेः । तेन 'नभ्यः प्रजापतिः' 'सर्वः प्रजापतिः' इति प्रजापतेर्द्वैविध्यं व्याख्यातम् ।

नभ्यप्रजापतिप्रतिपादको मन्त्रः प्रागुपन्यस्तः । सर्वप्रजापतिपादकस्त्वयं मन्त्रः—

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् । ( ऋः सं. १०।१२१।१० )

हे प्रजापते ! त्वद् अन्यः-त्वत्तो भिन्नः कश्चिदपि, एतानि विश्वा जातानि-दृश्यमानान् सर्वान् उत्पन्नपदार्थान्, परिता-परितः-न बभूव । न परिगृह्णाति, न व्याप्नोतीति भाष्यकृत् । त्वमेव सर्वेषामुत्पद्यमानानां पदार्थानां परितः स्थितोसि, तान् व्याप्नोषीत्यर्थः । स्पष्टमुत्तरार्द्धम् ।

तच्चेदमात्मप्राणाङ्ग । एवं सप्त प्राणान् पृथगुत्पाद्य तानधितिष्ठति मुख्यः प्राणः, सप्त प्राणाश्च भूतानामायतनानि भवन्ति, एतावति मण्डल एव

---

भाषाटीका

जान लेना चाहिये । यह एक साधारण नियम है । ( यह सब विषय शतपथ ब्राह्मण के छठे काण्ड के आरंभ में ही स्पष्ट हुआ है ) प्रधान आत्मारूप प्राण और गौण अङ्ग रूप प्राणों का यह दो प्रकार का रूप-सबके प्रधान आत्मारूप मूल इन्द्र प्राण का अधिष्ठान अर्थात् रहने का स्थान है-( वह इन्द्र प्राण इनही सात प्राणों पर अधिष्ठित रहता है, इनके विना केवल नहीं रहता ) । और शरीर को बनाने वाले पञ्चभूत जो आगे बनेंगे, उनका यह ही आयतन होता है, अर्थात् ये सातों प्राण जितना प्रदेश ( स्थान ) घेरते हैं-उतने ही प्रदेश में शरीर भी बनता है, उससे बाहर नहीं जा सकता । ( मूल में कोष्ठ जो बना है-उसमें दिखाया गया है कि इस प्रकार चार प्रधान और तीन गौण इन सात प्राणों का समष्टि रूप से परिचय एक प्रजापति शब्द से हो जाता है । अथवा यों कहिये कि इन सात प्राणों का समूह रूप

शरीरारम्भकभूतानामायतनं विज्ञायते ।

| इन्द्र | आत्मा | अङ्गानि | प्रजापतिः |
|---|---|---|---|
| १ | ४ | २ | ७ |

(११) अथैतेषां सप्तानामङ्गाङ्गिपुरुषाणां श्रीभिरिन्द्रसमिन्धनविशेषादूर्ध्वमुदूढरसरूपाभिः पृथगिवामृतं सप्तप्राणरसमेकपुरुष-

---

संस्कृतव्याख्या

प्राणोत्पादितानि भूतानि तिष्ठन्ति, न त्वायतनाद् बहिर्भवन्ति। भूतैश्च शरीरमुत्पाद्यते—इत्येष सृष्टिक्रमसंक्षेपः ।

अथ शतपथश्रुतेः षष्ठकाण्डाधारेणैव शिरस उत्पत्तिमाह **अथैतेषां सप्तानाम्** । चलनशीलाः प्राणा न कथमपि उपरतक्रिया भवन्ति । अत्रापि भागद्वयं भवति, ये मर्त्याः प्राणाः ते मण्डलरूपेण बद्धास्तिष्ठन्ति, यस्तु तेष्वमृतभागः, स उपरिष्टाद् गच्छति । तस्योर्ध्वगमनेऽपि इन्द्रप्राणप्रेरणैव हेतुः । सोऽयममृतभागः श्रीरूपः, स एव रसः-सारः । स च सप्तानामपि प्राणानां संघभूत ऊर्ध्वगतः । स एकीभूत एव शिर इत्युच्यते । श्रीशब्दादेव शिरः शब्दनिष्पत्तिरुक्ता ब्राह्मणे । ततश्च यन्मर्त्यप्राणानां मण्डलमगच्छदेव स्थितम्, तन्मर्त्यं शरीरं चोच्यते, यत्तु ऊर्ध्वभूतम्, तदमृतम्, शिरः, कुर्वद्रूपम्

---

भाषाटीका

प्रजापति इन्द्र से प्रेरणा पाकर अपनी सात कलाओं से जगत् का निर्माण करता है। कहा जा चुका है कि केन्द्र के इन्द्र प्राणको भी प्रजापति कहते हैं—और यह प्राण समूह भी दूसरा प्रजापति है। पहले का नाम 'नभ्य प्रजापति' वा 'अनिरुक्त प्रजापति है, और इस दूसरे का नाम 'सर्व प्रजापति' है। इस दूसरे प्रजापति का वर्णन भी मन्त्र में है-वह मन्त्र संस्कृत टीका में दिया गया है। )

(११) कहा जा चुका है कि नाभिगत प्रधान इन्द्रप्राण अतिरिक्त सब प्राणों को प्रदीप्त करता है, उस की ही प्रेरणा से ये ऊपर की ओर उठते रहते हैं। तदनुसार ही इन प्रधान तथा गौण पुरुषों ( आगे प्रायः प्राण शब्द के अर्थ में पुरुष शब्द का प्रयोग है ) की श्री जो कि इन्द्रप्राण से दीप्त कर ऊपर उठाई गई है, और उक्त सातों प्राणों का रस अर्थात् सार भूत है, उससे एक पृथक् अमृत प्राण बनता है—जो कि सातों प्राणों का रस होता है, और एकपुरुषरूप बनजाता है। वह शरीर के ऊपर रहनेवाला शिर है। यह श्री रूप है, इसलिये शिर कहलाता है। अर्थात् श्री शब्द से शिर शब्द बना है। यह अमृत है, किन्तु जिसका यह शिर है-वह शरीर कहलाता

मात्रं शिरो भवति । यस्यैतच्छिरस्तच्छरीरम्, तन्मर्त्यम् । वाक्-प्रधानं प्रसुप्तमिव निश्चेष्टं शरीरम् । प्राणप्रधानं जाग्रदिव कुर्व द्रूपं शिरः । शिरसि च शरीरे च पृथगिव सप्त सप्त प्राणाः श्रूयन्ते । देवप्रधानं शिरः प्राणमयम्, तत्रैतानि भूतानि देवानाश्रयन्ते । आहुतयश्च देवेभ्यः क्रियन्ते न भूतेभ्यः । तेनेदं भौतिकं शिरः कृश्यतो न कृश्यति, मेद्यतो न मेद्यति । अथ भूतप्रधानमिदं शरीरम्,

---

संस्कृतव्याख्या

क्रियाशीलं च व्यवह्रियते । अगतिके मण्डले वाक् प्रधानं भवति, अगतिकत्व एव वाग्रूपताव्यवहारात् । गतिशीले शिरसि तु प्राण एव प्रधानम् । ऊर्ध्वगता अपि प्राणाः पूर्वोक्तेन नियमेन सप्तधा विभक्ता भूत्वैव तिष्ठन्तीति शिरस्यप्यात्मपक्षपुच्छव्यवहारः प्रवर्तते । प्राणानाम् ऋष्यादिक्रमेण परिणतिर्देवाः, वाचस्तु परिणतिर्भूतानीति शिरो देवप्रधानम्, शरीरं तु भूतप्रधानमित्यादि स्पष्टं मूले । अत्र च शिरसि या आहुतयः—पूर्वोक्तया उक्थाशीतिप्रक्रियया या सोमरूपा अन्नप्राप्तिः, सा देवेभ्यः—देवानां पुष्ट्यर्थं भवति, आभिराहुतिभिर्विशिष्य प्राणरूपाणां देवानामेवोपकारः, शिरःस्थानि भूतानि ताभिराहुतिभिर्न पोषमाप्नुवन्ति । तदुक्तम्—

कृश्यतो न कृश्यति । यथा अस्मदादिशरीरे शिरःस्थानि चक्षुरादीन्द्रियाणि बाह्यरूपादिज्ञानरूपमन्नमाहरन्ति, तेन ज्ञानेन्द्रियाधिष्ठातारो देवा एव पुष्यन्ति, न तु भूतानां कोऽपि पोषस्तेन ज्ञानेन, न वा तज्ज्ञानाल्पतायां भूतानां कृशता । तथैव सर्वत्र बोध्यम् । शरीरे तु या आहुतयः-कर्म-

---

भाषाटीका

है, और वह मर्त्य है । शरीर में 'वाक्' ( भूतों का भाग ) प्रधान है, इस में प्राण ( बल ) सर्वथा सुप्त दशा में रहता है, और इस ही से शरीर स्वतः निश्चेष्ट रहता है, प्राण की प्रेरणा से ही इस में चेष्टा होती है । और ठीक इसके विपरीत शिर प्राण-प्रधान होने से सदा जागृत रहता है, और सतत स्वयं क्रियाशील रहता है इन्द्रिय आदि प्राण शिर में ही हैं, वे शरीर में प्रेरणा देते हैं । इस प्रकार सात प्राणों का मण्डल शिर में पृथक् होता है और शरीर में पृथक् । प्राणमय शिरभाग में देवताओं की प्रधानता होती है, वहां ये भूतवर्ग देवों के आश्रित होकर रहते हैं, और यहां दी गई आहुति ( अन्न-खुराक ) देवों को ही पुष्ट करती है, भूतों को नहीं । इस

तत्रैते देवा भूतान्याश्रयन्ते । आहुतयश्च भूतेभ्यः क्रियन्ते, न देवेभ्यः । तेनैते देवाः कृश्यतो न कृश्यन्ति, मेद्यतो न मेद्यन्ति ।

(१२) तत्र शारीरैः सप्तभिः पुरुषैरेकः पुरुषो भवति । तमेतं पुरुष-

---

संस्कृतव्याख्या

न्द्रियैर्यत्स्थूलान्नसमर्पणम्, तेन भूतानामेव पोषः, न तु प्राणरूपाणां देवानामिति ग्रन्थस्यास्य सारः । 'कृश्यतः' 'मेद्यतः' इत्याद्याः श्रौता एव प्रयोगा इहोद्धृताः ।

**शारीरैः सप्तभिः ।** उक्ताः सप्तधा विभक्ताः प्राणाः पुनः संघीभवन्ति । तेषां संहत्या पुनरेकः पुरुष उत्पद्यते, सोऽयमुच्यते 'अग्निः' नामेत्येतदपि शतपथब्राह्मण एवोक्तप्रकरणे ( ६-कां॰ १ अ. १ ब्रा. ) समादिष्टम् । अयमग्निः शुक्ररूपः । पुरुषः, प्रकृतिः, शुक्रम्-इति त्रिभिः सृष्टिरेषा जायते । तत्र शुक्रोत्पत्तिः, शुक्ररूपं च नेह व्याख्यातम्, ग्रन्थान्तरेषु स्पष्टीकृतम् । इहापि चाग्रे भृग्वङ्गिरःप्रकरणे किञ्चिदुच्येत । इह त्वेतावदेव बोध्यम्-क्षरपुरुषकला-रूपं पञ्चविधं प्रकृतिब्रह्म यदाख्यातम्, तदेव शुक्रं जनयति । इदं शुक्रमेव

---

भाषाटीका

लिये शिर के निर्माण में जो पार्थिव आदि भूतों का अंश है— वह इस अन्न के न मिलने से कृश भी नहीं होता और मिलने से पुष्ट भी नहीं । [ स्मरण रहे कि उपनिषद् में सात अन्न बताये गये हैं । वाक्, बल, और ज्ञान भी अन्न माने जाते हैं । ये भी निरन्तर हम को प्रकृति से प्राप्त होते हैं, और हमारे जीवन के उपयोगी हैं । इसका विस्तृत वर्णन अन्यत्र प्राप्त होगा । यहां इतना ही कहना है कि शिरःस्थ प्राणों का अन्न ( खुराक ) इन्द्रिय संबन्धी बल, वा मुख्यतया ज्ञान है । शिरःस्थ प्राणों में वही आहुत होता है, और उससे वे देवरूप प्राण ही पुष्ट होते हैं । भूतों की पुष्टि अपुष्टि से उसका कोई संबन्ध नहीं ]

इसही प्रकार यह मर्त्यशरीर भूतप्रधान है, यहां देवों को भूतों के आश्रित होकर रहना पड़ता है, और इस शरीर को दी गई आहुति ( खुराक ) से भूतों का ही पोषण होता है, देवों का नहीं । यह ही कारण है कि शरीर के कृश होने पर भी देवभाव ( ऐन्द्रियिक बल, वा तज्जनित ज्ञान ) क्षीण नहीं होता, और शरीर के मोटे होने पर वह बढ़ नहीं जाता । अस्तु ।

(१२) इन शरीर के सातों पुरुषों से समष्टि रूप एक और पुरुष बनता है । इस पुरुष को अग्नि कहा जाता है । ( स्मरण रहे कि अग्नि शब्द कई जगह आया है, अक्षर पुरुष की कलाओं में एक अग्नि है, क्षर की कलाओं में अन्नाद नाम से यही अग्नि है, किन्तु यह तीसरा अग्नि उन दोनों से अतिरिक्त शुक्ररूप अग्नि है । शुक्र की

मग्निरित्याचक्षते । सोऽयं वागप्सहकृतः शुक्रोऽग्निर्द्विविधः-मर्त्यश्चामृतश्च । यो मर्त्यः सोऽग्निश्चित्यो नाम । यथा मनुष्य-शरीरे लोमत्वगसृग्वसामांसास्थिमज्जशुक्राणि चीयमानानि चित्यो-

---

संस्कृतव्याख्या

भूतजनकं रूपादिमत्—साकारं भवति । तच्चेदमपि त्रिरूपम्-वाक्, आपः, अग्निः इति । अग्निशब्दोऽयमनेकत्र श्रुतः-मुख्यः-अव्ययकलारूपः प्राणोऽपि क्वचिदग्निपदेन व्यवह्रियते, अक्षरपुरुषकलास्वपि चतुर्थी कला अग्निरिति व्याख्याता, क्षरपुरुषकलास्वपि चतुर्थकलारूपेण 'अन्नादः' इत्यग्निरेवोक्तः । देवेष्वप्यग्निः सर्वदेवमुखरूपेण श्रूयते । अयं चाग्निः शुक्ररूपः । तमेतं भेदं स्पष्टयितुमेवेह'शुक्रोऽग्निः' इत्युक्तम् । शुक्रस्यापि त्रय इमे भेदाः परस्परसहचारिणो भवन्ति, क्वचित्कस्यचित्प्राधान्यमिति पूर्वोक्तरीत्यैवावसेयम् । तदुक्तम्—**वागप्सहकृतः** । अयमपि शुक्रोऽग्निर्मर्त्यामृतरूपेण द्विधा भिद्यते । मर्त्य एव चित्य इत्युच्यते । पृथिव्यां ये सन्ति पदार्थाः, ते सर्वे अग्निरूपेण शुक्रेणैव निर्मिताः । तदेतदुक्तं निरुक्तकृता भगवता यास्केन "यत्किञ्चिद् दार्ष्टिविषयकम्, अग्निकर्मैव तत्' ( दै. का. १ अ )" यद् दृश्यते, तदग्निनैव निर्मितं ज्ञेयमिति । अयमेवाग्निः पृथिवीस्थानत्वेन प्रथमदेवत्वेन च निरुक्तकृता व्याख्यातः । तत्तत्पदार्थनिर्माणे अग्नेरेकस्तरोपरि पुनरपरोऽग्निस्तरः, तदुपरि पुनः स्तर इत्येव चयनम् । 'चिनाई' इति हिन्दीभाषायाम् । तस्मिन् चयने यो भागभूतः, स चित्योऽग्निः । यस्तु सिद्धे पदार्थे प्राणरूपेण प्रविष्टस्तत्संनहनकारी, उष्णस्पर्शादिजनकश्च स चितेनिधेयः ।

तत्रास्मदादिशरीरेषु चित्यमग्निमुदाहरति—**यथा मनुष्यशरीरे** । शरीरसंपादकान्युपादानानीह बाह्यत आभ्यन्तरक्रमेण निर्दिष्टानि । शरीरे

---

भाषाटीका

उत्पत्ति और उसकी त्रिरूपता शारीरकविमर्श आदि ग्रन्थान्तरों में बताई गई है । यहां विशेष स्पष्टीकरण नहीं हुआ है । वाक ,आप् (मूल तत्त्व रूप जल ) और अग्नि ये शुक्र के तीन रूप हैं । इन वाक , आप् के साथ रहता हुआ यह शुक्राग्नि दो प्रकार का है, एक मर्त्य दूसरा अमृत । जो मर्त्याग्नि है उसे चित्य अग्नि कहते हैं । [ चित्य अर्थात् जिसका चयन हो । चयन अर्थात् चिनाई । जैसे ईंट पत्थर आदि को ऊपर नीचे क्रमसे चिनने पर घर बनता है, इस ही प्रकार इस शुक्राग्नि की चिनाई से सब पदार्थ बनते हैं ] जैसे मनुष्य के शरीर में रोम, चमड़ी, रुधिर, वसा, मांस, हड्डी,

ऽग्निर्भवति । एष मर्त्यः प्रजापतेरर्द्धंभागः । तत्र सर्वाणि भूतानि श्रितानि ।

(१३) अथैतत्सप्तपुरुषश्रीसंभूतैः शिरस्यैः सप्तभिः प्राणैरेकः प्राणो भवति । सोऽग्निरमृतश्चितेनिधेयो नाम । येन येन रूपेणायं

---

संस्कृतव्याख्या

सर्वतो बहिर्भूतानि प्रथमदृश्यानि लोमानि, तदन्तरे त्वक्-चर्म, तदन्तरे असृक्-रुधिरम्, तदन्तरे वसा चिक्कणभागः, तदन्तरे मांसम्, तदन्तरे अस्थीनि, तदन्तरे मज्जा-कठिनो भागः, तस्मिन्नप्यन्तः शुक्रम्-वीर्यम् इति शारीरा धातव आयुर्वेदे सुप्रसिद्धाः । एषां चयनेन-ऊर्ध्वाधरीभावक्रमेणा-वस्थित्यैव शरीरमुच्यते । तान्येतान्यग्नेरेव रूपाणीति सोऽयं चित्योऽग्निः ।

**प्रजापतेरर्द्धंभागः** । योऽयं सर्वः प्रजापतिः पूर्वमाख्यातः, तस्यार्द्धम-मृतमर्द्धं च मर्त्यमित्युक्तं श्रुतिषु । तत्र चित्याग्निभूतो मर्त्यः शरीरभाग एव सर्वप्रजापतेरर्द्धं मर्त्यं विज्ञातव्यमित्यर्थः । अयमेव भौतिको भाग इत्यपि विज्ञेयम् । चित्याग्नेरेव भूतजनकत्वात्; भूतरूपेण परिणामादिति यावत् । अत्र शरीरापेक्षया लोमानां पशुत्वं प्रागुक्तम्, शारीराग्निना समाहृतैर्बहिर्द्रव्यै-स्तेषामुत्पन्नत्वात् । पृथिवीपिण्डापेक्षया तु मानुषशरीरस्यैव सर्वस्य पशुत्वम्, पृथिव्यन्तर्गतेनाग्निना समाहृतैः पदार्थैस्तेषां जननादिति अग्रे प्रतिपाद्यते ।

अथ शिरोभागममृतशुक्रसंभूतमाह—**अथैतत्सप्तपुरुष** । व्याख्यातप्राय-मेतत् । चितेऽग्नावयममृतभागः प्राणरूपेण निहितः-अनुस्यूत इत्यस्य चिते-निधेयत्वमुपपादितम् । शुक्रविशिष्टोऽयं प्राणः प्रागुक्तस्य मुख्यप्राणस्य

---

भाषाटीका

मज्जा, शुक्र आदि धातु एक के ऊपर दूसरे के क्रम से चिने हुए रहते हैं—यह चित्याग्नि का रूप है । यह चित्याग्नि मर्त्य अग्नि है और यह प्रजापति का आधा भाग है । इसही पर संपूर्ण भूत-वर्ग ठहरा हुआ है । वा यों कहो कि यही भूत रूप से परिणत हो जाता है, यही भूतों का जनक उपादान कारण है ।

(१३) पूर्वोक्त सातों पुरुषों की श्री से समुद्भूत शिरोगत सात प्राणों से जो समष्टि-रूप एक प्राण बनता है-वह शुक्राग्नि अमृत कहाता है, और इसका नाम 'चिते-निधेय' है । जिस जिस रूप से चित्याग्नि का चयन होता है, वहां सर्वत्र चित्याग्नि में यह भीतर सतत अनुस्यूत-( उसमें अन्तः प्रविष्ट उसके ऊपर बैठा हुआ—रहता

चित्योग्निश्चीयते, तत्र सर्वत्रायं तत्तदभ्यन्तरेऽनुस्यूतो भवतीति चितेनिधेय उच्यते । सोऽमृतः शुक्रोऽग्निर्वागप्सहकृतः प्रजापतेरर्द्ध भागः । तत्र सर्वे देवाः श्रिताः । "अत्र हि सर्वेभ्यो जुहति" ( शत.६।१।१ ) इति वाजिश्रुतौ श्रूयते ।

(१४) अपि च मन्त्रः पठ्यते—

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुयाऽकर्भागधेयम्"
( तैत्ति. सं० १।३।७।१४ )

---

संस्कृतव्याख्या

स्थूलावस्थेति न विस्मर्तव्यम् । इहाश्रिता देवाः शुक्रविशिष्टप्राणरूपा एव, ये इन्द्रियाधिष्ठातृतया पुराणेषु वेदान्तसारादिषु च प्रतिपादिताः । देवार्थमिह शिरस्येवाहुतिः क्रियत इति स्पष्टीकृतं प्राक् ।

चित्यश्चितेनिधेयश्चेत्यग्निर्द्विविध इत्यंशे श्रुतिं प्रमाणयति- **'अग्नावग्निश्चरति'** ।अत्र तैत्तिरीयसंहितादृष्टः पाठो मूले निवेशितः । शुक्लयजुर्वेदे

---

भाषाटीका

है—इसही लिये 'चितेनिधेय' कहा जाता है। ( चितेनिधेय अर्थात्-चित ( चिने हुए ) के ऊपर स्थापित ) यह अमृतमय वाग् आप् का सहचारी शुक्राग्नि प्रजापति का दूसरा आधा भाग है। इसमें सब देवता आश्रित हैं। शतपथ के छठे काण्ड में वाजिश्रुति में कहा गया गया है कि इस शिरोभाग में देवताओं के लिये आहुति दी जाती है, अर्थात् इसको जो ज्ञान आदि खुराक दी जाती है वह मानों देवताओं को उद्देश्य करके हवन किया जाता है।

(१४) तैत्तिरीय संहिता में भी 'अग्नावग्निः' इत्यादि मन्त्र द्वारा मर्त्यामृत अग्नि का संबन्ध स्पष्ट हुआ है। मन्त्र का अर्थ है कि अग्नि में ( चित्य में ) प्रविष्ट होकर अग्नि ( चिते निधेय ) विचरण करता है यह सब का राजा है ऋषियों का पुत्र है, अर्थात् मौलिक तत्त्व रूप ऋषियों से उत्पन्न हैं। ( ऋषियों से ही देवता उत्पन्न होते हैं-यह पूर्व कहा जा चुका है )। हे अग्ने ! मैं स्वाहाकारपूर्वक मन्त्र से तेरे लिये हवन करता हूँ। तू सब देवताओं के भाग को मिथ्या मत करना, अर्थात् देवताओं को यथावत् पहुँचा देना। अथर्ववेद और शुक्लयजुर्वेद में भी कुछ कुछ पाठ भेद से यह मन्त्र आया है। यद्यपि कर्मकाण्ड की प्रक्रिया में भाष्यकारों ने इसका अर्थ 'मथन कर के प्रकट किये गये अग्नि का आहवनीय अग्नि के साथ संमिश्रण' किया है। किन्तु वैज्ञानिक प्रक्रिया में यही अर्थ है। मर्त्य अग्नि में अमृताग्नि प्रविष्ट होता

इति तैत्तिरीयपाठः । अथर्ववेदे शुक्लयजुर्वेदे चायं किञ्चित्पाठ-

संस्कृतव्याख्या

त्वेवं दृश्यते—

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्यं सदमप्रयुच्छन्त्स्वाहा।
( शु. य. सं. ५।४ )

अथाथर्वसंहितायामित्थं श्रूयते—

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्ति पा उ।
नमस्कारेण नमसा ते जुहोमि मा देवानां मिथुयाकर्भागधेयम्।
( अथ ४।३९।९ )

अयं च भाष्यकृद्भिस्तत्र तत्र यज्ञप्रक्रियायां व्याख्यातः-निर्मथ्यो-मन्थनेन निष्पादितः, अग्निः, आहवनीये अग्नौ प्रविष्टः-तेन संयोजितः, चरति-यज्ञकार्याणि करोति । अयं च ऋषीणाम् अग्निहोत्रिणां पुत्रः-तैरुत्पादितत्वात्। यद्वा ऋषिपदेन वेदमन्त्रा गृह्यन्ते, तैर्वेदमन्त्रैरुत्पादितत्वादयमृषिपुत्रः । एषः, अधिकं राजमानत्वाद् अधिराजः । अभिशस्तिपा इति पाठे अभिशस्तेः-निन्दाध्यारोपाद्, यजमानं पातीत्यर्थः । पावा इति पाठेऽपि स एवार्थः, वन् प्रत्ययः । अग्रे स एव प्रत्यक्षीकृत्य स्तूयते-हे मथिताग्ने, ते-तुभ्यम्, स्वाहाकृत्य-स्वाहाशब्दमुच्चार्य, ब्रह्मणा-मन्त्रेण जुहोमि । देवानां भागधेयम्, मिथुया-मिथ्याभूतम्, मा कः, न कुरु । तत्तद्देवभागं तस्मै तस्मै देवायावश्यं प्रापयेत्यर्थः । अयमेवार्थोऽथर्वधृते पाठे । तत्र स्वाहाकारेण जुहोमीत्यस्य स्थाने नमस्कारेण, नमसा—मन्त्रेण, अन्नेन वा जुहोमीत्येतावदेव वैलक्षण्यम् । शुक्लयजुःपाठे तु सोऽग्निः, नः—अस्माकम्, स्योनः-सुखकरः, सुयजा-सुयागेन, देवेभ्यः-हव्यम्, यज-हविर्देवेभ्यः प्रापय ।सदम्-सदा, अप्रयुच्छन्—अप्रमाद्यन्-इति ।

इह तु यज्ञकर्ममूलभूतायां वैज्ञानिकप्रक्रियायामयमर्थः । अग्नौ चित्याग्नौ, अग्निः—चितेनिधेयोऽग्निः, प्रविष्टः चरति अनुप्रविश्य गतिशीलस्तिष्ठति । तं चापि चालयति, क्रियाशक्तिर्जडभूते चित्ये, चितेनिधेयेनैवाधीयत

भाषाटीका

है। ( वैज्ञानिक प्रक्रिया ही कर्मकाण्ड प्रक्रिया का मूलभूत है, यह ब्राह्मणों में बहुधा स्पष्ट है )।

इस प्रकार सिद्ध हुआ कि अत्यन्त क्षुद्र ( छोटे ) कीड़े मकोड़े का शरीर हो, अथवा महाविशाल संपूर्णब्रह्माण्डरूप ईश्वर का शरीर हो, सूर्य चन्द्र पृथ्वी, अथवा यह जो कुछ दिखाई देता है, यह सब प्रत्येक बाहरी शरीर और आभ्यन्तर स्थित प्राणों के रूप से दो रूपों में विभक्त है। बाहरी शरीर मर्त्यभाग है, और आभ्यन्तर प्राण अमृत । नाभिगत प्रधान इन्द्र प्राण ही मर्त्य और अमृत इन दो

भेदेन पठ्यते । मर्त्येऽग्नावमृतोऽग्निः प्रविष्टो भवति । इत्थं चातिक्षुद्रं कृमिकीटशरीरं वा, महाविशालं जगद्ब्रह्माण्डरूपमीश्वर शरीरं वा, सूर्यश्चन्द्रः पृथ्वी वा, यावदिदं किञ्चिद् दृश्यते, तत्सर्वमेकैकं कृत्वा बहिःशरीराभ्यन्तरप्राणाभ्यां द्विविभक्तं मर्त्यामृतमयं विद्यात् । इन्द्र एव च मर्त्यामृताभ्यां द्वेधा विभक्तात्मा तेषां सप्तानां चित्यानां चितेनिधेयानां चैकः संनहनः प्रतिष्ठेत्येवमिन्द्रामृतमर्त्यैस्त्रिवृद्भावं सर्वत्र विद्यात् ।

| प्रतिष्ठा | उक्थम् | | | साम |
|---|---|---|---|---|
| इन्द्रः | अमृतम् | मर्त्यम् | पशुः | |
| | आत्मा ४ | आत्मा ४ | | |
| | अङ्गानि ३ | अङ्गानि ३ | | |
| | देवाः | भूतानि ३ | | |

संस्कृतव्याख्या

इति भावः । अयं च चितेनिधेयोऽपि, ऋषीणां पुत्रः, ऋषिभिरुत्पादितः ऋषिप्राणा एव देवप्राणान् जनयन्तीति प्रागुक्तं स्मर्तव्यम् । एष च अधिराजः चित्यस्य प्रभुः, तस्य तत्तत्कार्ये विनियोजकः । अभिशस्तिपा इति पाठे, तं चित्याग्निम्, निन्दाजनकाद् दुरितात्पाति, चितेनिधेय एव चित्यं शोधयतीत्यर्थः । देवानामर्थे इहैव चितेनिधेये, हूयते, तत एव देवा बलवन्तो भवन्तीत्यादि मूल एवोक्तं प्राक् ।

इत्थं चातिक्षुद्रम् । यत्र प्राणिषु शिरोभागः पृथक् प्रतीयते, तत्रैवायं चितेनिधेयोऽग्निस्तिष्ठतीति न भ्रमितव्यम् । पृथिव्यादिमण्डलेष्वपि एवमेवास्य व्याप्तिः, तदन्तर्गतेष्वपि प्राणेषु शिरोभागः पृथगेवास्तीत्यर्थः । स्पष्टमन्यद् व्याख्यातप्रायम् ।

उक्तस्यैवार्थस्य विशदीकरणाय प्रकोष्ठकमेकं मूले निवेशितम् । प्रतिष्ठा, उक्थम्, सामेति पूर्वं प्राणत्रैविध्यम् । तत्र प्रतिष्ठा सर्वत्र इन्द्रः—नभ्यः प्राण इत्यर्थः । यः सर्वेषां सन्नहन उक्तः । उक्थे तु भागत्रयम्, अमृतम्, मर्त्यम्, पशुश्चेति । तत्रापि अमृते मर्त्ये च भागसप्तकम्–इत्येतत्सर्वं व्याख्यातं प्राक् । पशुः साम चोत्तरत्र व्याख्येयमिति ।

भाषाटीका

रूपों में विभक्त होता है । और सातों चित्याग्नियों को और उनमें रहने वाले सातों चितेनिधेय अग्नियों को वह इकेला इन्द्रप्राण बांधे रहता है और वह ही इन सब का आधार ( प्रतिष्ठा ) है । [ ऐसी भ्रान्ति न हो कि जिनका शिरोभाग पृथक दीख पड़ता है, ऐसे प्राणियों में ही चितेनिधेय की सत्ता है । नहीं; यह अमृताग्नि सब मण्डलों में व्याप्त रहता है ]

पशवः ।

(१) विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा । ( ऋ. सं. १।२२।१९ )
इति श्रुतेर्विष्णुसहायोऽयमिन्द्रोऽमृतैः शिरोधातुभिर्मर्त्यैश्च

---

संस्कृतव्याख्या

**विष्णुसहायोऽयमिन्द्रः ।** अक्षरपुरुषस्य पञ्च कलाः प्रागाख्याताः-ब्रह्मा, विष्णुः, इन्द्रः, अग्निः, सोम इति । तत्राद्यास्तिस्रः कला हृद्याः ( केन्द्रगताः ) द्वे तु पृष्ठ्ये ( मण्डलगते ) । ब्रह्मा प्रतिष्ठाप्राणः, विष्णुर्यज्ञः-आकर्षणप्राणः, इन्द्रस्तु विक्षेपणप्राणः । निःसीम्नः पुरुषरूपेण परिच्छेदे स्वाभाविकी निःसीमताप्राप्तिप्रवृत्तिस्तत्र जागर्ति, सैव 'अशनाया' उच्यते—इति निरूपितं प्राक् । सा बलम् । तादृश्याशनायाबलावच्छिन्नो-रस एव विष्णुः ।स विष्णुस्तत्तन्मण्डलबहिर्भूतान् मनोवाक्सहचरान् प्राणानाकर्षति, आकृष्टांश्च केन्द्रस्थितायाभयप्राणाय इन्द्रपदाभिधेयाय समर्पयति, एतत्समर्पणमेवाहुतिपदेन यज्ञपदेन च तत्र तत्रोच्यते । अक्षरकलारूप इन्द्रस्तु केन्द्रगतान् मनोवाक्सहचरान् प्राणान् बहिर्विक्षिपति । इत्थं परस्परविरुद्धकार्यकरणेन इन्द्रविष्ण्वोः स्पर्धा श्रूयते-'इन्द्रश्च विष्णुर्यदपस्पृधेथाम्'-इतिपारावत प्रकरणे व्याख्यास्यमाने मन्त्रे । एकत्र केन्द्रेऽवस्थित्या तु क्वचित्तयोः सयुक्त्वम्, सखित्वमपि च

---

भाषाटीका

## पशु निरूपण ।

(१) [ पहले कहा जा चुका है कि अक्षर पुरुष की ब्रह्मा, विष्णु, इन्द्र, अग्नि और सोम ये पांच कलाएं हैं। इनमें विष्णु यज्ञ रूप है, जो बाह्य वस्तुओं को लाकर आत्मा में प्रविष्ट करता है और केन्द्रस्थ इन्द्र, केन्द्र में आई वस्तुओं को बाहर फेंकता है। इस प्रकार विष्णु और इन्द्र के द्वारा वह आदान प्रदान रूप यज्ञ सतत चलता रहता है। इस यज्ञ के चलते रहने पर भी मूल वस्तु वही बनी रहती है, यह वस्तु का तद्भाव बना रहना ही प्रतिष्ठा हैं। यह प्रतिष्ठा ब्रह्मा का काम है, अर्थात् ब्रह्मा मुख्य आधार है, इसके आधार पर विष्णु और इन्द्र के द्वारा आदान-प्रदान होता रहता है। ]

'विष्णोः कर्माणि पश्यत" आदि मन्त्र में अन्त में 'इन्द्रस्य युज्यः सखा" इन शब्दों से इन्द्र के मित्र समानकर्मा सहचारी रूप से विष्णु का परिचय दिया गया है। मन्त्र का अर्थ है कि 'विष्णु के कर्मों को देखो, अर्थात् उनका मनन करो। जिन कर्मों के द्वारा वह विष्णु व्रतानि-अन्नों को ( अपनी उपादेय प्राणरूप-वस्तुओं को )

कृष्टानामागन्तुकानां दिव्यरसानामाहुत्या यज्ञजन्यं मर्त्यामृतधातुमयं रूपान्तरं धारयमाणस्तदुभयाश्रित एव प्रतितिष्ठति । यथा शरीरधातुभिः सहोत्थायोत्थाय तदिन्द्रसहचारिणा विष्णुना समा-

संस्कृतव्याख्या

श्रूयते । उभावेव सयुजावादानप्रदानप्रक्रियया यज्ञस्य नेताराविति । इह तु मूलोक्तं 'विष्णोः कर्माणि' इत्यादिमन्त्रे अभयप्राणरूपेणेन्द्रेण सखित्वं सयुक्त्वं च विष्णोरुक्तमिति ग्रन्थकृद् व्याचष्टे । अन्योऽयमिन्द्रः क्षरकलारूप ऋषिप्राणजन्य इति निर्दिष्ट प्राङ् मूल एव । 'अक्षरपुरुषसंपृक्तः' इत्युक्त्या अक्षरस्येन्द्रस्यापि केन्द्रस्थितया परस्परमनयोः संपरिष्वङ्गस्तूक्त एव । अक्षरस्यैव विकासः क्षर इति तत्तद्रूपविकासेऽपि मुख्यमद्वैतं न व्याहन्यत इत्यसकृदुपापीपदाम । तथा च बहिःस्थपदार्थाकर्षणाय बहिर्गच्छता विष्णुना सहायमभयप्राणरूप इन्द्रोऽपि स्वसामन्तैर मृतमृत्युप्राणैः सह बहिर्गच्छति इति विष्णुसहायत्वमिन्द्रस्योक्तम् । इदमपि च स्मर्तव्यम्-यज्ञरूपस्य विष्णोः केन्द्र एव कार्यकरत्वम्, न तु स्वतो बहिर्गतिः । सर्वान् पदार्थान् बहिर्विक्षिपता, स्वयमपि च गतिशीलेन अक्षरकलारूपेणैव तत्र गत्युत्पादनमिति तेनापीन्द्रेण सह गमनं विष्णोरुपपद्यत एव । तदेतदुक्तम् **'तदिन्द्रसहचारिणा** इति । तत्पदेन मुख्यस्याक्षरकलारूपस्येन्द्रस्य सहचारो दर्शितः । इत्थमादानप्रदानप्रक्रियायां निरन्तरं प्रवर्तमानायामपि तद्वस्तु स्वरूपान्न च्यवते, तत्र हेतुः—प्रतिष्ठाप्राणरूपो ब्रह्मा इति त्रय इमे केन्द्रस्थाः । इन्द्रेण विक्षिप्यमाणाः प्राणा बहिः प्रसरन्तो ब्रह्मणा प्रतिष्ठापिताः पृष्ठंनिर्माय तदधितिष्ठन्तीति सोऽयमग्निः पृष्ठ्यः । विष्णुना समाकृष्टो बहिः

भाषाटीका

पस्पृशे – स्पर्श करता है, अर्थात ग्रहण करता है । यह विष्णु इन्द्र के साथ रहने वाला मित्र है ।' इस विष्णुनामक सहचर प्राण के साथ यह पूर्वोक्त नभ्यप्राणरूप इन्द्र पूर्ववर्णित शिरोभाग में वर्तमान अमृतमय धातुओं के साथ और शिर से नीचे के शरीर में वर्तमान मर्त्य धातुओं के साथ, अपने केन्द्रस्थान से बार बार उठता है-( बाहर जाता है ) और ( मुख्य अक्षर प्राण कला रूप ) इन्द्र के साथ ही बाहर गये हुए विष्णु के द्वारा बाहर से लाई हुई अनेक दिव्य ( देवमय-प्राणमय ) मन और वाक् सहचरित रसों की आहुतियों से यज्ञ द्वारा मर्त्य एवं अमृत धातुओं से युक्त एक अतिरिक्त रूप धारण करता रहता है, और इन आगन्तुक मर्त्यामृत दोनों को आश्रय बनाकर इन पर स्वयं भी प्रतिष्ठित होकर रहने लगता है । तात्पर्य यह

भपृष्ठे शिलाजतुगैरिकादयो दूर्वावनस्पत्यादयः—कृमिकीटमनुष्या-

संस्कृतव्याख्या

प्रदेशात् केन्द्राभिमुखमागच्छन्तस्तु प्राणा ब्रह्मणा प्रतिष्ठापिताः सोमपद-वाच्याः; तेऽपि केन्द्राभिमुखाः पृष्ठस्थिता इति पृष्ठ्या एव। केन्द्राद् बहिर्निर्गच्छ-न्तोऽग्नयः, केन्द्राभिमुखं गच्छन्तस्तु सोमा इत्येवात्र वैलक्षण्यम्। तथा च ब्रह्मणा सहचरित इन्द्रोऽग्निः, ब्रह्मणा सहचरितो विष्णुस्तु सोम इत्यपि ग्रन्थकृतान्यत्र विस्पष्टीकृतम्। आस्तामप्रकृतानुप्रसक्तिः, प्रकृते त्विदं वक्तव्यम्-विष्णुना सह बहिर्निर्गच्छति इन्द्राख्ये अभयप्राणे यदा पृष्ठप्रदेश एव विष्णु-समाकृष्टानां रसानां बहिःपदार्थसारभूतानां सोमानाम् आहुतिर्जायते, तदा मण्डलस्य पृष्ठादुपरि किञ्चिद्रूपान्तरमुत्पद्यते। यथा भूपृष्ठे शिलाजतु-गैरिका-दीनां धातूनाम्, दुर्वा-वृक्षादीनां मूलानाम्, कृमिकीटादीनां जीवानां चोत्पत्तिः प्रत्यक्षमालोक्यते। उपलक्षणमिदम्—इन्द्रेण केन्द्राद् बहिः क्षिप्ता अपि पदार्थाः पृष्ठादुपरि पृथक् स्वरूपमादधाना दृश्यन्ते, यथा लोहादिषु किट्टाद्याः, प्रस्तर वृक्षादिषु तदुच्छूनताद्याः ( पापडीति भाषायां ख्याताः ) मनुष्यपश्वादिषु लोमनखाद्याश्च। एषु च पृष्ठोपरि प्रतिष्ठितेष्वर्थेषु पृथगेव अभयसाम-न्ताद्याः प्राणास्तन्त्रं परिचालयन्ति, ते च पिण्डस्थस्य मुख्यस्येन्द्रस्यैव रूपान्तराणि। प्राणानां विकासशीलत्वाद् रूपान्तरग्रहणेऽनुपपत्त्यभावात्। तदित्थं पिण्डस्थ एवेन्द्राख्योऽभयप्राणो रूपान्तरं कृत्वा तान्यभिनवानि पृष्ठस्थान्यपि वस्तूनि गृह्णातीति 'रूपान्तरं धारयमाणः' इत्युक्तं मूले। तान्ये-तानि शिलाजतुगैरिकदूर्वान्नादीनि पशव इत्युच्यन्ते।

एत एव दूर्वान्नाद्या जग्धा रसासृङ्मांसमेदोऽस्थिमज्जशुक्ररूपेण परिणता गर्भाशये मनुष्यपश्वादिशरीररूपेण परिणमन्तीति मनुष्यपश्वादीनामपि पशुत्वमुक्तं मूले। आगन्तुकपदार्थजनितं रूपं पशुरिति तात्पर्यम्। पशुष्वपि

भाषाटीका

कि उन आगन्तुक प्राणों का बाहर निकलकर एक रूपान्तर हो जाता है। और उस रूपान्तर में भी पूर्ववत् नभ्यप्राणरूप इन्द्र और अमृत, मर्त्यरूप सातों प्राणों और उनके समष्टि रूप अग्नि की पृथक् स्थिति हो जाती है। इस प्रकार जगत् के सब नये नये पदार्थ बनते रहते हैं।

जैसे भूमि पिण्ड के ऊपर उससे ही उत्पन्न हुए, शिलाजित, गेरू आदि, दूर्वा, बनस्पति आदि और कीड़े मकोड़ों से मनुष्य पर्यन्त सब के शरीर रहते हैं, और अपना अपना पृथक् आयतन-तन्त्र रखते हैं। पृथिवीकेन्द्र से पृथक् इनका आदान

दयश्च । त इमे सर्वे पशुशब्देनाख्यायन्ते ।

[ २ ] तत्र यो यज्ञस्तं शिपिविष्टमाचक्षते । "पशवो वै शिपिविष्टम् । (मैत्रा. सं.१।६।८।) एषा वै प्रजापतेः पशुष्ठा तनूर्यज् शिपिविष्टम् । ( मैत्रा सं.१।११।९। ) इति मैत्रिश्रुतेः ।

( ३ ) परे त्वाहुः । शिपयो रश्मयः । रश्मिमण्डलस्यान्तर्विष्टं

---

संस्कृतव्याख्या

पृथगादानप्रदानप्रक्रियारूपो यज्ञः प्रवर्तते, सोऽयं पशुषु प्रवर्तमानो यज्ञः, तत्संबन्धात् पशवोऽपि च शिपिविष्टनाम्ना श्रुतिषु व्यवहृता इति स्पष्टं मूले। प्रजापतिरप्यत्र पृथगेव तन्त्रं परिचालयतीति 'प्रजापतेस्तनूः' शिपिविष्टमित्युक्तम् । पशुष्वपि पृथग् यज्ञप्रवृत्तेस्तत्राप्यन्ये पशवो भवन्ति, यथा शरीराणि पशवः, तत्रापि च पुनर्लोमनखाद्याः पशव इत्याद्यनुसन्धेया परम्परा ।

आरम्भ एवोपन्यस्तस्य "विष्णोः कर्माणि' इत्यादि मन्त्रस्यार्थस्तु 'हे ऋत्विजः' विष्णोः कर्माणि, पश्यत -अनुध्यायत, यतः-यत्प्रेरणयैव, सर्वोऽपि यजमानः, कर्माणि-अग्निहोत्रादीनि, पस्पशे-स्पृष्टवान्-कृतवान्-इति माधवाचार्य आह । इह तु वैज्ञानिकप्रक्रियायाम्-यतः-येन प्रकारेण, व्रतानि-अन्नानि-आदेयानि वस्तूनि, पस्पशे-स्पृष्टवान्-विस्तारितवान्-विष्णुः, इति ज्ञेयम् । इन्द्रस्य युज्यः सखेति तु निरूपितमेव विस्तरेण ।

**परे त्वाहुः**—पिण्डमभिलक्ष्य तदुपरि स्थितानां दूर्वागैरिकादीनां पशुत्वमाख्यातम् । अथ मुख्यस्याभयप्राणस्यापेक्षया तु पिण्डस्य ( वस्तुस्वरूपस्य )

---

भाषाटीका

प्रदान रूप यज्ञ स्वतन्त्र चलने लग गया । ये सब वस्तुएं भूमिपिण्ड के नभ्यप्राण से आकृष्ट भिन्न भिन्न प्राणों से बनती हैं—और ये सब पृथिवी के पशु कहे जाते हैं । [ इनका आदान-प्रदान रूप यज्ञ पृथक् है । उस यज्ञ के बन्द होने पर पृथिवीपिण्ड के यथावत् बने रहने पर भी ये नष्ट हो जाते हैं । किन्तु ये सब रहते हैं पृथिवी के नभ्य प्राण से संबद्ध । उसे छोड़ कर पृथक् नहीं रह सकते । न पृथिवीपिण्ड के विलीन हो जाने पर इनकी सत्ता रहती है । इसलिए ये पृथिवी के पशु हैं ।

( २ ) इनमें जो पृथक् यज्ञ की प्रवृत्ति होगई हैं उस यज्ञ कों 'शिपिविष्ट' कहते हैं । इसमें मैत्रायणी श्रुति का प्रमाण दिया गया है । पहली श्रुति का अर्थ है कि 'पशु हो शिपिविष्ट हैं' । दूसरी श्रुति में प्रजापति के पशुओं में वर्तमान शरीर ( रूप ) को–जो कि यज्ञरूप है, शिपिविष्ट कहा है । वह यज्ञ शिपिविष्ट है, इस ही कारण पशुओं कों भी शिपिविष्ट कहा गया है ।

( ३ ) कुछ विद्वान् इस शब्द का अर्थ यों भी करते हैं कि 'शिपि–अर्थात्

यत्पशुमयं प्रतिष्ठारूपं तच्छिपिविष्टम्। यथैषा पृथिवी, यथा द्यौः, प्राणिशरीरं वेति।

असंज्ञान्तःसंज्ञजीवानां पशुत्वम्।

(४) यद्यपि "एषा वाव पशिवष्टका, यद्वैष्टका" इति वाजिश्रुतौ (शत.६।२।१) "ओषध्यात्मा वै पशुः" इत्यैतरेयश्रुतौ च (६।६) अन्तःसंज्ञजीवानामेवौषधिवनस्पतीनां पृथिवीपो-

---

संस्कृतव्याख्या

अपि पशुत्वमेव। इन्द्रप्राणे एव विष्णुना समाकृष्टानां बाह्यानां प्राणादीनामाहुत्या पिण्डस्यापि जनितत्वात्। तस्मात्पिण्डस्यैव प्रतिष्ठापदवाच्यस्य रश्मिमण्डमलध्यगतस्य शिपिविष्टत्वं केचिद् व्याचक्षते। शिपयः-रश्मयः, तत्र विष्टम्-निविष्टम्-पृथिव्यादिपिण्डरूपं शिपिविष्टमिति। तथा च पृथिव्यादिपिण्डाः पशवः, तदुपरि शरीराणि पशवः, तदुपरि लोमनखाद्याः पशव इति पशुपरम्परा सिद्धा।

अथ पशुत्वेनोपन्यस्तानां शरीराणां त्रैविध्यमाह-**असंज्ञान्तःसंज्ञ।** असंज्ञा गैरिकाद्या धातवः। अन्तःसंज्ञा वृक्षलताद्याः। ससंज्ञास्तु पमशुनुष्याद्या इति। एवु अन्तःसंज्ञानामेव नामग्राहं पशुत्वं श्रुतिषूक्तम्, परं तुल्यन्यायाद्-

---

भाषाटीका

किरणों का बाहर दिखाई देनेवाला मण्डल, इस मण्डल के भीतर स्थित जो पशुमय प्रतिष्ठात्मक प्राण हैं, उन्हें शिपिविष्ट कहते हैं। जैसे यह पृथ्वीमण्डल, अथवा सूर्यमण्डल, अथवा इनमें रहनेवाले प्रत्येक प्राणियों का पृथक्-पृथक् शरीर। ये सब ही सामरूप रश्मिमण्डल के अन्तर्गत रहते हैं। इसलिये ये सब ही पशु कहाते हैं। इस मत के अनुसार दिखाई देनेवाली सब ही वस्तु पशु हैं।

## पशुओं के अवान्तर भेद।

(४) [ ऊपर कहे गये, उत्पन्न हुए नये-नये पदार्थों में प्रस्तर, शिलाजित, गैरिक आदि धातु असंज्ञ (ज्ञान रहित) होते हैं, अर्थात् इन में ज्ञानमात्रा का प्रकाश नहीं होता। और दूसरे ओषधि वृक्ष आदि अन्तःसंज्ञ कहाते हैं, भीतर ज्ञान रहते हुए भी, बाह्य इन्द्रियों का विकास इन में नहीं है। और तीसरे जो कीट से लेकर मनुष्य पर्यन्त प्राणी हैं वे सब ससंज्ञ कहे जाते हैं। इनको भलाई-बुराई का पूरा ज्ञान रहता है। ये तीनों प्रकार के जीव पशु है। ]

षाणां पशुत्वमाख्यायते, तथापि पोषत्वाविशेषात् तदसंज्ञानां ससंज्ञानां च जीवानामुपलक्षणमास्थेयम् । पोषत्वं पशुलक्षणमिति यैरुपकरणैरस्याः पृथिव्याः पोषस्तेषु सर्वेष्वेव समानन्यायात् पशुत्वोपपत्त्या त्रिविधानामपि जीवानां पशुत्वाभ्युपगमात् ।

(५) एतेभ्योऽन्येषामप्युपकरणत्वाविशेषान् पशुत्वमिष्यते ।

छन्दांसि पोषा अन्नानि सलिलान्यग्नयोऽपि च ।

पञ्चैते पशवः प्राणधृना आत्मनि शेरते ॥ इति वचनात् ।

---

संस्कृतव्याख्या

आगन्तुकपदार्थजनितत्वेन असंज्ञानां ससंज्ञानामपि च तदुपलक्षणं बोध्यमिति भावः । इमे सर्वेऽपि पृथिव्याः पोषाः-पुष्टिकराः, पृथिवीपिण्डोपरि जनिताः, पृथिव्या विस्तारकरा इति ।

अन्येऽपि सन्ति पशव इत्याह पद्येन-छन्दांसि पोषाः । छन्दांसि-

---

भाषाटीका

यद्यपि "एषा वाव पशिवष्टका यद्दूर्वेष्टका" इस वाजि (शत०) श्रुति में और "ओषध्यात्मा वै पशुः" इस ऐतरेयश्रुति में भी ओषधि, वनस्पति आदि पृथ्वी के पोषक (ऊपरी भाग में स्थित) अन्तःसंज्ञ कहलाने वाले) जीवों कों ही पशु कहा है, किन्तु पृथ्वी-पिण्ड का जो पोषक हो वह पशु है, इस परिभाषारूप लक्षण के आधार पर जैसे अन्तःसंज्ञ वनस्पति आदि में पशुत्व श्रुति बतला रही है, वैसे ही असंज्ञ और ससंज्ञों में भी अन्तः संज्ञ के समान पोषकत्व रूप लक्षण रहने से इन में भी पशुत्व सिद्ध ही है। असंज्ञ और ससंज्ञों में पशुत्व का निषेध तो किया नहीं गया है। इसलिये इनमें भी पशुत्व मानने में कोई आपत्ति नहीं। जोजो पृथ्वी पिण्ड के उपकरण हैं, उस पर स्थित रहकर उसकी व्याप्ति बढ़ाते हैं, वे सब ही समान न्याय से पशु कहे जांयगे । श्रुति में ओषधि का नाम-उपलक्षण मात्र है। जहां उदाहरण रूप से एक का नाम लेकर अन्य का भी सूचन कर दिया जाय, उसे उपलक्षण कहते हैं)।

(५) इनके अतिरिक्त भी पोषकत्वरूप लक्षण के समान दूसरे लक्षण से युक्त पिण्ड के उपकरणों कों भी पशु शब्द से ही कहा जाता है। जैसा कि श्लोक द्वारा बताया जाता है कि—

'छन्द अर्थात् पदार्थों की मर्यादा (सीमा), पोषकत्व लक्षण से युक्त पूर्वोक्त त्रिविध जीव, अन्न, जल, अग्नि ये पाचों पशु कहे जाते हैं, जो कि

**अन्तरिक्षे दिवि चैवं पशवः केचनोपपद्यन्ते, तानिह पशु-समाम्नाये प्रदर्शयिष्यामः ।**

---

संस्कृतव्याख्या

परिच्छेदाः–तत्तेषां पदार्थानामाकृतयः । परिच्छेदश्छन्द इति विस्तरेण व्याख्यातं ग्रन्थकृता छन्दःसमीक्षायां छन्दोनिरुक्तिप्रकरणे । पोषा अधुनैव व्याख्याताः–त्रिविधजीवशरीराणि । अन्नानि पृथिवीस्थितिकराणि । यज्ञ-प्रक्रियया प्रतिक्षणमन्नं गृह्णानम्–बहिः स्थितं प्राणाद्याददानमेव तत्तद्वस्तु स्वरूपस्थितं भवतीति व्याख्यातं प्राक् । तदेतदन्नं स्वरूपानुप्रवेशात् प्राक् पशु-रूपतयैव तिष्ठतीति । सलिलानि-मेघाद्युदकानि, पृथिवीपिण्डोपरि पतितानि, सरित्सरआदिरूपेण संयुज्य स्थितानि । तथैवाग्नयः–काष्ठादिसंबन्धेन प्रज्व-लितास्तत्र तत्र दृश्यमानाः । एते पृथिवीप्राणेन धृता पृथिव्यां शयानाः पशव उच्यन्ते, स्वरूपे अप्रविष्टत्वात्, सततं संयोगदर्शनाच्चेति भावः । पृथिव्या उपादानभूता आपः, चित्य-चितेनिधेयरूपेण व्याख्याता अग्नयश्च स्वरूप-प्रविष्टाः, स्वरूपनिर्मातार इति न ते पृथिवीपशुष्वन्तर्भाव्याः ।

पृथिवीपिण्डस्येव पिण्डान्तराणामपि सन्ति पशव इत्याह **अन्तरिक्षे दिवि** । चन्द्रमण्डले सूर्यमण्डले चेत्यर्थः । ते च पशुसमाम्नाये सर्वविधपशु-निरूपणे इह ब्रह्मविज्ञाने ग्रन्थान्तरे व्याख्याताः ।

---

भाषाटीका

पृथ्वी की प्राण शक्ति के आधार से स्थिरता पाकर अपने-अपने स्वरूप में सुरक्षित रहते हैं । ( यहां अन्न पद से उन वस्तुओं को समझना चाहिये, जिन को लेता हुआ पृथिवीपिण्ड अपने स्वरूप में बना रहता है । कहा जा चुका है कि प्रत्येक वस्तु आदान-प्रदान रूप यज्ञ के आधार पर ही जीवित रहती है । पृथ्वी, सूर्य, परमेष्ठी आदि मण्डलों से प्राण रूप रस लेती रहती है । उसके ही आधार पर जीवित है । वे रस पृथिवी प्राण के आकर्षण से यहां आकर इसके पशु बन जाते हैं, जैसा कि पशु के लक्षण में बताया गया है । जब तक वे यज्ञ-प्रक्रिया से पृथ्वी के स्वरूप में प्रविष्ट न हो जाँय, तब तक पशुरूप से पृथ्वी से संम्बद्ध रहते हैं । पशुरूप जल वह समझना चाहिए-जो मेघ के द्वारा बरसाया जाकर नदी, सरोवर आदि के रूप में पृथ्वी का भाग बन जाता है, और काष्ठादि में प्रज्वलित पृथिवी पिण्ड पर दिखाई देने वाला अग्नि पशुरूप अग्नि है । पृथिवी के उत्पादक जल वा अग्नि पशु नहीं हैं, वे तो इस के प्राणप्रद हैं । ]

ये इस भूलोक के पशु प्राण बताये गये हैं, इस प्रकार अन्तरिक्ष में एवं सूर्य-लोक में भी पशुप्राण होते हैं—जिनका वर्णन अन्यत्र किया गया है । यहां विस्तार भय से छोड़ दिया ।

अमृत-मर्त्य-सामपशूनां प्राणमयवाक्त्वम् ।

(६) यद्यपि प्राणाधारेणैव त्रिष्वपि लोकेष्वित्थममृतेन सार्धं मर्त्यं पशुं चावोचाम, तथापि तं तं प्राणं वाङ्मयं मनोमयं चाव्यभिचारेण विद्यात् । वागेव च तत्र यश इति वाचमेव तत् सर्वं वक्तुं प्रभवामः । अत एव मैत्रायणश्रुतौ—"अन्नं वै वाजः वाग्घि

संस्कृतव्याख्या

अत्र पूर्वतः प्राणनिरूपणस्यैवोपक्रान्तत्वात् सर्वेषामेषाम्-अमृत-मर्त्य-पशुरूपाणां व्याख्यातानां केवलप्राणरूपत्वं मा विज्ञायि, केवलस्य प्राणस्य मनोवाग्विरहितस्य क्वाप्यवस्थितेरसंभवात् । तस्मान् मनःप्राणवागिति त्रिरूपतैव सर्वेषां विज्ञेया । प्रत्युत सर्वेषां स्वरूपग्रहणे प्रथमं स्थूलतया वागेव गृह्यत इति वाक्प्रधानत्वमप्येषां श्रुतिषूक्तम्-इति वक्तुं प्रक्रमते-अमृतमर्त्य पशूनाम् । अमृतं मर्त्यं चोभयमपि पूर्वमाख्यातम् उक्थरूपं सामरूपं च भवति इति निरूपितं प्राक् । तस्य स्मरणार्थमेव सामपदमत्र पृथगुपात्तम् । अमृतमर्त्यपदाभ्यां प्रथममुक्थमण्डलमेव ग्राह्यम् । अमृतं च मर्त्यं च साम च पशवश्चेति द्वन्द्वः ।

**वागेव च तत्र यशः** । प्रथमं दृश्यमानमेव यशःपदेन गृह्यते इत्यनुपदमेव सप्रमाणं मूले वक्ष्यते । वागेव सर्वत्र प्रथमदृश्या- स्थूलत्वादिति तात्पर्यम् ।

भाषाटीका

**अमृत, मर्त्य, साम और पशु की प्राणमय वाग्रूपता ।**

( ६ ) अभी तक यद्यपि प्राणों को आधार मान कर ही अमृत, मर्त्य, साम और पशु का विवेचन हुआ है, किन्तु स्मरण रहे कि इस प्राण रूप तत्त्व के साथ मन और वाक् रूप तत्त्व भी सदा बने रहते हैं । एक के बिना दूसरा कभी रह ही नहीं सकता । और वस्तुतत्त्व की विवेचना करनेवाले को तो पहले वाक का ही स्वरूप मिलता है, पहले विवेचक की दृष्टि स्थूल पर जाती है-फिर सूक्ष्म पर । पहले वाक् का ही वैभव सामने आता है - वाक् ही उसका यश है ।

[ जो वस्तु पहले प्राप्त हो उसे यश कहते हैं-यह अभी आगे स्पष्ट करेंगे ] इसलिये वाक् ही सब कुछ है- यह भी कहा जा सकता है ।

यही लक्ष्य में रखकर मैत्रायण-श्रुति में वाक को ही सर्वरूप कहा गया है । श्रुति का अर्थ यह है कि " अन्नकों ही वाज कहते हैं, वाक् ही वाज ( अन्न ) की उत्पादक है-अर्थात् वाक् से ही वाज उत्पन्न होता है । यह वाक् स्वयं उत्पन्न

वाजस्य प्रसवः । सा वै वाक् सृष्टा चतुर्धा व्यभवत्—एषु लोकेषु त्रीणि तुरीयाणि । पशुषु तुरीयम् । या पृथिव्यां, साग्नौ, सा रथन्तरे । याऽन्तरिक्षे सा वाते, सा वामदेव्ये । या दिवि सा बृहति, सा स्तनयित्नौ । अथ पशुषु,,—( मैत्रा०सं. १।११।५) इत्येवं लोकत्रयेऽप्यमृतमर्त्ययोरुक्थयोः साम्नश्च वाक्त्वमाख्याय प्रतिलोकं पशुभावस्य वाक्त्वमाचष्टे । स्तनयित्नुरिन्द्रः । "यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी' इति (शत० १४।६।५।२१)

---

संस्कृतव्याख्या

**अन्नं वै वाजः ।** अस्यां मैत्रेयश्रुतावन्नपदेनातिस्थूलमिन्द्रियग्राह्यं दर्शनेषु महाभूतपदेनोपन्यस्तं पृथिवीपार्थिवादि तत्तद्वस्तुस्वरूपमुक्तम् । तस्य प्रसवत्वेन-उत्पादकत्वेन सूक्ष्मभूतरूपा शुक्रपदवाच्या वागुक्ता । तस्या एव पृथिव्याम्, अन्तरिक्षे, दिवीति लोकत्रये व्याप्तिरुक्ता त्रिष्वपि च स्थानेषु पशवः पृथग् व्याख्याताः ।

**त्रीणि तुरीयाणि ।** चतुर्थपदपर्यायमिदं तुरीयपदम् । चतुर्थपदं च चतुर्णां पूरणश्चतुर्थं इति वैयाकरणैर्व्युत्पाद्यते । सर्वैः संभूय चतुःसंख्या जन्यत इति सर्वेषामेव पूरणत्वम्, ततः सर्वेषामेवापेक्षाभेदेन चतुर्थत्वम्-इति सर्वेषामेव तुरीयत्वमुक्तं द्रष्टव्यम् ।

---

भाषाटीका

होते ही चार भागों में विभक्त होती है। इन लोकों के निर्माण में उसका तीन चौथाई भाग रहता और चौथा भाग इन लोकों में उत्पन्न हुए पशुओं में रहता है। वाक् का एक भाग पृथिवी में, उसके भीतर रहनेवाले कारणभूत पार्थिव अग्नि में और पृथ्वी के रथन्तर नामक साम में वर्तमान है। वाक् का दूसरा चौथा भाग अन्तरिक्ष में, वायु में और वामदेव्य नामक साम में है, तीसरा चतुर्थांश सूर्य मण्डल में, सूर्यमण्डल के अन्तर्गत इन्द्र में और बृहत् नामक सूर्य के साम में है। शेष चौथा भाग पशुओं में है। इस श्रुति में तीनों लोकों के अमृत एवं मर्त्यरूप उक्थ और साम को वाक्‌रूप कहा गया, और इन लोकों में रहने वाले पशुओं को-अर्थात् इन लोकों के पशु भाव को भी वाक् ही कहा गया है।

स्मरण रहे कि श्रुति में 'स्तनयित्नु' पद इन्द्र का बोधक है। इसमें प्रमाण शतपथ श्रुति में पढ़ा गया मन्त्र है। यह मन्त्र गर्भाधान संस्कार का है। मन्त्र में बताया है कि-जैसे इस पृथिवी पिण्ड के गर्भ में अग्नि, और जैसे सूर्य मण्डल के गर्भ में ( मध्य में ) इन्द्र नामक दिव्य तत्त्व रहता है, और जैसे दिशाओं के गर्भ में वायु तत्त्व रहता है-इस ही तरह हे स्त्री ! तुझे भी गर्भ धारण कराता हूँ।

मन्त्रश्रुतेः ।

दिव्योयमिन्द्र. पूर्वोक्तात् सर्वान्तरतमादात्मरूपान्नभ्येन्द्रादतिरिच्यते। अग्निवा इन्द्रा अमृताः अन्तरतमाः आत्मरूपाः गतिमन्तो

---

संस्कृतव्याख्या

**या पृथिव्यां साग्नौ** । अत्र पृथिवी मर्त्यभागस्योक्थम्, अग्निस्त्वमृतभागस्योक्थम् ।

अग्नेश्चयनादेव पृथिव्युत्पद्यते-इति सोऽयं चितो मर्त्योऽग्निः । तस्य शिरोरूपस्तत्रानुप्रविष्टस्तु अमृतश्चितेनिधेयोग्निः, सोग्निपदेनैवोच्यतेऽत्र । पृथिव्याः साम च रथन्तरम् । रथपदवाच्यसूर्यमण्डलकिरणजालमप्यतिक्रम्य सूर्यमण्डलपर्यन्तं पृथिव्याः प्राणानां गमनाद्-रथं तरति-अतिक्रम्य गच्छतीति व्युत्पत्तेः स्पष्टत्वात् । सूर्यमण्डले स्थित्वा यदि कश्चित् पश्येत्, तर्हि तस्यापि पृथिवीयमतिस्वल्पपरिमाणरेणुमिता दृश्या स्यात् । ततः परं तु न दृश्यतैवेति सूर्यमण्डलपर्यन्तमस्याः साम । प्राङ् निरूपितः सामपदार्थः स्मर्तव्यः । यत्तु र-थेन तरतीति व्युत्पत्तिमात्रम्, न त्ववयवार्थानुगमः' इति वैयाकरणशिरोमणिभिरुक्तम्, तद्वेदरहस्यानवगाहनमूलकमेवेति न तेन भ्रमितव्यम् । तदेवमुभयविधयोरुक्थयोः साम्नि च वाचः स्थितिर्दर्शिता । लोकान्तरयोरपि अन्तरिक्षं मर्त्योक्थम्, वातस्तत्रामृतोक्थम्, वामदेव्यं त्वन्तरिक्षसाम । विस्तरभयाद्वामदेव्यशब्दार्थोऽत्र न प्रपञ्च्यते। ग्रन्थान्तरे द्रष्टव्यः । द्यौरिति मर्त्योक्थम्, स्तनयित्नुपदवाच्य इन्द्रस्त्वमृतोक्थम्, बृहच्च द्युलोकस्य सूर्यमण्डलस्य, साम सूर्यमण्डलं हि इन्द्रनाम्ना प्राणेनोत्पादितं तद्गर्भमेवेति श्रुतिः स्पष्टमाचष्टे—

---

भाषाटीका

इस श्रुति से सूर्य मण्डल में इन्द्र तत्त्व का रहना सिद्ध है ।

(७) यह सूर्यमण्डल के गर्भ में रहनेवाला दिव्य प्राण-देवता रूप इन्द्र, पहले बताये गये नाभिकेन्द्रस्थ मुख्य इन्द्र से भिन्न है। वह मुख्य इन्द्र तो सब पदार्थों में व्यापक, सत्र के केन्द्र में रहनेवाला सबका जनक है, और यह देवता रूप इन्द्र मुख्य रूप से सूर्य मण्डल में ही बताया गया है । यह उसकी अपेक्षा बहुत स्थूल है। अस्तु, उक्त मैत्रयण श्रुति में क्रमशः वाक् को भिन्न भिन्न चार अवस्थाएं बताई गई हैं ।

[ पहले कहा जा चुका है कि प्राण अथवा प्राणगर्भिता वाक् दो रूपों में विभक्त है-चित्य और चितेनिधेय । चित्य को मर्त्य और चितेनिधेय को अमृत माना जाता है। प्रत्येक वस्तुपिण्ड 'मर्त्य' प्रतिक्षण नष्ट होने वाला है

यजूंषि प्रथमा विभूतिः । पृथिव्यन्तरिक्षदिवो मर्त्या लोकाः पिण्डरूपा मूर्तय ऋचो द्वितीया विभूतिः । रथन्तरवामदेव्यबृहन्ति सामानि प्राणमयसहस्राणि बहिर्मण्डलरूपाणि तृतीया विभूतिः । अथ पशवः पराश्रितात्मानश्चतुर्थी विभूतिः । तदित्थं मनोमय-

---

संस्कृतव्याख्या

'यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्दिशां यथा गर्भ एवं गर्भं दधामि ते" ( शतपथे १४।७।५ ) इति ।

गर्भाधाने विनियुक्तोऽयं मन्त्रो ब्राह्मणे श्रूयते । अत्र दृष्टान्तविधया द्युपदवाच्यस्य सूर्यमण्डलस्येन्द्रगर्भत्वमुक्तम् ।

तस्माद् मेघवाचित्वेन प्रसिद्धमपि स्तनयित्नुपदं मेघजनक इन्द्र उपचरितं द्रष्टव्यम् । अयं चेन्द्रः पूर्वं व्याख्यातात् केन्द्ररूपात् प्रजापतिपर्यायाद् इन्द्राद्भिन्नो त्रिषु देवेष्वन्यतमः, वाक्सहितप्राणरूप इति मूल एव व्याख्या

---

भाषाटीका

और उस पर रहने वाला चितेनिधेय, अमृत-चिरस्थायी-उस पिण्डकी स्थिति रखने वाला, उसे बनाने वाला है । यों समझो कि केन्द्रगतप्राण ही यज्ञ प्रक्रिया से पिण्ड को बनाता है, और वही फिर श्री (शिर) रूपसे निकल कर उस पिण्ड के ऊपर बैठता है । और वही पिण्डके चारों ओर फैलता है । यहां यह विशेषता बताई जाती है कि वह केन्द्रस्थ फैलनेवाला प्राण, रसरूप होने से 'यजुः' है । यजुः शब्द 'यज्जूः' से बना है, 'यत्' और 'जूः' अर्थात् गति और स्थिति दोनों जिसमें रहैं, उसे यजुः कहते हैं । उससे बना पिण्डरूप मर्त्यभाग उक्थ वा ऋक् है । और जहां तक इसकी व्याप्ति होती है-जहां तक वहपिण्ड दिखाई देता है, वह अन्तिम मण्डल साम है ]

तीनों लोकों में अग्नि, वायु और इन्द्र अमृत हैं । ये नाभि-केन्द्र-प्रतिष्ठा के नाम से प्रसिद्ध आत्मरूप हैं । ये एकत्र रहते हुए भी सतत क्रियाशील हैं । इनकों ही यजुः कहते हैं । यह वाक् की पहली विभूति है । [ केन्द्रस्थ अग्नि, वायु और इन्द्र प्रत्येक लोक के अमृतभाग और मुख्य उक्थ हैं, अर्थात् सब मण्डल यहाँ से उत्थित होते हैं ]

पृथ्वी लोक, अन्तरिक्ष लोक और द्युलोक पिण्डरूप 'मर्त्य' हैं । अर्थात् ये एक एक महान् पिण्ड के रूपमें हैं, और विनाशी हैं । इनकों ही लोक, मूर्ति और ऋक् (ऋचा) भी कहा जाता है, यह वाक् की दूसरी विभूति है । [ ये पिण्ड भी व्यवहारमें उक्थ कहाते हैं, क्यों कि साम मण्डल यहां से उठता है, और इनके ही रूप, स्पर्श आदि

प्राणगर्भिता वागियमेकवैत्र सती लोकत्रय-पशुभेदाच्चतुर्धा विभूयान्नं वाजं प्रसूते ।

| अन्नप्रसवः शुक्रं वाक् | यजुषि आत्मनि अमृते उक्थे | ऋचि लोके मर्त्ये उक्थे | सामनि अर्के | |
|---|---|---|---|---|
| मनोमयप्राणगर्भिता वाक् स्वयंभुवि । | १ अग्नौ | पृथिव्याम् | रथन्तरे | पशुषु |
| ,, ,, ,, | २ वाते | अन्तरिक्षे | वामदेव्ये | पशुषु |
| ,, ,, ,, | ३ इन्द्रे स्तनयित्नौ | दिवि | बृहति | पशुषु |
| ,, ,, ,, | ४ ............ | पशुषु | .... ...... | पशुषु |

### संस्कृतव्याख्या

तम् । बृहच्च सूर्यमण्डलस्य साम, तदन्तर्गतत्वादितरेषां साम्नामिति । सेयं श्रुतिर्मूलेऽपि व्याख्याता । तत्र वेदत्रयस्वरूपमपि स्पष्टीकृतम् । सर्वान्तरतमं रसरूपं यत्प्रसरति, तद्यजुःपदेनोच्यते, पिण्ड ऋक्शब्देन, सर्वान्त्यभूतं मण्डलं तु सामपदेनेति । तच्च साम बहिर्मण्डलपदेन, साहस्रपदेनापि चोच्यत इत्यपि स्फुटीकृतम् । सहस्रपदस्य पूर्णवाचकत्वाद्, एतन्मण्डलानां च वस्तु पूर्णमिति । एतस्य सर्वस्य स्पष्टीकरणायैव पञ्चप्रकोष्ठगर्भितं कोष्ठकमप्येकं प्रदर्शितं मूल इति तदनुसन्धेयम् ।

### भाषाटीका

हमारी इन्द्रियों के विषय बनते हैं, लोक व्यवहार इनसे ही चलता है । ] आगे रथन्तर, वामदेव्य और बृहत् नामों से प्रसिद्ध, क्रम से तीनों लोकों के 'साम' (अन्तिम मण्डल) हैं । ये प्राणमय हैं । [बाहरकी गति में प्राण की ही प्रधानता है, इस लिये इन्हें प्राणमयमण्डल ही कहा जाता है । ] वैदिक परिभाषामें इन साममण्डलों को 'सहस्र' भी कहते हैं । [ सहस्र शब्द पूर्णका वाचक है, इससे तात्पर्य यह है कि यहां मण्डल की पूर्णता हो चुकी, इससे बाहर कुछ नहीं है । इनके हजार भाग होते हैं–यह भी समय पर स्पष्ट किया जायगा ] । हम लोग पिण्डकों ही वस्तु समझते हैं, ये साममण्डल उससे बाहर हैं, इस लिये इन्हें 'बहिर्मण्डल' भी कहा जाता है । हमारी इन्द्रिय आँख, कान, त्वक्, आदिसे इन बाहरीमण्डलों का ही सम्बन्ध होता है । यह वाक्की तीसरी विभूति है । [पृथिवी लोकका साम रथन्तर नाम से कहा गया सूर्य का है । इसका तात्पर्य यह है कि सूर्यमण्डलसे प्रथम प्रादुर्भूत किरणजाल सूर्य का

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।

---

संस्कृतव्याख्या

चत्वारि वाक् परिमिता । मन्त्रोऽयं वैयाकरणैर्नैरुक्तैरन्यैश्च स्वस्वाभिमतप्रकारेण बहुधा व्याख्यातः । अनेन ग्रन्थकृतापि पथ्यास्वस्तिग्रन्थेऽस्य मन्त्रस्य दशाधिका अर्थाः प्रदर्शिताः । निगमरूपाणां मन्त्राणां बह्वर्थगर्भितत्वं सुप्रसिद्धमेव । इह तु मन्त्रस्य प्रकरणप्राप्तोऽर्थ एवं द्रष्टव्यो मैत्रेयश्रुतिसंवादी—यद् वाचः मनःप्राणगर्भितायाः सकलकारणभूतायाः शुक्ररूपायाः, अपरिमितायाः, चत्वारि, परिमितानि- परिच्छिन्नानि, पदानि-स्थानानि, अमृतोक्थ (१) मर्त्योक्थ (२) साम (३) पशु (४) रूपाणि । तानि, ये मनीषिणः ब्राह्मणाः- ब्रह्मविदः त एव जानन्ति । तत्र त्रीणि अमृत-मर्त्य-साम रूपाणि गुहायां निहितानि, नेङ्गयन्ति—न सर्वेषां प्रकाशन्ते । वाचस्तुरीयन्तु

---

भाषाटीका

रथ कहा जाता है । उस रथकों यह पृथिवीका साम तिर जाता है, अर्थात् उस प्राथमिक किरणजालसे भी ऊपर सूर्यमण्डल तक पहुँच जाता है । इसका तात्पर्य यह हुआ कि सूर्यमण्डल पर खड़ा होकर कोई पृथिवीकों देखे, तो यह एक छोटेसे रजकण केसमान उसे दिखाई देगी । उससे आगे बिलकुल न दीखेगी । इस लिये पृथिवी का साम ( अन्तिम मण्डल ) रथन्तर है । सूर्यका साम बृहत् है-अर्थात् सबसे बड़ा है । दोनों लोकों के साम उसके पेटमें आजाते हैं । वायुके सामका नाम वामदेव्य है-इसका स्पष्टार्थ यहां विस्तारभयसे नहीं किया जाता । इन तीनों लोकों के पशु ( जिनका विवरण अभी कर चुके हैं ) जो कि सदा दूसरे के आश्रित ही रहते हैं ( इस ही कारण पशु कहाते हैं ) वे वाक्की चौथी विभूति हैं । इस प्रकार यह एक ही वाक्, जिसके भीतर मन और प्राण भी प्रविष्ट हैं,तीनों लोक और उनके पशुओं के रूपमें चार प्रकारसे प्रकट होकर वाज अर्थात्-अन्नको प्रकट करती रहती है । अर्थात् इन सबकों जीवित रखने के लिये अन्न भी वह व्यापक वाक् ही देती है ।

[ कारणरूप सूक्ष्म अवस्था में इसका नाम वाक् है, और कार्यरूप स्थूल अवस्था में आजाने पर उसे अन्न वा वाज कहते हैं । इस सब विषयोंकों स्पष्ट समझाने के लिये मूल में एक कोष्ठ दिया गया है, जो इस विवरण को ध्यान से पढ़ कर अच्छी तरह समझा जा सकेगा ]

वाक् का यह विषय —'चत्वारि वाक् परिमिता पदानि' आदि मन्त्र में बताया गया है । पथ्यास्वस्ति ग्रन्थ में इस मन्त्र के दश से अधिक अर्थ ग्रन्थकार ने लिखे हैं । व्याकरण, निरुक्त आदि में भी इसके भिन्न भिन्न अर्थ बताये गये हैं । प्रकृत

गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।
( ऋ॰ सं॰ १।१२४।४९ ) इति मन्त्रोऽप्यत्रानुसंधेयः ।

पशुषु वीर्यनिरुक्तिः

( ८ ) अत्रैषां पशूनामात्मनो यद्यपि निर्वीर्यत्वं प्रागाख्यानम्,

---

संस्कृतव्याख्या

भागं पशुरूपं मनुष्याः-साधारणाः पुरुषाः, वदन्ति इति । पशूनेव सर्वे परिचिन्वन्ति, मुख्यांस्तु भागान् विद्वांस एव जानन्तीति भावः । अमृतमर्त्यभागापेक्षया पिण्डानामपि पशुत्वं व्याख्यातपूर्वं शिपिविष्टशब्दार्थनिरूपणे । त एव च पिण्डाद्या लोकैः प्रत्यक्षेण दृश्यन्त इति पशुष्वेव लोकव्यवहारः प्रतिष्ठितः ।

ननु यदि मानुषशरीराण्यपि पशुरूपाणि, तदा तेषामात्मा निर्वीर्यः स्यात्, पशूनां निर्वीर्यताया उक्तत्वात् । ततश्च कथं तत्र ब्राह्मणत्वादिसंभवः, ब्राह्मणत्वादीनां वीर्यमूलकताया व्याख्यातत्वादिति पूर्वापरविरोधं परिहरन्नाह— **पशुषु वीर्यनिरुक्तिः** । अस्त्येव पशुष्वपि वीर्यम्, यदाश्रिताः पशवः, तत्पिण्डापेक्षया अत्यल्पबलत्वात्तु निर्वीर्यत्वं प्रागुक्तमिति भावः । यावदस्ति वीर्यम्, तत्रापि तारतम्यमस्त्येवेति तन्मूलकमेव ब्राह्मणत्वादि द्रष्टव्यम् । स्पष्टमेतन्मूले, न व्याख्यासापेक्षम् ।

---

भाषाटीका

में इस मन्त्र का यह अर्थ है कि —वाक् के ( तीन लोक और पशु ) चार रूप हैं— इन चारों को विद्वान् मनीषी ही जान सकते हैं । इनमें पहले के तीन रूप गुहा में ( अज्ञान में ) अन्तर्निविष्ट रहते हैं —जिन्हें साधारण जन नहीं देख पाते । चौथा जो पशुरूप है—उसही को मनुष्य जान पाते हैं । [ कहा जा चुका है कि नभ्य प्राण की दृष्टि से पृथिवी पिण्ड आदि भी पशुही माने जाते हैं । उन पशुओं से ही जनसाधारण का व्यवहार चलता है, उसके कारणप्रपञ्चकों तो विद्वान् ही जान सकते हैं ]

इस प्रकार इस मन्त्र द्वारा भी यह सिद्ध होता है कि वाक् का ही यह संपूर्ण प्रसार है, इस मन्त्र का भी ध्यान से मनन करना चाहिये ।

( ८ ) यहां यह स्मरण रखना चाहिये कि पहले यद्यपि पशुओं को निर्वीर्य कहा गया है, किन्तु यह निर्वीर्यता अपेक्षाकृत है अर्थात् अपने से बहुत बडे अपने आश्रयभूत पृथ्वी आदि पिण्डों के वीर्य की अपेक्षा ये पशु निर्वीर्य ही हैं—अर्थात्

तथापि तदाश्रयपृथिव्याद्यपेक्षयाऽल्पवीर्यतया तन्नेयम् । वस्तुतस्तु तेषामप्यात्मनोऽपेक्षाकृतं ब्राह्मणत्वं क्षत्रियत्वं वैश्यत्वं शूद्रत्वं वा यथायथं तारतम्यादुपपन्नं दृश्यते । निर्वीर्यैकवीर्य-द्विवीर्य-त्रिवीर्याणा मुत्तरोत्तरं चाधिकं माहात्म्यं कल्प्यम् ।

---

संस्कृतव्याख्या

इदानीं पशूनां मुख्यप्राणभूतस्येन्द्रस्य मुख्योक्थापेक्षया अर्द्धत्वं तत्रोपपत्तिं च समुपपादयन्नाह—पशूनामात्मनः । सर्वतः साम्येन यत्प्रसरति, तद्वर्त्तुलमेव भवेत्, तस्मात् पृथिव्यादिपिण्डानां वर्तुलत्वं दृश्यत एव । ये तु पृथिव्यादिपिण्डकेन्द्राद्विभिन्नास्ता बहिर्गच्छन्ति यजुःपदवाच्या रसाः, ते प्रत्येकमेकैकदिग्गामिन इति विभिन्नासु दिक्षु तैर्यजुर्भिरुत्पादितानां पशूनामेकैकदिग्गामिभिः प्राणैरुत्पादितत्वादर्द्धत्वम्-अर्थात् पूर्णापेक्षयाऽतिन्यूनत्वमेव प्रसक्तम्, तस्मात्ते पशवोऽर्द्धेन्द्रा द्रष्टव्याः । अर्द्धशब्दोऽयमंशवाची । तत एव च पशूनां केषामपि न वर्तुलत्वमत्रलोक्यते, अपि तु प्रलम्बता तत्र दृश्यते । तत्र च एकस्यां दिशि सवीर्यता, विपरीतदिशि तु न वीर्यविकासः । विभिन्नदिग्गामितयैव च तत्र आग्नेयाः प्राणाः, सौम्यप्राणाः—इति भेदद्वयं प्रसज्जते, सूर्याभिमुखदिशि गता आग्नेयाः, तद्विपरीतदिशि तु सौम्याः । सोमो यद्यपि सर्वत्रैव व्याप्नोति, तथापि सौराग्निनाभिभूतः स सूर्यदिशि न प्रभवति, तत एव सूर्याभिमुखदिग्गामिनः प्राणा आग्नेयाः-अग्निप्रधानाः । विपरीतदिशि तु पृथिव्या व्यवधानान्नाग्निप्रसर इति तद्दिशि सौम्याः-सोमप्रधानाः प्राणाः । सूर्याभिमुखी दिगेवोच्यत आग्नेयी, विपरीता तु सौम्या । सूर्यमण्डलस्याग्निप्रधानत्वात् । यद्यपि इन्द्रगर्भत्वं सूर्यस्यानुपदमुक्तम्, तथाप्यग्निवायिन्द्रा अग्नेरेवावस्थाविशेषा इति सर्वेऽपि सामान्येनाग्निपदेनोच्यन्त इति न विस्मर्तव्यम् । अग्नीषोमाविमावक्षरकलात्वेन व्याख्यातपूर्वौ । तन्मूलकमेव वाक्प्रधानानां तत्प्राणानामपि द्वैविध्यमिदं निरुक्तम् । एतन्मूलक एव च स्त्रीपुरुषभेदव्यवहारोऽपि प्रवृत्तः, सौम्यप्राणप्रधाना स्त्री, आग्नेयप्राणप्रधानस्तु पुरुष इति । सोऽयं पुंस्त्रीभावः सार्वत्रिको जडचेतनसाधारण इति भाव्यम् । तदेतत्सर्वं सुस्पष्टसरलैः पदैर्मूल एवोपपादितमिति न तत्र विस्तरापेक्षा ।

---

अति अल्पवीर्य हैं, किन्तु इनमें भी वीर्य अवश्य है । क्योंकि इनका भी पृथक् आत्मा है, और कोई आत्मा वीर्य-शून्य नहीं होता । इस वीर्य के ही कारण पशुरूप मनुष्य आदि में भी ब्राह्मण, क्षत्रिय, वैश्य शूद्र आदि व्यवस्था आपेक्षिक तारतम्य से वर्तमान रहती है ।

इन में भी निर्वीर्य शूद्रों की अपेक्षा-एक वीर्य-दो वीर्य एवं च तीनों वीर्य वालों की आत्मा उत्तरोत्तर महान् मानी जाती है—यह भी समझना चाहिये ।

गोत्वादन्नश्रुतिश्च ।

(४) अथवा उपादानकारणे गोशब्दः । "ततो या योनि-रुदाशिष्यत, सा गौरभवत् । योनिर्वा नामैषः"–इति मैत्रिश्रुतेः । गवामन्नरसोपनायकत्वाच्चान्नत्वम् । ज्योतिर्गौरायुरितित्रिरसस्य सूर्यस्य गोभ्यः सर्वे रसाः सर्वाण्यन्नानि पृथिव्यामुत्पद्यन्ते, तानि-

---

संस्कृतव्याख्या

वैव सर्वे लोका जीवन्तीति व्यापकत्वमपि तस्य न विरुद्धम् । तदित्थं सर्वोऽपि विराट् ताण्डिश्रुत्या गोपदेन संगृहीतेति सुनिपुणं भाव्यताम् ।

अन्यमप्यर्थं गोशब्दस्य प्रमाणयति-अथवोपादानकारणे । तथा च गौर्विराडित्युक्त्या सर्वेषामुपादानं विराड् इत्युक्तं भवति । पृथिव्यादिपिण्डानां च सर्वेषामुत्पद्यमानानामन्नादीनामुपादानत्वाद् विराट्त्व सुसिद्धमेवेति अनया श्रुत्यैकवाक्यतापि सुसम्पन्ना । ननु पूर्वं वाजिश्रुत्या अन्नं गोशब्दार्थ इति ख्यापितम् मैत्रायण्यां श्रुतौ तु बहुष्वर्थेषु गोशब्दस्योक्तेष्वपि अन्नं गोशब्दार्थ इति नोक्तमिति कथमेकवाक्यता स्यादित्याशङ्कायां समाधत्ते—अन्नरसोपनायक । अन्ने रसो गोभिरेवोत्पाद्यते इति रसप्रधानस्यान्नस्य गोशब्दार्थत्व न विरुद्धम् । केयं गौः, ययाऽन्ने रस उत्पाद्यते इति स्पष्टयति—ज्योतिर्गौरायुरिति ।

---

भाषाटीका

गर्भित लोकों को विराट कहना भी सिद्ध हो गया। इसीप्रकार अन्न को विराट कहनेवाली कौषीतकिश्रुति और गौ को विराट् कहनेवाली ताण्ड्यश्रुति में भी कोई विरोध नहीं रहा, क्योंकि गो शब्द का पञ्चम अर्थ अन्न भी मैत्रायणश्रुति में बताया गया है । यों सब श्रुतियों का परस्पर समन्वय हो गया ।

(४) [ अन्न के उपादान कारण के लिये गोशब्द का प्रयोग किया जाता है। यह उक्त विवेचन से सिद्ध हो चुका है, फिर भी स्पष्ट ज्ञान कराने के लिये और भी कहते हैं, ] अथवा प्रत्येक उपादान कारण के लिये गो शब्द प्रयुक्त होता है। यह भी मैत्रिश्रुति से सिद्ध है "उस पदार्थ की जो योनि ( कारण ) रह गयी, वह गौ हो गई । क्योंकि 'गौ' यह कारण का नाम है, यह श्रुति का अर्थ है। गौ अन्न में रस देती है-इस कारण गौ-अन्न का भी नाम है । ज्योति, गौ, आयु-ये तीनों सूर्य के रस–मनोता पूर्व कहे जा चुके हैं, इन तीनों में गोनामक रस से सभी रस

न्द्रो भुङ्क्ते-इति बोध्यम् ।

( ५ ) अन्नोर्क्प्राणमयत्वाद्वैषा विराडेव यज्ञः । स हीन्द्रप्रतिष्ठस्तदर्थश्चेति । अत एव श्रूयते-"सर्वो वै यज्ञ इन्द्रस्यैव । सेन्द्रो यज्ञः ।" ( श० ११।१।३।४ )" "इन्द्रो वै यज्ञस्य देवता" ( श०।२।३।२।३८ ) इति ।

---

संस्कृतव्याख्या

अनुपदमेवोपपादिताः सूर्यरूपेमे त्रयो रसाः, तत्र या गौः, सैवान्नरसानामुत्पादिका विज्ञेया ।

तथा च पृथिवीरसभूता गौरन्नानामुपादानं कारणम्, सूर्यरसभूता गौस्तु तत्र रसोत्पादिकेति सर्वथाप्यन्नानां गोत्वे न कापि विप्रतिपत्तिः । एवमन्नस्य विराट्पदवाच्यत्वमुपपाद्य यज्ञस्यापि विराट्त्वमुपपादयति – अन्नोर्क्प्राण । प्राणेगृहीतमन्नं पूर्वमूर्ग्रूपतां गच्छति, तदनु च प्राणरूपमेव संपद्यते । अन्नप्राणयोर्मध्यमतावस्था ऊर्क् इति प्रोच्यते, यामोज इति व्यवहरन्ति लौकिकाः । इदमन्नोर्क्प्राणानां परस्परपरिवर्तनमेव यज्ञ इति विस्तरेण निरूपितं ग्रन्थकृता यज्ञग्रन्थेषु । विराट्पदेन च प्राणा अन्नं चेत्युभयमपि प्रत्यपीपदम् ।

तस्मादन्नस्य प्राणरूपताप्राप्तिरूपो यज्ञोऽपि विराट्पदवाच्येष्वन्तर्भवति । यज्ञस्य चेन्द्रेण प्रधानः सम्बन्धः-इति इन्द्रोपि विराडुच्यते । इन्द्रस्य च सहचारी उपेन्द्रपदवाच्यो विष्णुरिति सोपि विराट्पदवाच्यः श्रुतिपुराणादिषु । अत्र सर्वत्र स्पष्टार्थाः श्रुतयः प्रमाणत्वेनोपन्यस्ताः, "विष्णोः कर्माणी" त्यादिमन्त्रश्च व्याख्यातपूर्वः । अन्नमत्र व्रतशब्दार्थ इत्यपि श्रुत्या प्रमाणीकृतम् । ननु

---

भाषाटीका

और सभी अन्न पृथ्वी में उत्पन्न होते हैं । तथा इन सभी अन्नों व रसों का भोग इन्द्र करता है । यह ध्यान में रखने की बात है ।

( ५ ) [ कई स्थानों में श्रुतियों में विराट् को यज्ञ बताया गया है, उसे स्पष्ट करते हैं कि ] यह विराट् अन्न ऊर्क् और प्राण रूप है, अतः विराट ही यज्ञ शब्द से कही जाती है । [ यज्ञ की परिभाषा यही है कि जो अन्न प्राप्त हो, वह ऊर्क् रूप होता हुआ प्राणरूप हो जाय । अन्न और प्राण की मध्यकी अवस्था को ऊर्क् कहा जाता है, जिसे लौकिक संस्कृत में ओज कहते हैं । ] यज्ञ इन्द्र के ही आश्रित है और इन्द्र के लिए ही किया जाता है, यह श्रुतियों में वर्णन किया गया है । यथा—'सब यज्ञ इन्द्र के ही हैं । "यज्ञ इन्द्र के साथ ही हैं ।" "इन्द्र ही यज्ञ की देवता हैं' इत्यादि ।

(६) "यज्ञो वै विष्णु"रिति बहुधा श्रूयते। तेनायं विराड् विष्णुरुपेन्द्रश्चोच्यते। तस्य नित्यमिन्द्रेण संयोगात्। तथा च श्रूयते।

"विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।
इन्द्रस्य युज्यः सखा। (ऋ. सं.१।२२।१९)" इति। "अन्नं वै व्रत" मिति ( ) वाजिश्रुतिः।

(७) अपि च प्राणमयकोशे प्रत्यात्मानां बहूनां प्राणानामपि विराट्त्वमाख्यायते। "दशदशिनो विराट्" (कौषी० १७।३) दशाक्षरा विराट् ( ) इत्यादि श्रुतेरस्याः प्राणमयविराजो दशात्म०

---

संस्कृतव्याख्या

ननु भोः एतैः श्रुतिप्रमाणैरन्नस्यैव विराट्त्वं संसाधयसि, प्रकरणारम्भे च प्राणरूपस्याग्नित्रितयस्य संहतस्य विराट्पदवाच्यतोक्तेति पुनरपि पूर्वापरविरोध इत्याशङ्कायां प्राणानामपि विराट्पदवाच्यत्वे श्रुतीः प्रमाणयति–अपि च प्राणमयकोशे। पञ्चसु कोशेषु वेदान्तप्रसिद्धेषु योऽयं प्राणमयः कोशो द्वितीयः तत्र दश प्राणा अन्तर्भवन्तीत्यनुपदं वक्ष्यते। ते प्राणा अपि विराट्शब्देन श्रुतिषूक्ता इत्याह दशदशिनी। दशदशेति वीप्सा व्याप्तिमाह। दश दश यत्र विद्यन्ते सा दशदशिनी। यत्र यत्र दश धर्माः संहन्यन्ते, सा सर्वापि विराडित्यर्थः। दशदशिनीपदेन दशाक्षरापदेन च प्राणरूपा विराडेवो-

---

भाषाटीका

(६) "यज्ञ ही विष्णु है" यह भी (श्रुतियों में अनेक स्थानों में) कहा जाता है। इससे विराट् (यज्ञ) शब्द से विष्णु अर्थात् उपेन्द्र का भी बोध होता है। विष्णु इन्द्र के सदा साथ रहते हैं, इसलिये उनको उपेन्द्र भी कहते हैं। जैसा कि श्रुतियों में कहा है। 'विष्णोः कर्माणि'—इस मन्त्र की व्याख्या पहले आचुकी है। इस मन्त्र में व्रत शब्द का अर्थ अन्न है, "अन्न व्रत है" यह वाजिश्रुति इसमें प्रमाण है।

[७] यहाँ पुनः यह शंका होती है कि अब तक जिन श्रुतियों का प्रमाण दिया गया है, उनसे अन्न का वा अन्न के उपादान कारण का नाम विराट है यही सिद्ध होता है। किन्तु इस प्रकरण के आरम्भ में अमृताग्नि, मर्त्याग्नि और पाशुकाग्नि नाम से प्रसिद्ध प्राणरूप अग्नि को विराट् कहा गया है। उसका कोई प्रमाण अभी तक प्राप्त नहीं हुआ, इस शंका को मिटाने के लिये प्राण भी विराट् शब्द का वाच्य है

षत्वं निर्धारयन्ति । तद्यथा-"दश वा एतानग्नींश्चिनुते-अष्टौ धिष्ण्यान् । आहवनीयं च गार्हपत्यं च । तस्मादाहुर्विराडग्निरिति । "एतस्य ह्यैवैतानि सर्वाणि रूपाणि" (शत० १०।३।२।२१) इति वाजिश्रुतौ श्रूयते । विभिन्ना वा दश धर्मा यत्र संहन्यन्ते, सा

---

संस्कृतव्याख्या

रूयते—इति वाजिश्रुत्या संसाधयति । **दश वा एतानग्नींश्चिनुते ।** अग्निचयनप्रकरणोक्ता वाजिश्रुतिरियम् । अत्र यज्ञाङ्गभूता दशाग्नयः प्रदर्शिताः, तेषां दशत्वात् विराड्रूपता चोक्ता । अग्निपदं च प्राणबोधकमिति प्रतिपादितमनेकधा । यद्यपि कर्मकाण्डप्रकरणे यज्ञे स्थिताः प्रत्यक्षं दृश्यमाना एवाग्नयो ग्रहीतुमुचिताः, तथापि 'एतस्य ह्यैवैतानि रूपाणि' इति व्याहरन्ती श्रुतिः दशानामग्नीनामुपपत्तिप्रदर्शनाय प्राणाग्निमपि गूढं निर्दिशत्येवेति भावः ।

तदित्थं विराट्शब्दार्थविवरणे विभिन्नार्थाः श्रुतीस्तदेकवाक्यतां च संक्षेपेण प्रदर्श्य श्रुतिषु विराटपदं दशधर्मसमुदाये परिभाषितमिति निष्कर्षमाह—**विभिन्ना वा दश धर्माः ।** दशेति योगजा प्रथमा महती संख्या । सा विशेषेण राजते (महत्त्वात्) इति विराट्पदेनाख्याता । छन्दःस्वपि एकतमं विराट्छन्दः । तत्र दशाक्षरपादमिति दशसंख्यायोगो यत्र यत्र, स दशावयवकः

---

भाषाटीका

यह आगे कहा जाता है ] तथा प्राणमय कोश के अन्तर्गत बहुत से प्राणों को भी विराट कहा जाता है 'विराट् दस दस भागवाली है । 'दस अक्षर ( भाग ) की विराट है' इत्यादि श्रुतियों से इस प्राणमय विराट् के दस अवयव ( भाग ) निश्चित होते हैं । जैसा कि वाजसनेय शाखा की श्रुति में ( शतपथ में ) कहा गया है—"दस अग्नियों का चयन करते हैं—आठ धिष्ण्य ( ऋत्विक लोगों के नामों से प्रसिद्ध छोटी वेदियाँ ) ( ९ ) आहवनीय और ( १० ) गार्हपत्य । इन दस अग्निस्थानों के कारण कहा करते हैं कि अग्नि विराट् है । विराट दस अक्षर ( विभाग ) की होती है । इन सभी दस भागों में विभक्त अग्नियों को एक रूप से 'अग्नि' नाम से कहते हैं । इस एक अग्नि के ही ये दसों रूप हैं ।"

उपर्युक्त सम्पूर्ण विवेचन का तात्पर्य यह निकला कि भिन्न-भिन्न प्रकार के दस धर्म ( तत्त्व ) जहाँ एकत्रित हों उसे वैदिक परिभाषा में 'विराट' कहा जाता है। [ संयोगज संख्याओं में दस पहली संख्या है । दस संख्या ही सबसे पहले दो अङ्कों

विराट् । तद्यथा—

---

संस्कृतव्याख्या

समुदायो विराट्पदेन श्रुतिषु विवद्यते । तद्यथा ताण्डिश्रुतौ गौर्विराडुक्ता, गोशब्दार्थश्च प्रथमो 'वाक्' इति मैत्रिश्रुतौ व्याख्यातम् । तथा च सर्वोपादानभूता व्यापिका वाग् विराट्पदेनोच्यते, तत्रैव वेदान्तग्रन्थोक्तयः पुराणाद्युक्तयश्च प्रकरणारम्भ उक्ताः समन्विता भवन्ति । तस्याः सर्वस्थूलोपादानत्वात्, सर्वरूपत्वात्, व्यापकत्वाच्च । सापि दशावयवेति पूर्वं प्रतिपादितम् । पृथिव्याम्, अग्नौ, रथन्तरे, अन्तरिक्षे, वाते, वामदेव्ये, दिवि, इन्द्रे, बृहति, पशुषु चेति । प्राणेषु, पिण्डेषु, सामसु पशुषु च वाग्व्याप्तिं प्रदर्शयन्ती श्रुतिश्चाप्युदाहृतपूर्वा । तथैव गौरिडा सापि गोत्वात् विराट्पदेनोच्यते—तस्या विवरणेऽपि उदाहृतायां श्रुतौ दशावयवाः परिचीयन्ते—पृथिवी, अन्तरिक्षम्, द्यौः, कृषिरिति चत्वारः पादाः । आदित्यश्च शिरस्त्वेनोक्तः, अग्निर्मुखरूपतयोक्तः, वातः प्राणतया, गायत्री चाभिधानीत्युक्तम् । तानीमानि चत्वार्यङ्गानि । शिरःपदं चक्षुष उपलक्षकम् । आदित्यस्य विराट्-चक्षूरूपतापि सर्वत्र श्रुतिषु पुराणेषु च श्रूयते स्मर्यते च । सर्वेषामेषामङ्गानां समष्टिश्च तनुः शरीरादिपदवाच्या दशमीति विवरणेन दश सम्पद्यन्ते इडाया अवयवाः ।

---

भाषाटीका

में लिखी जाती है । इसलिये विशेष रूप से राजित ( शोभित-महत्वशाली ) होने के कारण उसे विराट् कहते हैं । छन्दों में भी दस दस अक्षरों का एक एक पाद जिसका हो—उसे विराट् कहते हैं । यही कारण है कि दस दस के समुदाय को विराट् कहने की एक परिभाषा हो गई । जैसा कि ताण्ड्यश्रुति में गौ को विराट कहा है और गो शब्द का अर्थ मैत्रिश्रुति में वाक् वा इडा बताया हैं, वहाँ भी दस दस तत्त्वों का समुदाय हैं । इडारूप गौ को जो विराट् कहा है, उसके अङ्गों के सन्निवेश में—पृथिवी, अन्तरिक्ष, द्यौ और कृषि नाम के चार पाद, ५ आदित्यरूप शिर और ६ चक्षु, ७ अग्निरूप मुख, ८ वायुरूप प्राण, ९ गायत्रीरूप अभिधानी और इन सबका समष्टिरूप १०एक शरीर ये दस पदार्थ आ जाते हैं । इसी प्रकार वाक् रूप गौ को विराट् कहा गया है, उसमें भी पृथिवी, अग्नि, रथन्तर, अन्तरिक्ष, वायु वामदेव्य, द्यु, इन्द्र, बृहत् और पशु इन दस पदार्थों का सन्निवेश बताया जा चुका है । यज्ञ को विराट् कहते हैं, उसमें भी दस पदार्थों का सन्निवेश होता है जिन्हें मूल में श्लोकद्वारा प्रदर्शित किया जाता है ]

प्राणा[1]श्च देवा[2] ऋषयो[3] ग्रहा[4]श्च स्तोमा[5]श्च पृ[6]ष्ठान्यृ[7]तवो दिश[8]श्च
छ[9]न्दांसि सामानि[10] दशाक्षरैषा विराट् प्रतिष्ठां लभतेऽधियज्ञम् ॥१॥
वाक्प्राणचक्षुःश्रुतयः पुरीष्यं शिश्नं च नाभिर्दशमीति प्राणाः ।
आदित्यवाय्वग्निविधाभिरग्निस्त्रिधा द्विधा चन्द्रदिशस्तु सोमः ॥२॥

---

संस्कृतव्याख्या

अथ यज्ञो विराट्पदस्य मुख्योऽर्थः श्रुतिषु, तत्र दश धर्मान् समवेतानाह पद्येन-प्राणाश्च देवाः । एतानि दश तत्त्वानि अक्षरस्थानीयानि यज्ञे समवेतानि । एषां समवाय एव यज्ञ इति अधियज्ञम्-यज्ञे विराट् प्रतिष्ठां लभते-यज्ञो विराड्रूपेणोच्यत इति भावः ।

इमान् दशाप्यर्थान् विवृणोति पद्येरेव क्रमेण । तत्र प्रथमोक्तं प्राणपदार्थं विवृणोति-वाक्प्राणचक्षुः । शरीरे यानि दशच्छिद्राणि, तदधिष्ठिता दश प्राणाः श्रुतिषु अनेकत्रोक्ताः । त एवात्र संगृहीताः । वाक्पदेनात्र वागधिष्ठानं मुखं ग्राह्यम् । प्राणपदेन च घ्राणेन्द्रियाधिष्ठानं नासिकाच्छिद्रद्वयम् । प्राणचक्षुःश्रोत्रेषु छिद्रद्वयमिति षट्, मुखं, शिश्नं, पुरीष्यं ( गुदा ) चैकैकमिति नव । नाभिर्दशमीति दश प्राणाः । तस्माद् दशसंख्यायोगात्प्राणाः पृथगपि भवन्ति विराट्पदवाच्याः । अथ द्वितीयं देवपदार्थं निर्वक्ति-आदित्यवाय्वग्नि । प्रथमं देवा द्विविधाः-अग्निरूपाः सोमरूपाश्च । तत्राग्निस्त्रिविधः-आदित्यो वायुरग्निरिति । सोमश्च द्विविधः-चन्द्रसोमः दिक्सोमश्चेति । उभयत्र सोमः प्रधानः-

---

भाषाटीका

( १ ) यज्ञ में १ प्राण, २ देवता, ३ ऋषि, ४ ग्रह, ५ स्तोम, ६ पृष्ठ, ७ ऋतु, ८ दिशा, ९ छन्द और १० साम-ये दश अक्षर ( भाग ) होते हैं । इनका समुदाय ही यज्ञ है । इसलिये यज्ञ में विराट् प्रतिष्ठित है । इन दसों में प्रत्येक का विवरण यहाँ लिखा जाता है—

( २ ) पहले प्राण का विवरण है कि—१ वाणी ( मुख ) २-३ दो नासिका, ४-५ दो नेत्र, ६-७ दो कान, ८ पायु ( मल त्याग करने का इन्द्रिय ) ९ शिश्न ( मूत्रेन्द्रिय ) और दशवाँ नाभि ये दस प्राण के भेद हैं । ( यहाँ प्राण शब्द से शरीर के छिद्रों में अधिष्ठित प्राण लिये हैं । वे शरीर में दस हैं, अतः प्राणों को भी स्वतंत्र रूप से विराट् कहते हैं । )

द्वितीय तत्त्व हैं देवता—आरम्भ में देवताओं के अग्नि और सोम नाम से दो विभाग किये जाते हैं । उनमें अग्नि के तीन भेद हैं—आदित्य, वायु, अग्नि । और

देवास्त्रयस्त्रिंशदहानि चाग्नीषोमोयरूपा द्विविधा हि देवाः ।
देवास्त्रयस्त्रिंशदिहाग्निपूर्वा विष्णूत्तमा एष विराट् स यज्ञः ॥३॥

संस्कृतव्याख्या

चन्द्रमण्डले परमेष्ठिमण्डले च । परमेष्ठिमण्डलसंबन्धी सोमो दिक्षु व्याप्तत्वाद् दिक्सोम उच्यते । स एव सोमो दिक्पदेन व्यवह्रियते इति वा । तदित्थं पञ्च देवाः ।

अथ त्रयस्त्रिंशद् देवा इति प्रसिद्धिं द्वेधा व्याकरोति–देवास्त्रयस्त्रिंशद् । साममण्डलं यदनेकधा व्याख्यातपूर्वम्, तन्मूलकेन्द्रादारभ्यावसानपर्यन्तं त्रयस्त्रिंशति भागेषु विभज्यते । पृथिवीपिण्डस्य रथन्तरं सामेह निदर्शनत्वेन ग्राह्यम् । पृथिव्याः साम्नो ये त्रयस्त्रिंशद् भागाः, ते प्रत्येकम् अहःपदेन श्रुतिषु परिभाष्यन्ते । त्रयस्त्रिंशदहानीति । तत्रैकैकमहः देवतात्वेन परिगण्य त्रयस्त्रिंशद् देवा भवन्ति । तत्रापि चाग्नीषोमरूपता न व्यभिचरति–एकविंशतिरहानि आग्नेयानि, परतो द्वादश तु सौम्यानीति । विवरीष्यत इदमनुपदमेव पारावतप्रकरणे । अथ प्रकारान्तरेण त्रयस्त्रिंशद् देवानाह–पद्यस्योत्तरार्द्धेन । अग्निवाय्वादित्या ये त्रयो देवा आख्याताः, तेषु अग्नेरष्टौ वसवः, वायोरेकादश रुद्राः, सूर्यस्य च द्वादशादित्याः—इत्येकत्रिंशत् सम्पद्यन्ते । अत्र द्वादशसु आदित्येषु विष्णुरन्तिमो मन्यते । अत एवैतरेयश्रुतिराह—"अग्निर्वै देवानामवमो विष्णुः परमः" इति ( ऐत० १।११ ) । अवमः—प्रथमः,

भाषाटीका

सोम के दो भेद हैं—चन्द्रसोम और दिकसोम । इस प्रकार पाँच देवता हुए ।

( ३ ) तैंतीस देवता जो प्रसिद्ध हैं—उन्हें यों समझना कि—पृथिवी का साममण्डल ( रथन्तरसाम ) जो पहले बताया जा चुका है, उसके तैंतीस भाग ( पृथिवी केन्द्र से सूर्य तक ) किये जाते हैं । उनमें प्रत्येक भाग को 'अहन्' शब्द से श्रुतियों में कहा गया है । उनमें प्रत्येक को ही देवता कहने से तैंतीस देवता बन जाते हैं । इनमें भी अग्नि और सोम दोनों प्रकार के देवता हैं । २१ भाग पर्यन्त अग्नि है, और आगे के १२ भाग सोम के हैं । दूसरे प्रकार से तैंतीस देवता इस प्रकार बताए जाते है—अग्नि के ८ वसु, वायु के ११ रुद्र, सूर्य के १२ आदित्य सब मिलकर एकतीस हुए ।

इनमें बारहवें आदित्य का नाम विष्णु है । अतः श्रुतियों में यह कहा जाता है कि अग्नि देवताओं में सबसे पूर्व और विष्णु सबके अन्त में हैं । विष्णु का

स्तोमैर्वषट्कार इहास्ति षड्भिः प्रजापतिः स्तोमचतुष्टयात्मा ।
इत्थं वषट्कारप्रजापती द्वौ ब्रवीति देवो मुनिरैतरेयः ॥ ४ ॥

---

संस्कृतव्याख्या

परमः–अन्तिमः । अस्याः श्रुतेरेवार्थोऽत्र पद्य उक्तः । 'अग्निपूर्वाः' 'विष्णूत्तमाः' इति । स एव विष्णुर्देवेषु प्रधानत्वात्—विराडिति यज्ञ इति चाख्यायते ।

एवमेकत्रिंशन्मितान् देवान् सर्वसम्मतान् संक्षेपेणोक्त्वा शेषयोर्द्वयोर्विषये विप्रतिपत्तीराह—**स्तोमैर्वषट्कार** । साम्नः केन्द्रादारभ्यान्तिमपृष्ठपर्यन्तं ये त्रयस्त्रिंशद् भागा अनुपदमेवोक्ताः, तत्राद्यास्त्रयः पिण्डे संनिविशन्ते, तान् विहाय परतः षड्भिः षड्भिरेकैकः संघातः प्रकल्प्यते, स संघातवाचकेन स्तोमपदेन व्यवह्रियते । तत्र त्र्यादुत्तरं षडिति—नवपर्यन्तं त्रिवृत्स्तोमः, ततः षड्भिः पञ्चदशस्तोमः, एकविंशस्तोमः त्रिणवस्तोमः, त्रयस्त्रिंशत्स्तोमः— इति पञ्च स्तोमाः । त्रयस्त्रिंशतो मध्ये ( केन्द्रे ) सप्तदशः, सोपि केन्द्रं प्रजापतिस्थानमिति स्तोमेषु परिगण्यते । तेन षट् स्तोमाः जायन्ते । एषु एकविंशतिपर्यन्तमग्निस्तिष्ठति, परतस्तु सोम इत्युक्तपूर्वम् । तेन त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इति चत्वारः स्तोमा आग्नेयाः, त्रिणवः, त्रयस्त्रिंश इति द्वौ तु सौम्यौ । तत्र षण्णां सम्भूय वषट्कारसंज्ञा, आग्नेयानां चतुर्णान्तु प्रजाप-

---

भाषाटीका

नाम विराट् और यज्ञ भी है ।

(४) [ उक्त एकतीस देवताओं में सबका एकमत है, अतः उनका विशेष निर्देश न कर अवशिष्ट दो देवताओं में जो मतभेद है, उनका निर्देश करते हैं । ] ऐतरेय ऋषि कहते हैं कि प्रजापति और वषट्कार इन दोनों को मिलाकर तैंतीस संख्या की पूर्ति करनी चाहिये । अभी पूर्व जो साम-मण्डल के तैंतीस भाग कह आए हैं, उनमें तीन भाग मूल पिण्ड में रहते हैं । उन्हें छोड़कर आगे ६-६ भागों ( अहः ) का एक एक समूह बनता है । जिसे श्रुति में स्तोम कहते हैं । ये स्तोम छह होते हैं । ३+६=९, १५, २१, २७, ३३ । इनके नाम त्रिवृत्स्तोम, पञ्चदशस्तोम, एकविंशस्तोम-त्रिणवस्तोम और त्रयस्त्रिंशत्स्तोम हैं । इन सब शब्दों का अर्थ ये ही संख्याएँ हैं, जो दिखाई जा चुकी हैं । तैंतीस का मध्यभाग सत्रहवां 'अहः' भी सप्तदशस्तोम नाम से इनके साथ गिना जाता है । यों छह स्तोम हो गए । इन छहों का सम्मिलित नाम वषट्कार है । और २१ अहः तक के चार स्तोमों को ( त्रिवृत्, पञ्चदश, सप्तदश और एकविंश को ) प्रजापति शब्द से कहा जाता है । कह चुके हैं

प्रजापतिः सप्तदशोऽथ नभ्यस्त्विन्द्रोऽस्ति कौषीतकिराह तौ द्वौ ।
यद् ब्रह्म यत् क्षत्रमिति प्रभेदान्नभ्यं द्विधा प्राह च याज्ञवल्क्यः ॥५॥
इन्द्रो वषट्कार इमौ तु देवौ मतं परेषामपि तत्र नभ्यः ।
इन्द्रो वषट्कार इहास्ति षड्भिः स्तोमैरथो सप्तदशः प्रजेशः ॥६॥

---

संस्कृतव्याख्या

तिनाम्ना व्यवहारः। इमौ प्रजापतिवषट्कारौ गणयित्वा त्रयस्त्रिंशद् देवाः सम्पद्यन्त इत्यैतरेयो मुनिरैतरेयब्राह्मणे प्राह ।

मतान्तरं ब्रवीति—प्रजापतिः सप्तदशोऽथ । कौषीतकिना कौषीतकिब्राह्मणे तु प्रजापतिरिन्द्रश्चेति द्वौ संयोज्य त्रयस्त्रिंशत् संख्या पूरिता । तत्र इन्द्रः स एव, योऽत्र केन्द्रगताभयप्राणरूपेण नभ्यनाम्ना विस्तृत्य व्याख्यातः। प्रजापतिस्तु सप्तदशस्तोमरूपो य इदानीमेवोक्तः। याज्ञवल्क्यस्तु भगवान् शतपथब्राह्मणे नभ्यस्य इन्द्रस्यैव वीर्यद्वययोगात् तत्तद्वीर्यप्राधान्ये ब्रह्म, क्षत्रमिति भेदद्वयं प्रकल्प्य ताभ्याम् उक्तां संख्यां पूरयति ।

इन्द्रो वषट्कार—अन्यऋषयः इन्द्रश्च वषट्कारश्चेति द्वौ संयोज्य संख्यां पूरयन्ति। तत्र इन्द्रो नभ्यप्राण एव। वषट्कारस्तु स्तोमषट्कसमूहः। स एष वषट्कार एव प्रजापतिनाम्ना व्यवह्रियते। अन्ये तु—सप्तदशस्तोमरूपः केन्द्रगः प्रजापतिर्ग्राह्यः, स च नभ्य इन्द्रश्चेति ताभ्यां प्रपूर्यते संख्येत्यपि वदन्ति।

---

भाषाटीका

कि अग्नि की व्याप्ति २१ तक है, आगे सोम है। अग्नि की व्याप्ति तक ही प्रजापति माना गया है। इस प्रकार ३३ संख्या पूर्ण हो जाती है।

(५) कौषीतकि ऋषि तैतीस स्तोमों के मध्यगत सप्तदशस्तोम को प्रजापति नाम से, तथा नभ्य (केन्द्रगत-अभयप्राण) को इन्द्र नाम से गिनकर तैतीस संख्या की पूर्ति करते हैं। एवम् याज्ञवल्क्य महर्षि शतपथ ब्राह्मण में नभ्य अभयप्राण के ही पूर्वोक्त वीर्यभेद से ब्रह्म और क्षत्र दो भेदकर दोनों को गिनकर तैतीस संख्या की पूर्ति करते हैं।

(६) दूसरे महर्षि इन्द्र और वषट्कार दो देवता मानते है। इनमें नभ्य (केन्द्रगत) आत्मारूप इन्द्र है, और छहों स्तोमों के समूह का नाम वषट्कार है। वषट्कार को ही प्रजापति कहा जाता है। किन्तु कहीं तैतीस के केन्द्रगत सप्तदश स्तोम को प्रजापति कहते हैं। [बृहदारण्यक उपनिषद् में याज्ञवल्क्य भगवान् ने भी

यमोऽग्निरादित्य इमेऽङ्गिरस्तो भृगोस्तु सोमोऽपि च वायुरापः ।
भृग्वङ्गिरोभ्यामभिपन्नमेतत् सर्वं तदन्तर्निहिता हि वेदाः ॥ ७ ॥
प्रातःसवे मध्यसवे च सायं सोमग्रहाः स्युर्दशतिश्चतुर्धा ।
अष्टादश स्तोमविधाः पृथिव्याः पृष्ठानि तु त्रीणि दिवश्च तावत् ॥८॥

---

### संस्कृतव्याख्या

भगवता याज्ञवल्क्येनापि बृहदारण्यकोपनिषत्सु शाकल्यप्रश्नस्योत्तरे इन्द्रः प्रजापतिश्चेत्येवोक्तम् ।

इत्थं याज्ञिकेषु दशसु तत्त्वेषु देवान् निरूप्य तृतीयान् ऋषीन् निर्वक्ति-यमोऽग्निरादित्य । भृगुरङ्गिराश्चेति द्वौ सृष्टिप्रक्रियायां प्रधानावृषी । तावेतौ देवानां जनकौ । ऋषिभ्य एव देवा जायन्त इति ग्रन्थारम्भ एव निरूपितम् । तत्र यमाद्यास्त्रयोऽङ्गिरसो जाता आग्नेयाः । सोमाद्यास्त्रयस्तु भृगोः सौम्या इति । आभ्यां भृग्वङ्गिरोभ्यां ऋषिभ्यामिदं सर्वं जगत् अभिपन्नम्-व्याप्तम् । वेदा अपि भृग्वङ्गिरसोरन्तर एव निहिताः । तदेतत्सर्वं भृग्वङ्गिरःप्रकरणेऽस्मिन्नेव ग्रन्थे व्याख्येयमिति नात्र प्रपञ्चितम् ।

चतुर्था ग्रहाः इदानीमुच्यन्ते-प्रातःसवे । ग्रहाः-सोमपात्राणि । ते च सोमयागे प्रातःसवने माध्यन्दिनसवने सायंसवने च सम्भूय चतुर्धा दशतिः-चत्वारिंशद् भवन्तीति कर्मकाण्डप्रकरणे यज्ञसरस्वत्यां निरूपितम् । एषां

---

### भाषाटीका

इन्द्र और प्रजापति इन दोनों को गिनकर ही तैंतीस की पूर्ति की है ] ।

( ७ ) यों देवताओं का वर्णन कर आगे यज्ञ के तृतीय तत्त्व ऋषि का निरूपण करते हैं कि—भृगु और अङ्गिरा ये दो मूलभूत ऋषि ( प्राण ) हैं । इनमें अङ्गिरा से यम, अग्नि, आदित्य ये तीन आग्नेय देवता उत्पन्न होते हैं । और सोम-वायु-अप ये तीनों ( सौम्य देवता ) भृगु से उत्पन्न होते हैं । इस प्रकार यह सम्पूर्ण जगत् भृगु व अङ्गिरा से व्याप्त है । इन्हीं के अन्तर्गत वैज्ञानिक चारों वेद भी रहते हैं । भृगु-अङ्गिरा का वर्णन इसी ग्रन्थ में आगे होगा-अतः यहाँ संक्षेप से ही कह दिया है ।

( ८ ) अब चौथे तत्त्व ग्रह का वर्णन करते हैं कि सोम के ग्रह नामके पात्र प्रातःसवन, माध्यंदिन सवन और सायंसवन इन तीनों में मिलाकर चतुर्गुणित दश अर्थात् चालीस होते हैं । [ इनका विस्तृत वर्णन ग्रन्थकार ने 'यज्ञसरस्वती' नाम

**प्रवर्धतेऽग्निः क्रमतोऽथ सोमः प्रवर्धतेऽग्नेः क्रमतो निरोधात् ।**
**तथा च सोमस्थितितारम्यादग्नेरवस्था ऋतवः प्रसिद्धाः ॥ ९ ॥**

---

संस्कृतव्याख्या

वैज्ञानिकं तत्त्वञ्चापि यज्ञमधुसूदने प्रपञ्चितमितीह नामसङ्केतमात्रमेव कृतम् । तदनु पञ्चमं तत्त्वं स्तोमः । स चेदानीमेव व्याख्यातः । षट् स्तोमा ये उक्ताः, ते पृथिव्याः । तथैवान्तरिक्षस्थस्य चन्द्रस्य षट्, दिवि सूर्यस्य च षट्-इति अष्टादशस्तोमानां विधाः-प्रकाराः । षष्ठं तत्त्वं पृष्ठम्, पृष्ठानि च प्रत्येकं मण्डलेषु त्रीणि पूर्वं व्याख्यातानि केन्द्रपिण्डसोमरूपाणि । पृथिव्या दिवश्चैव त्रीणि पृष्ठानि इति अन्तरिक्षस्याप्युपलक्षणमिदम् ।

अथ सप्तमस्थानीकान् ऋतून् विवृणोति-प्रवर्धतेऽग्निः । ऋतुतत्त्व-मुपोद्घाते प्रपञ्चितमस्माभिः । सूर्याभिष्क्रम्य पृथिव्यां व्याप्नुवन्नग्निः 'ऋत' पदेन 'संवत्सराग्नि' पदेन चोच्यते । स एव चैत्रमासमारभ्य षण्मासान्-यदा सूर्यः उत्तरगोलभ्रमणादस्मद्देशस्य समीपे भवति तदा वर्धते दक्षिणस्यां दिशि दूरं गच्छति तु सूर्ये सोऽग्निः क्रमेण ह्रसति । यावदग्निर्वर्धते, तावद् व्याप्तं सोममभिभवति । अग्नौ ह्रसति तु सोमः प्रवर्धते । एवञ्च ऋतनामतिकस्याग्नेः सोमस्थितितारतम्यात्-सोमस्य ह्रासवृद्धिविशेषाद् या अवस्था भवन्ति, ता एव ऋतुपदेनोच्यन्त इति पद्यार्थः । एतस्याग्नेर्वृद्धिह्रासबोधकान्येव ऋतुनामान्यपि प्रथन्ते, तथाहि—

---

भाषाटीका

के ग्रन्थ में किया है, अतः यहाँ दिग्दर्शन मात्र कर दिया ] आगे पाँचवें तत्त्व 'स्तोम' के विषय में कहते हैं कि—स्तोमों के भेद अठारह होते हैं । [ अभी चौथे श्लोक के व्याख्यान में छह स्तोम बता चुके हैं । पृथिवी, चन्द्रमा ( अन्तरिक्ष ) और दिव ( सूर्य ) इन तीनों लोकों के छह-छह स्तोम मिलाने से अठारह भेद स्तोमों के हो जाते हैं । ] यज्ञ का छठा तत्त्व पृष्ठ बताया गया था । वे पृष्ठ प्रत्येक मण्डल के तीन तीन होते हैं । केन्द्र, पिण्ड और साम । इनका वर्णन विस्तार से पूर्व कर आए हैं । इनको ही पृष्ठ शब्द से कहा जाता है । वे पृष्ठ पृथिवी के भी तीन होते हैं और द्युलोक ( सूर्य-मण्डल ) के भी तीन हैं । ( दो का नाम लेने से मध्य के अन्तरिक्ष-चन्द्रमण्डल के भी तीनों समझ लेना चाहिये ) ।

( ९ ) अब क्रमप्राप्त यज्ञ के सप्तम तत्त्व ऋतु का वर्णन करते हैं कि पहले अग्नि क्रम से बढ़ता है ( तब सोम को दबा देता है ) । आगे अग्नि का ह्रास होने पर सोम क्रम से बढ़ता है । यों सोम की न्यूनता और अधिकता से उसके सम्बन्ध के कारण अग्नि की जो भिन्न-भिन्न अवस्थाएँ होती हैं, वे ही ऋतु नाम से कही जाती हैं ।

**प्राची दिगूर्जा प्रभवोऽस्ति सा द्यौर्दिग् दक्षिणान्तर्निहिता प्रतिष्ठा।**
**पृथ्वी प्रतीची जननी श्रियां सा धर्मास्तथापो दिगुदीच्यनूक्ता ॥१०॥**

संस्कृतव्याख्या

अग्नयोऽत्र वसन्तः—क्रमेण सर्वत्र व्याप्नुवानाः सन्ति, स कालो वसन्त इत्याख्यायते। यदा तु सोऽग्निः सर्वान् अर्थान् गृह्णानः—आत्मसात्कुर्वाणोऽस्ति, स कालो ग्रीष्मः, ग्रहधातोः परोक्षवृत्त्या निष्पन्नत्वाद् अस्य शब्दस्य। यदा तेऽग्नयः प्रवृद्धा भवन्ति, तदा वर्षाः, वृध्धातुनिष्पन्नोऽयं शब्दः। अथ परां वृद्धिं प्राप्य यदा क्षयं गन्तुमारभन्तेऽग्नयः, तदा (शरन्तोऽग्नयो यत्र सः) शरत्कालः। हीनतायां हेमन्तः। सर्वथा विशीर्णेषु चाग्निषु शिशिर इति। जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति—इति यास्कपरिपठिताः षड् भावविकारा एव ऋताग्निशब्देनेह ऋतुवाचकैः शब्दैः प्रदर्शिताः।

अग्निः सूर्यमण्डलादागच्छति, सोमस्तु चन्द्रमण्डलादिति सूर्याचन्द्रमसावुभावपि ऋतुजनकत्वेनाख्यातौ श्रुतिषु तत्र तत्र। वस्तुतस्तु अनयोरागतयोरग्नीषोमयोः पार्थिवाग्नौ प्रभावात् पार्थिवाऽग्निरेव ऋतूनाम् ऋतुषूत्पद्यमानानां पदार्थानां च हेतुरिति सोऽपि ऋत्विक्पदेनाख्यायते—"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्" इति ऋक्संहितायाः प्रथमे मन्त्रे ऋतुरूपेण यजतीति ऋत्विग्—इति व्युत्पत्तेः। आस्तामप्रकृतविस्तरः।

**अथाष्टमं तत्त्वं दिशो निरूपयति—प्राची दिगूर्जाम्।** दिशामपि श्रुतौ विशिष्टा परिभाषाऽस्ति। शतपथब्राह्मणे हि (११।१।६।२१) दिङ्नाम्ना लोक-

भाषाटीका

[सूर्यमण्डल से प्रतिसमय निकल निकलकर जो अग्नि पृथ्वीपर व्यापक रूपसे आता रहता है, उसे ऋत-अग्नि वा संवत्सर-अग्नि नाम से कहते हैं। जब सूर्य उत्तर गोल में रहता है (तब चैत्रसे भाद्रपद तक) हमारे देश के समीप होने के कारण वह अग्नि अधिक मात्रा में आता है तो सोमको दबा लेता है, आगे सूर्य के दक्षिण गोल में चले जाने पर अग्नि न्यून मात्रा में आता है, और तब सोम बढ़ता रहता है। इसी सोम की न्यूनाधिकता के कारण समय (मौसिम) बदलता रहता है। अग्नि हमें सूर्यमण्डल से मिलता है, और सोम चन्द्रमण्डल से। इन दोनों का प्रभाव पृथिवी के अन्तर्गर्भित अग्नि पर पड़ने से पार्थिव अग्नि भिन्न-भिन्न पदार्थों के उत्पादन में समर्थ होता है। इसलिए सूर्य, चन्द्रमा और पार्थिव अग्नि इन तीनों को ही श्रुतियों में स्थान-स्थान पर ऋतुयों का उत्पादक कहा है। ऋतुओं के वसन्त आदि संस्कृत नाम भी अग्नि की अवस्थाओं के बताने वाले हैं—यह संस्कृत टीका में स्पष्ट कर दिया गया है।]

(१०) अब यज्ञ के अष्टम तत्त्व दिक् का निरूपण करते हैं। [दिशाओं की भी श्रुति में एक परिभाषा है, शतपथ ब्राह्मण में एक-एक दिशा को एक एक लोक कहा

छन्दो विदुर्वाग्नियतिं द्विधा तद् वाचो हि मर्त्यामृतजातिभेदात् ।
छन्दांसि मर्त्यानि विशेषतोऽष्ट सङ्केतितार्थानि निदानशास्त्रे ॥११॥

---

भाषाटीका

विभागः कृतः । तत्तद्गुणप्रदातृत्वं च तत्तस्या 'दिश' उक्तम् । तदाधारेणैवात्र व्याख्यायते—प्राची-पूर्वा दिग् द्यौर्लोक उच्यते, सा च ऊर्जाम्-ओजसां प्रभवः उत्पत्तिस्थानम् । ऊर्क् ततः प्राप्यते इति भावः । दक्षिणा तु दिग् अन्तर्निहिता अन्तरिक्षरूपेत्यर्थः । सा च प्रतिष्ठा प्रतिष्ठादातृत्वेन प्रतिष्ठारूपतयैवोक्ता । एवं प्रतीची-पश्चिमा दिक् पृथ्वीरूपा, श्रियां जननी च । उदीची तु चतुर्थो योऽयं लोकोऽनुपदमेव व्याख्येयः पारावतप्रकरणे, तद्रूपा । धर्माश्च ( पुण्यानि ) तया जन्यन्ते इति । तस्यास्य रहस्यमत्र विस्तरभिया न प्रपञ्चितम् ।

अथ क्रमप्राप्तं नवमं तत्त्वं छन्दो निरूपयति—छन्दो विदुः । ग्रन्थकृतानेन छन्दःसमीक्षायां छन्दोनिरुक्तिप्रकरणे 'किमिदं छन्दः' इति विस्तरेण विचारितम् । तत्र श्रुतीनामाधारेण मितिश्छन्द इति सिद्धान्तितम् । मितिर्नाम परिच्छेदः मर्यादाबन्ध इति भावः । सर्वे हि पदार्थाः देशमर्यादया बद्धाः, ससीमा भवन्ति, सति च मर्यादाबन्धे तत एव यज्ञः प्रवर्तते, तस्माच्छन्दो यज्ञस्य मुख्यमङ्गम् । स एवार्थोऽत्र संक्षिप्योच्यते—वाचः सर्वकारणीभूतायाः-अव्ययपुरुषकलारूपायाः, या नियतिः—मर्यादा-परिच्छेदः तां छन्द इति जानन्ति विज्ञाः । वाक् च मर्त्यामृतभेदाद् द्विविधेति छन्दोऽपि मर्त्यामृतजातिभेदाद् द्विविधम् । तत्र मर्त्यानि छन्दांसि बहुविधानि पिङ्गलसूत्रादिषूक्तानि । तेषु अष्टौ

---

भाषाटीका

है । और उसे एक एक विशेष गुण का उत्पादक बताया है । उसी के आधार पर यहाँ कहा जाता है कि ] प्राची अर्थात् पूर्वदिशा ऊर्क् ( ओज ) को उत्पन्न करने वाली है । और वह दिव् लोक ( सूर्य लोक ) रूप है । दक्षिण दिशा अन्तरिक्ष रूप है और प्रतिष्ठा की उत्पादक है । प्रतीची अर्थात् पश्चिम दिशा पृथिवी रूप है और श्री ( लक्ष्मी ) की जननी है । एवम् उत्तर दिशा चतुर्थलोक ( अब् लोक ) रूपा है, और धर्म ( पुण्य ) को उत्पन्न करती है । इस सब रहस्य का वर्णन अन्यत्र देखना चाहिये, विस्तारभय से यहां नहीं किया गया ।

( ११ ) अब नवम तत्त्व छन्द का निरूपण करते हैं । [छन्द क्या तत्त्व है इसका निरूपण ग्रन्थकार ने विस्तार से 'छन्दःसमीक्षा' ग्रन्थ के छन्दोनिरुक्ति प्रकरण में किया है । वहां श्रुतियों के आधार पर यह सिद्धान्त किया गया है कि मिति अर्थात् परिच्छेद अर्थात् मर्यादाबन्धकों छन्द कहते हैं । प्रत्येक पदार्थ एक मर्यादा-

**आच्छन्दिता वाङ् मनसाविनाकृता विज्ञानमाच्छन्दितमस्ति तन्मनः ।
वागेव वा प्राणमयी मनोमयो मर्त्यामृताच्छन्दनमेति नो मनः ॥१२॥**

---

संस्कृतव्याख्या

मुख्यानि गण्यन्ते । तानि च निदानशास्त्रे-तन्नामके बृहदारण्यकगोपथादिषूक्ते प्राग्व्याख्याते वेदाङ्गे सङ्केतितार्थानि—अनेन च्छन्दसेदं प्रतिपादितमिति सङ्केतस्तत्र कृत इत्यर्थः । तान्यष्टौ तत्सङ्केताश्च चतुर्दशे पद्ये उच्यन्ते ।

मर्यादारूपेण च्छन्दसा किमाच्छन्द्यते किं वा तत्राच्छन्दकमिति निरूप्यते आच्छन्दिता वाङ् । मनसा अविनाकृता—मनोगर्भिता वागेव आच्छन्दिता मर्यादाबद्धा भवति । वाक्प्राणमनःसु जगतां मूलतत्त्वेषु परस्परमविनाभूतेषु वागेव स्थूलतत्त्वानामुपादानमिति सैव मर्यादाबद्धा भवति । आच्छन्दिका तु मायारूपा क्रियाशक्तिः प्रागेव प्रतिपादिता । वस्तुतस्तु वाक्प्राणमनसां स्वरूपमपि निर्विशेषस्य निःसीम्नो रसस्याच्छन्दनेनैव निष्पद्यते । आनन्दः, विज्ञानम्, मनः, प्राणः, वाक्—इति अव्ययपुरुषस्य पञ्चसु कलासु विज्ञानं यदा आच्छन्दितम्—ससीम भवति, तदैव तन्मन इत्युच्यते । मन एव च क्रियाशक्तेश्चयनेन प्राणरूपतां वाग्रूपतां च गच्छतीति । केचित्तु वदन्ति वाच एव

---

भाषाटीका

सीमा में बद्ध रहता है, सीमाबन्धन होने पर ही यज्ञप्रवृत्ति होती है । इस लिये छन्द का यज्ञ में विशेष उपयोग है । उसी छन्दोनिरुक्ति के अनुसार यहाँ भी निरूपण करते हैं । ] सम्पूर्ण जगत् का उपादान कारण जो वाक है, उसकी नियति अर्थात् मर्यादा को छन्द कहते हैं। वाक् अमृत और मर्त्यभेद से दो प्रकार की होती है । इस कारण छन्द की भी मर्त्य और अमृत दो जातियां हैं। उनमें मर्त्य छन्द के आठ भेद हैं, और निदानशास्त्र में किस किस छन्द में किस किस तत्त्व का वर्णन होता है यह सङ्केत किया गया है । [ यह आठ प्रकार के छन्द और इनके सङ्केत आगे चौदहवें पद्य में बताये जायगे । ]

( १२ ) आच्छन्दित कौन वस्तु होती है, अर्थात् किसका मर्यादाबन्ध होता है इसे स्पष्ट करते हैं कि वाक् का ही मर्यादाबन्ध हुआ करता है। किन्तु वाक् के साथ मन भी सदा रहता है, यह स्मरण रखना चाहिये । मन और प्राण के विना वाक् नहीं रहा करती । [ वस्तुतः मन, प्राण और वाक का स्वरूप ही आच्छन्दन अर्थात् सीमाबन्धन से ही बनता है निर्विशेष ब्रह्म तो निःसीम है सीमाबन्धन होने पर ही मन प्राण वाक् बनते हैं । ] अव्यय की जो पांच कलाएं बताई गई हैं उनमें

विज्ञानमाच्छन्दितमुच्यते त्रिधा तद् ब्रह्मनाम्ना तदुपाधिरिन्द्रियम् ।
वेदः स शब्दो यदुपाधिरास्थितो विद्या तु संस्कारमुपाधिमाश्रिता ॥ १३ ॥
गायत्री तु च्छन्दस्तेजो वै ब्रह्मवर्चसं ब्रूते ।
उष्णिक् त्वायुरनुष्टुप् स्वर्गं, बृहती श्रियं च यशः ॥ १४ ॥

---

संस्कृतव्याख्या

ससीमत्वं भवति, वाचः ससीमतयैव तदविनाभूतयोः, तद्गर्भस्थितयोः प्राणमनसोरपि परिच्छेदः प्रतीयते । न तु तयोः स्वतः परिच्छेदो भवतीति । वाक् तु मर्त्या अमृता चोभयविधापि च्छन्दनमेति—मर्यादाबन्धनं प्राप्नोतीति ।

यथा तथा वा भवतु, स्वतो वा, वाचः सहकारेण उपाधिकृतं वा, विज्ञानस्याच्छन्दनं तु भवत्येव । तच्चाच्छन्दनं त्रिधा, तेन विज्ञानमप्युपाधिकृतं त्रेधा रूपं धत्ते—इत्युच्यते—विज्ञानमाच्छन्दितमुच्यते । इन्द्रियं यत्रोपाधिः, इन्द्रियद्वारेण विकासमाप्नुवद् ज्ञानं 'ब्रह्म' नाम्ना व्यवह्रियते । शब्दश्च यत्रोपाधिः, अर्थात् शब्दं द्वारीकृत्य विकसितं विज्ञानं 'वेद' नाम्ना उच्यते । संस्कारं तु उपाधिमाश्रित्य विकसद्विज्ञानं ' विद्या' पदेनोच्यत इति । तदेतद् व्याख्यातं ग्रन्थारम्भे द्रष्टॄणामृषीणां प्रकरणेऽपि ।

अथ पूर्वोक्तं मर्त्यच्छन्दसामष्टविधत्वम्, केन छन्दसा किं प्रतिपाद्यमिति निदानसङ्केतं चैकादशपद्योक्तं विवृणोति—गायत्री तु च्छन्दः । प्रथमान्तं

---

भाषाटीका

दूसरी कला विज्ञान को सीमाबद्ध करने पर वही मनरूप हो जाता है । कई ऋषियों का मत है कि मन और प्राण को अन्तर्गत करती हुई मर्त्य और अमृत दोनों प्रकार की वाक् ही सीमाबन्धन में आती है । उसके कारण ही मन और प्राण को सीमा प्रतीत होती है । मन स्वतः सीमाबन्धन में नहीं आता ।

( १३ ) [ किसी भी प्रकार हो—चाहे स्वतः सीमाबन्धन हो चाहे वाक् के सम्बन्ध से हो, विज्ञान का भी सीमाबन्धन तो होता ही है । उपाधि के कारण सीमान्बधन होने पर विज्ञान के तीन भेद हो जाते हैं । इन्द्रिय जहां उपाधि हो, अर्थात् इन्द्रिय द्वारा जिस विज्ञान का विकास होता हो-वह 'ब्रह्म' नाम से कहा जाता है । और शब्द जहां उपाधि है—अर्थात् शब्द के आधार पर जहां विज्ञान का वकास है—वह वेद नाम से कहा जाता है । और संस्कार को उपाधि मानकर ( प्राचीन संस्कार से ) जहां विज्ञान का विकास हो वह विद्या शब्द से कहा जाता है । [ यह विषय पहले ऋषिनिरूपण में भी आ चुका है । ]

( १४ ) अब मर्त्यवाक् के आठ छन्दों के नाम, और उनसे जिस जिस अर्थ के प्रतिपादन का निदान शास्त्र में संकेत है, वह बताने हैं कि गायत्री छन्द ब्रह्मवर्चस्

पङ्क्तिर्यज्ञं त्रिष्टुप् त्विन्द्रियवीर्यं पशुं त्वियं जगती ।
श्रियमन्नं च विराडिति पूर्वे च्छन्दोनिदानमधुः ॥ १५ ॥
छन्दोऽमृतं वेद इति प्रसिद्धं वेदोऽयमृक्सामयजुस्त्रिधातुः ।
त्रिधात्विदं विक्रमणं प्रतिष्ठा याज्ञा रसस्तेऽनुविधाः पृथग्वेत् ॥१६॥

---

संस्कृतव्याख्या

छन्दोनाम, द्वितीयान्तं तु तदभिधेयनामेति स्पष्टार्थं पद्यद्वयम् । एष च निदानशास्त्रसङ्केतः प्रतिपाद्यानर्थांस्तत्तद्धर्ममुखेन तत्तच्छन्दोऽभिदधातीति तात्पर्यम् । एतानि च्छन्दांसि क्रमेण ब्रह्मवर्चसादीन् धर्मान् ब्रुवते-उत्पादयन्तीत्यपि केचिदाहुः । गायत्र्या स्वपाठके पुरुषे ब्रह्मवर्चसं नाम तेज उत्पाद्यत इत्यादि । एतानि मर्त्यच्छन्दांसि, यानि च्छन्दोनाम्ना लोकेषु प्रसिद्धयन्ति ।

इदानीममृतच्छन्द उच्यते—छन्दोऽमृतं वेद । अमृतं छन्दो वेदनाम्ना प्रसिद्धमित्यर्थः । वेदाश्च ऋक्सामयजुर्भेदात् त्रिविधाः । ऋगादित्रयं संहत्य वेदो भवतीति प्रत्येकम् ऋगाद्या वेदस्य धातवः उत्पादकानि तत्त्वानि अत्रोक्तानि । इदमेव त्रिधातु-त्रयाणां धातूनां समूहः, ऋगाद्याः, विक्रमणम्, प्रतिष्ठा, याज्ञो रसः, इति नामभिरप्युच्यन्ते । इह पद्ये च्छन्दोऽनुरोधात् क्रमव्यत्यासः कृतः । प्रतिष्ठा ऋग्, विक्रमणं साम, याज्ञो रसश्च यजुरिति प्रकोष्ठे मूलप्रदर्शिते स्पष्टीकृतम् । अस्मिंश्च त्रये पुनरपि पृथग्वद् अनुविधाः

---

भाषाटीका

नाम के तेज को बताने वाला है। उष्णिक् छन्द आयु को कहता है। अनुष्टुप्छन्द स्वर्ग का निरूपण किया करता है। बृहती छन्द श्री और यश का बोधक है।

( १५ ) पंक्ति छन्द यज्ञ को बताता है। त्रिष्टुप् छन्द इन्द्रियों के वीर्य का प्रकाशक है। जगती छन्द पशु को बताता है और विराट् छन्द श्री और अन्न का बोधक है। यह छन्दों का निदान पूर्वाचार्यों ने स्थापित किया है। [ यह अभिप्राय है कि गायत्री आदि छन्द जिस किसी देवता आदि का वर्णन करते हैं वह इन धर्मों को ही प्रमुख में रखकर करते हैं। कई विद्वान् इस निदान शास्त्र का यह भी अभिप्राय बताते हैं कि गायत्री आदि छन्द ब्रह्मवर्चस् आदि विशेष गुणों को कहते हैं-अर्थात् उत्पन्न करते हैं,, देते हैं। गायत्री छन्द की उपासना से ब्रह्मवर्चस् पुरुष में होता है। उष्णिक् से आयु बढ़ती है इत्यादि । ]

( १६ ) अब पूर्व सङ्केतित अमृत छन्द का वर्णन करते हैं कि अमृत छन्द वेद नाम से प्रसिद्ध हैं, और वेद के तीन भाग हैं- ऋक्, साम और यजुः। इन तीनों को

नाभेर्महोक्थं बहिरूर्मिवत् ततं महाव्रतं तु प्रधितोऽन्तरूर्मिवत् ।
वाग्योनिरग्निर्जलवत् स वाङ्मयो मनोमयः प्राणमयश्च विक्रमः ॥१७॥

### संस्कृतव्याख्या

प्रत्येकम् ऋक्सामयजूंषि अवान्तराणि भवन्तीत्यपि प्रकोष्ठे स्पष्टीकृतम् । इदं तु स्मर्तव्यम्, पूर्वमपि ऋग्यजुःसामानि व्याख्यातानि वैज्ञानिकानि, तानि वितानवेदरूपाणि । इह तु छन्दोवेदरूपाणि ऋग्यजुःसामान्युच्यन्ते । एषां निरूपणे अस्ति प्रक्रियाभेद इति ।

अथ सामरूपं विक्रमणं त्रिरूपेण ( अवान्तरभूतर्क्सामयजूरूपेण ) प्रथमं वर्णयति—**नाभेर्महोक्थम्** । महोक्थम्, महाव्रतम्, अग्निरिति त्रिरूपं विक्रमणम् । द्विविधा हि तरङ्गाः समुद्रादिजलेऽनुभूयन्ते-केन्द्राद् बहिः प्रसरन्तो बहिरूर्मयः । बाह्यपरिधेः—अन्तिमाद्बिन्दोः केन्द्राभिमुखं प्रसरन्तस्तु अन्तरूर्मयः । तथैव नाभेः केन्द्राद् बहिरूर्मिवद् बहिः प्रसरन्तो रसा इह महोक्थपदेनोच्यन्ते । अन्तरूर्मिवत् प्रधितः—परिधितः अन्तिममण्डलात् केन्द्राभिमुखमागच्छन्तस्तु महाव्रतपदेन । अथ यस्येदनुभयथा प्रसरणं भवति, स तरङ्गाधारजलमिव स्थितो यज्ञरस उच्यतेऽग्निपदेन । स चैषोऽग्निः वाग्योनिः-अमृतरूपा वाग् योनिर्यस्येत्येवंरूपः, वाच उत्पन्न इत्यर्थः । तत्र महोक्थमृक्, महाव्रतं साम, अग्निस्तु यजुरित्यर्थः । स चायमग्निर्मनःप्राणवाङ्मयः, न हि केवला वाक् क्वापि तिष्ठतीति ।

### भाषाटीका

मिलाकर वेद संज्ञा होती है, इसलिए इन तीनों को वेद का धातु भी कहा जा सकता है । अर्थात् ये तीनों वेद के बनाने वाले हैं । [ स्मरण रहे कि पहिले जो ऋक्, साम, यजु का वर्णन आया है, वे वितान वेद कहलाते हैं, और यहाँ जिन ऋक्साम, यजु का वर्णन है, वे छन्दोवेद हैं । इसलिए इनके निरूपण में कुछ भिन्नता है ] उक्त तीनों धातु अर्थात् ऋक् साम यजु को प्रतिष्ठा विक्रम और यज्ञरस नाम से भी कहा जाता है । इन तीनो में फिर एक एक के ऋग् यजुः साम नाम से तीन तीन भेद होते हैं ।

( १७ ) इनमें से प्रथम विक्रमण नाम के साम में अवान्तर भेदों का ( ऋक्, साम, यजु ) का निरूपण करते हैं कि इन तीनों भेदों का महोक्थ महाव्रत और अग्नि नाम से श्रुतियों में व्यवहार किया गया है । केन्द्र से तरङ्ग की तरह बाहर फैलने वाला रस महोक्थ कहलाता है, और परिधि अर्थात् अन्तिम भाग से भीतर केन्द्र की ओर तरङ्ग की तरह आनेवाला रस महाव्रत कहलाता है । वाक् से उत्पन्न हुई अग्नि जलस्थानीय है—जिसमें ये तरंगें उठती हैं । यह स्मरण रहे कि यह विक्रमण भी वाक्, मन और प्राण तीनों का ही होता है । तीनों में कोई भी अकेला नहीं रह सकता । इनमें महोक्थ ऋक् है, महाव्रत साम है, और अग्नि यजुः है ।

विस्रंसतेऽनुक्षणमप्यपानतः प्रपूर्यते प्राणनतोऽप्यनुक्षणम् ।
सोमोऽग्नितामेति च नाभिभागतो नाभेरुपैत्यन्तगतः स सोमताम् १८

---

संस्कृतव्याख्या

ऋग्रूपां प्रतिष्ठामथ त्रेधा वर्णयति-विस्रंसतेऽनुक्षणम् । पृथिव्यादिषु सर्वेषु पदार्थेषु आदानप्रदानरूपो यज्ञः प्रतिक्षणं प्रवर्तते-इत्युक्तमसकृत् । तत्र प्रदानमुच्यते अपाननपदेन, आदानं च प्राणनपदेन । अपाननाद्धेतोः पदार्थो विस्रंसते त्रुट्यति-न्यूनोभवतीति यावत् । प्राणनतस्तु अनुक्षणं प्रपूर्यते । सैवास्य प्रतिष्ठा, यदादानप्रदानयोः सतोरपि पृथिव्यादिपदार्थः स्थिररूप एव भासते । यद्यप्यादानस्याधिक्ये अङ्कुरादीनामिव वृद्धिप्रतीतिः, प्रदानस्याधिक्ये तु जीर्णतर्वादिष्विव न्यूनताप्रतीतिर्जायते, अथापि 'सोऽयम्' इति प्रत्यभिज्ञा जागर्त्येवेति प्रतिष्ठावेदः सर्वत्रानुस्यूतः । अथ किं विस्रंसते, किं वा प्रपूरयतीति स्पष्टीकरोति—सोमोऽग्नितामेति । परिधेः सोम आगच्छति, स तु नाभिस्थानमागतोऽग्नौ हुतोऽग्निरूपतामेव गच्छति । नाभेश्च निःसृतो बहिः सीमानं गतोऽग्निमर्यादामतिक्रान्तः पुनः सोमो भवति । तदित्थं विस्रंसतेऽग्निः, प्रपूरयति सोम इति सिद्धम् । तदत्र स्वप्रतिष्ठोऽग्निर्ऋक्पदेन, बहिर्विततः साम-

---

भाषाटीका

( १८ ) अब प्रतिष्ठा नाम का जो ऋग्वेद कहा है, उसके अवान्तर तीनों भेद बताते हैं कि प्रत्येक पदार्थ में आदान प्रदान, प्रक्रिया चलती रहती है, अर्थात् प्रत्येक पदार्थ में से कुछ भाग प्रतिक्षण निकलता रहता है, और कुछ भाग आता रहता है । यहां पृथिवी को ही दृष्टान्त रूप से समझिये कि हमारी पृथ्वी में से प्रतिक्षण इसके भाग बाहर निकलकर दूसरे मण्डलों में जाते हैं, और दूसरे मण्डलों से वहां के भाग इसमें आते भी रहते हैं । बाहर निकलने को अपानन कहा जाता है और भीतर आने को प्राणन कहते हैं । अपानन से पृथिवी आदि पदार्थों में न्यूनता होती है, और वह न्यूनता प्रतिक्षण प्राणन से पूर्ण की जाती है इस पूर्ति के कारण न्यूनता की प्रतीति शीघ्र नहीं होती-यही प्रतिष्ठा का स्वरूप है । जहां निकलना अधिक हो जाता है, और आगमन अल्प हो, वहां कुछ काल में न्यूनता प्रतीत होने लगेगी । और जहां आदान अधिक होगा, वहीं वृद्धि प्रतीत होगी । किन्तु फिर भी वस्तु के स्वरूप की 'यह वही है' यह प्रत्यभिज्ञा बनी रहेगी । इससे प्रतिष्ठा वेद भी सर्वत्र व्याप्त है । यह भी ध्यान रखना चाहिये कि बाहर से सोम आता है और वह केन्द्र में आकर अग्नि में आहुत होता हुआ अग्निरूप हो जाता है । और नाभि अर्थात् केन्द्र से अग्निरूप में निकलकर जब परिधि पर पहुंचता है, तो वह पुनः सोम बन

लोकश्चितोऽग्निः प्रथमोऽन्तरिक्षं महाव्रतं द्यौर्महदुक्थमस्ति ।
उक्थं दिवं याति महाव्रतं तु स्यादन्तरिक्षस्थितिरत्र सोऽग्निः ॥१९॥

वितायते मध्यविराट् परं परं महान्ति पृष्ठानि समांशमास्थिता ।
उक्थं तु मूलं विततेर्विनायितं सामांशसाम्यात् स रसाऽग्निरुच्यते २०

---

संस्कृतव्याख्या

पदेन, सोमश्च यजुःपदेन व्यवहार्य इत्यवान्तरा वेदाः । अत्रागच्छन् सोमोऽग्निं प्राप्नोतीति सोमाधारतां गच्छत्यग्निः । सोमाधारपात्राणि च भवन्ति ग्रहा इति अग्निर्ग्रहपदेन प्रदर्शितः प्रकोष्ठे मूले ।

तदनु यजूरूपं रसवेदं त्रेधा व्याकरोति—लोकश्चितोऽग्निः । अग्निश्चितः कृतचयनः सन् प्रथमः पृथिवीलोकः, महाव्रतम् अन्तरिक्षम्, महदुक्थं तु द्यौरिति त्रयो लोका याजस्य रसस्य परिणामभूताः । उक्थं हि बहिर्निःसरद् द्युलोकपर्यन्तं याति, महाव्रतं त्वागच्छदन्तरिक्षे शून्ये स्थाने तिष्ठति । अन्तरिक्षे स्थितिर्यस्येत्यन्तरिक्षस्थितिः । अग्निस्तु अत्रैव पृथिव्यां तिष्ठतीत्यर्थः । तत्र पृथिवी ऋक्, अन्तरिक्षं यजुः, द्यौस्तु सामेत्यवान्तरविभागः ।

अथ कस्येदं विक्रमणं विततनरूपमित्युच्यते-वितायते मध्यविराट् । मध्यगतस्य विराड्रूपस्य पिण्डस्येव विततनं भवति । सा च विराट्

---

भाषाटीका

जाता है । यों अग्नि और सोम का परस्पर परिवर्तन चलता रहता है । [ यह विषय पूर्व भी कहा जा चुका है । यहां प्रतिष्ठित अग्नि ऋक् है, बाहर फैलता हुआ वही अग्नि सोम है, और सोम यजु है । अग्नि पर सोम आता है इससे अग्नि सोम का आधार पात्र बना । सोम के आधार पात्र को ही यज्ञ परिभाषा में ग्रह कहते हैं, इसी लक्ष्य से मूल के प्रकोष्ठक में अग्नि का ग्रहपद से कथन किया है ]

( १९ ) अब अग्निरस नाम के यजु में अवान्तर तीन भेद बताते हैं । इन तीनों ( अवान्तर ऋक्, साम, यजु ) को तीन लोक कहा करते हैं । उनमें अग्निचयन होने पर प्रथमलोक अर्थात् पृथ्वीरूप बनता है, महाव्रत अन्तरिक्षरूप होता है, और महोक्थ दिवरूप होता है । विक्रमण द्वारा महोक्थ ( उक्थ ) द्युलोक पर्यन्त जाता है, महाव्रत अन्तरिक्ष में रहा करता है और अग्नि इसी पृथ्वीलोक में रहता है । इनमें पृथिवी ऋक्, अन्तरिक्ष यजुः और द्युलोक साम है ।

( २० ) यह सब वितान अर्थात् विक्रमण मध्यगत पिण्डरूप विराट् का होता है । इसमें आगे आगे के पृष्ठमण्डल बड़े-बड़े होते जाते हैं । [ आगे आगे के मण्डल

सहस्रपृष्ठानि भवन्ति साम्यात् तानि त्रिशत्या तिसृभिर्दशद्भिः । त्रिभिश्च भक्तानि भवन्ति तत्र प्राक् पृष्ठमृक्साम परं तु पृष्ठम् २१

संस्कृतव्याख्या

समांशमास्थिता-साम्येन सर्वेषु मण्डलेषु रसं ददाना भवति । परं तावन्तमेव रसमादाय जायमानानि तरङ्गरूपाणि मण्डलानि, परं परं महान्ति क्रमेण प्रवृद्धानि भवन्ति । इदं परस्य मण्डलस्य विस्तारे महत्वं जलतरङ्गेषु स्पष्टमेव दृश्यते । तत एव च तावत एव रसस्य प्रसारणेनाल्पीभावाद् दूरस्थं वस्तु लघ्वरसमाभिर्दृश्यत इत्यन्यत्र स्पष्टीकृतं ग्रन्थकृता । अत्र विततेः-वितानस्य मूलम्, उक्थम्-ऋग्रूपं ज्ञेयम् । वितायितं तु अंशसाम्यात् सामेति, अग्निश्च रसरूपो यजुरिति । एते वितानवेदाः पूर्वोक्ताः प्रसङ्गादत्र पुनः स्मारिताः ।

**सहस्रपृष्ठानि** । अस्य वितानस्य पृष्ठानि-प्रत्येकं मण्डलानि, सहस्र-संख्याकानि भवन्तीति कल्पनीयम् । तत्र च त्रेधा विभागं प्रकल्प्य प्रत्येकं भागः त्रिशत्या-शतत्रयरूपया संख्यया, तिसृभिः दशद्भिः-त्रिंशता, त्रिभिश्च, संभूय त्रयस्त्रिंशदुत्तरत्रिशतपरिमितैरंशैः कल्पनीयः । एकस्त्वंशोऽवशिष्टो ध्रुवरूपेण स्थाप्यः । एषु त्रिष्वंशेषु प्राक्पृष्ठं प्रथमो भाग ऋक् । परं पृष्ठम्-अन्तिमो भागः साम, अर्थान्मध्यमो भागो यजुरिति भाव्यम् । एते छन्दोवेदा

भाषाटीका

बड़े बनते हैं, यह तरङ्गों में ही स्पष्ट देखा जा सकता है ] किन्तु रसरूप विराट् के अंश सब पृष्ठों में समान ही रहते हैं । इस में न्यूनाधिकता नहीं हो सकती । [ दूरके बडे मण्डलों में रस की मात्रा उतनी हीं रहने और फैलाव अधिक हो जाने के कारण प्रत्येक वस्तु दूर से छोटी दिखाई देती है । यह विषय अन्य ग्रन्थों में स्पष्ट किया गया है ] इस सम्पूर्ण वितान का मूल उक्थ ( ऋक् ) है । उसका वितनन समान भाव से होने के कारण साम कहलाता है, और उस रस को अग्नि कहते हैं, जो कि यजुः है । ये वितान वेद कहे जाते हैं, जिनका निरूपण पूर्व प्रकरणों में हो चुका है, यहां छन्दोवेद से उनका भेद दिखाने को पुनः स्मरण करा दिया गया ]

( २१ ) इस वितान में एक हजार पृष्ठ होते हैं । अर्थात् सम्पूर्ण वितान के एक हजार भाग करना । उनके समान भाव से तीन विभाग करने पर तीन सौ तीन दशक अर्थात् तीस और तीन-यों ३३३ का एक-एक भाग होता है । बचे हुए एक अंश को ध्रुव समझो ) । इस एक-एक भाग को एक एक पृष्ठ समझने पर उनमें पहला पृष्ठ ऋक्, और अन्त का पृष्ठ साम कहलाता है । [ अर्थात् सिद्ध हो गया कि मध्य का पृष्ठ यजु है । ] ये [ छन्दोवेद कहलाते हैं, जिनका यहां निरूपण हुआ ] इन छन्दो-

| वाक्परिच्छेदश्छन्दः । | |
|---|---|
| १<br>मर्त्यवाकछन्दः । | २<br>अमृतवाक्छन्दः । |
| छन्दः किमभिधीयते ।<br>गायत्री—ब्रह्मवर्चसं तेजः ।<br>उष्णिक्—आयुः ।<br>अनुष्टुप्—स्वर्गः ।<br>बृहती—श्रीः, यशः ।<br>पङ्क्तिः—यज्ञः ।<br>त्रिष्टुप्—इन्द्रियम्, वीर्यम् ।<br>जगती—पशुः ।<br>विराट्—श्रीः, अन्नम्, । | भेदाः नामान्तराणि तत्रावान्तरभेदाः<br>ऋक्-प्रतिष्ठावेदः-ऋक, साम, यजुः<br>सामः-विक्रमवेदः-ऋक्, साम, यजुः<br>यजुः-यज्ञरसवेदः-ऋक, साम, यजुः ।<br>शस्त्रम्, गृहः, स्तोत्रम्,<br>उक्थं ग्रहः पृष्ठमिति त्रिधा रसः<br>प्रजापतेर्यज्ञविघस्य । |

**अग्नेः प्रतानो न तु सोम एष प्रतानमायति समस्यदात्मा ।**
**त्रयी ततोऽग्निस्त्रितयेऽथ सौम्यश्चतुर्थवेदोऽग्निहुतो बहिश्च ॥२२॥**

संस्कृतव्याख्या

इह निरूपिताः । छन्दोवेदान् स्पष्टं बोधयितुमिह मूले प्रकोष्ठक एकः प्रदर्शितः, स निपुणं भाव्यः । व्याख्या तु तस्य तत्र तत्र प्रदर्शितैव ।

**अग्नेः प्रतानः** । इदं वितननमग्नेरेव भवति, सोमो न स्वतः प्रतननं गच्छति । स तु समस्यदात्मा-अग्निना संमिलितस्वरूपः । अत इयं त्रयी,-वेदत्रयी, अग्नित्रितये । ( मर्त्यामृतपशुरूपे ) एव तिष्ठति । सोमस्य तु चतुर्थो वेदः-इति व्याख्यायतेऽनुपदमेव पारावतप्रकरणे । स च सोमो नाभिप्राप्तोऽग्नौ हुतो ज्ञेयः । बहिस्तिष्ठंस्तु व्याप्तरूपेण विज्ञेय इति ।

भाषाटीका

वेदों का स्पष्ट प्रदर्शन करने को मूलमें एक कोष्ठ दिखाया है-उसे सावधान देखना चाहिये । व्याख्या उसकी क्रम से आचुकी है ।

( २२ ) यह सब वितनन अर्थात् विक्रमण अग्नि का ही होता है । सोम का स्वरूप तो अग्नि के साथ मिला हुआ रहता है । स्वतन्त्ररूप से सोम का प्रतनन ( विस्तार ) नहीं हो सकता । इसलिये तीनों वेदों को तीन अग्नियों ( मर्त्य, अमृत, पशुनामके अग्नियों ) को ही समझना । सोम का चौथा वेद है । यह सोम अग्नि में हवनरूप से आता भी रहता है, और बाहर भी व्याप्त रहता है । [ इस चतुर्थ वेदरूप सोम का वर्णन अभी पारावत प्रकरण में आनेवाला है ।

वितायमानः स रसोऽमृतं दृशं प्राप्तस्ततोऽस्तीति वदन्ति दूरतः ।
वितायमानः स रसोऽभितस्ततो वेदः प्रतिष्ठात्र विराट् प्रतिष्ठा ॥२३॥
वाचो मितेस्त्रीणि तु सप्त वा तच्छन्दांसि सामानि च सन्ति नाना ।
वदन्ति सामेति वितानसीमां सप्त त्रयो वास्य भवन्ति भागाः ॥२४॥

संस्कृतव्याख्या

**वितायमानः स रसो ।** योऽयं रसो वितन्यते, स एवामृतरूपः, अयममृतवाचि अमृतं छन्द इति पूर्वमुक्तः । अयमेवास्माकं नेत्रयोः, प्राप्नोति, तत एव जना दूरतः तत्तद्वस्तु अस्तीति जानन्ति । अनेन नेत्रस्य विषयपर्यन्तं गमनं निराकृतम् । सर्वस्यापि पिण्डस्य प्राणस्य वा यथा प्रतननं भवति, तस्यास्तु नाम नेत्रकनीनिकायाः तद्गतस्येन्द्रियस्यापि च प्रतननम्, न तु शरीराद्बहिर्गतमिन्द्रियं द्रष्टुं समर्थम्, शरीरस्यैव भोगायतनतायाः सर्वैरभ्युपगमात् । तत एव च दूरस्थं सूक्ष्मं सूच्यादि नास्माभिरवलोक्यते । तत्र गतमपि चक्षुर्यदि द्वष्टिसामर्थ्यमवाप्स्यत्, नूनं तत्रस्थं सूच्याद्यप्यद्रक्ष्यदिति कृतं प्रसक्तानुप्रसक्त्या । स चायं रसः, अभितः—सर्वासु दिक्षु प्रतायते, ततः सर्वत एव पश्यन्ति वस्तु द्रष्टारः । ततोऽयं वेदः प्रतिष्ठा स्वरूपस्थितिबोधकः, विराट् च प्रतिष्ठा वेदप्रसार इति ।

एवं नवमं यज्ञतत्त्वं छन्दो निरूपयन्, तेन सहैव दशमं सामरूपमपि न्यरूपयद् ग्रन्थकृत् । तयोः परिशेषमाह—**वाचो मितेस्त्रीणि** । वाचो मितिकरणाद् यच्छन्द उक्तम्, तस्य भेदाः त्रीणि ( गायत्रीत्रिष्टुब्जगत्यः ) छन्दांसि, वा सप्त च्छन्दांसि गायत्र्यादिजगत्यन्तानि । तच्छन्दांसि–तानि पूर्वोक्तानि च्छन्दांसि । अष्टौ च्छंदांसि तु मतभेदेन प्राग्दर्शितान्येव । सामान्यपि तथैव नाना भवन्ति । वितानस्य सीमा अन्तिमो भागः सामेत्युच्यते । अत्रापि च्छन्दोऽनुसरणात् त्रयः सप्त वा भागा भवन्तीति ।

भाषाटीका

( २३ ) जिस रस का यह वितनन ( विस्तार ) हुआ है वह अमृत ( छन्द ) है। वही जब हमारी दृष्टि में प्राप्त होता है, तो हम दूर के पदार्थ की सत्ता समझ लेते हैं, अर्थात् दूर की वस्तु को देख लेते हैं। वह रस चारों ओर फैलता है, इसलिये चारों ओर ही वस्तु दिखाई देती है। यह फैला हुआ वेदरूप रस प्रतिष्ठा कहलाता है, क्योंकि वस्तु का स्वरूपज्ञान यही कराता है, और सबकी प्रतिष्ठा विराट् है ।

( २४ ) इस वाक की मर्यादा के छन्द तीन वा सात कहलाते हैं। और साम के भी अनेक विभाग हैं। वितनन जहां समाप्त होता है, उस सीमा को साम कहते हैं, उसके भी भाग छन्द के अनुसार सात वा तीन हो जाते हैं। [ यों छन्द के साथ ही यज्ञ के दशम तत्त्व साम का भी निरूपण हो गया ]।

पूर्वं प्रयाजाः परतोऽनुयाजा यज्ञस्य तत्रोपयजश्च केचित् ।
सर्वेऽग्निसोमान्वयनानुकूला धर्मास्ततोऽर्था विविधाः क्रियन्ते ॥२५॥
त्रिविक्रमो विष्णुरतस्त्रिपादः पादास्त्रयस्ते त्रय एव लोकाः ।
चित्यो निधेयः पशवस्तदित्थं प्रत्येकलोकेऽग्निरयं त्रिधास्ति । २६॥

---

संस्कृतव्याख्या

अथ यज्ञस्य भेदानाह—पूर्वं प्रयाजाः । प्रयाजानुयाजोपयजः कर्मकाण्डे सुप्रसिद्धाः । सर्वेऽप्येते यज्ञविभागा अग्नौ सोमस्य अन्वयनम्-संमेलनम्, तदनुकूला धर्मा एव भवन्ति वैज्ञानिकप्रक्रियायाम् । एभिरेव च धर्मपदाभिधेयैरग्नौ सोमसंमिश्रणैः सर्वे जगति दृश्यमानाः पदार्था उत्पद्यन्त इति ।

त्रिविक्रमो विष्णुः । यज्ञो वै विष्णुः । स च त्रिविक्रमः-त्रीन् विक्रमान् पदन्यासान् करोति इति वामनावतारकथायां सुप्रसिद्धम् । पादन्यासत्रयकरणात् स 'त्रिपादः' इत्यप्युच्यते । ते च त्रयः पादा एव त्रयो लोका इति विवृतं पूर्वं विराजः पादत्रयप्रदर्शनेन । शतपथब्राह्मणे (१ का. २ अ. ५ ब्रा.) हि च्छन्दोभिः परिगृहीतस्य यज्ञरूपस्य विष्णोरेव विक्रमणमुक्तम्, तदिह छन्दःप्रकरणाद्यज्ञप्रकरणाच्च स्मारितं ग्रन्थकृता । विस्तृतं त्वस्य विवरणं ग्रन्थान्तरेष्वेव ।

---

भाषाटीका

(२५) इसप्रकार यज्ञ के दसो अंगों का निरूपण पूर्णकर यज्ञ के भेद बताते हैं कि - यज्ञके स्वरूपमें पहिले प्रयाज होते हैं और आगे अनुयाज होते हैं। साथ ही कुछ उपयाज भी होते हैं। [ ये कर्मकाण्ड की प्रक्रिया में प्रसिद्ध हैं। इनका विशेष विवरण यहां नहीं किया गया। कर्मकाण्ड के ग्रन्थ यज्ञसरस्वती' आदि में ही देखना चाहिये ] इतना अवश्य है कि ये सब यज्ञ के रूप अग्नि में सोम का समन्वय होने पर ही बनते हैं। ये सब धर्म कहे जाते हैं और जगत के अनन्त अर्थ इसी यज्ञ प्रक्रिया से उत्पन्न होते हैं।

(२६) यज्ञरूप ही विष्णु है, अतः यज्ञ के तीनों विक्रमण ( वितनन ) विष्णु के विक्रमण ( पादन्यास ) कहे जाते हैं और विष्णु का नाम त्रिविक्रम होता है। यह सब वामनावतार की कथा में सुप्रसिद्ध है। [ शतपथ ब्राह्मण में छन्दों से परिगृहीत होकर ही यज्ञरूप विष्णु ने विक्रमण किया-यह निरूपण है। इसलिये छन्द के और यज्ञ के प्रकरण में इस विक्रमण का भी स्मरण करा दिया गया। ] तीन पादन्यास ( पैर रखने ) के कारण विष्णु को त्रिपाद भी कहते हैं। इसका विस्तृत वर्णन दूसरे ग्रन्थों में ही किया गया है। उस विक्रमण के तीन पाद ही तीन लोक ( पृथिवी, अन्तरिक्ष और दिव ) हैं-जो बार बार बताये जा चुके हैं। प्रत्येक लोक में अग्नि

**एकस्य यद्विक्रमणाद् दशेति तस्यापराद् विक्रमणाच्छतं स्यात्।**
**तस्यापराद् विक्रमणात् सहस्रं तथा त्रिधा विक्रमते स विष्णुः ॥२७॥**

इति सामन्तप्राणनिरूपणम्

---

संस्कृतव्याख्या

प्रत्येकं लोकेऽग्निस्त्रिधेत्यपि पूर्वोक्तं पुनः स्मारितम्—चित्यो निधेयः। दुरूहो हि विषयः पुनः पुनः स्मारितः सुखाधिगमो भवतीति ॥

अथ संख्यायामपि विक्रमणं संक्षेपेणाह—**एकस्य यद्विक्रमणाद्** । एक इति हि मुख्या संख्या। तस्य प्रथमे विक्रमणे दशसंख्या भवति, तदेव विक्रमणं बिन्दुदानेन सूच्यते लेखे । द्वितीये विक्रमणे शतसंख्या भवति, तृतीये विक्रमणे च सहस्रसंख्या भवति। सहस्रमिति पूर्णमुच्यते। अत एव पूर्णस्य साम्नः साहस्रमिति संज्ञा, सहस्रं च भेदास्तस्याख्याताः। इदमेव संख्याविक्रमणं वैज्ञानिकवेदानां शाखाभेदस्य, वेदग्रन्थशाखाभेदस्य च रहस्यमिति विस्तृत्य प्रतिपादितं शारीरकविमर्शे ग्रन्थकृता। तथैवोत्तरोत्तरं विस्तृतं विष्णोर्विक्रमणं बोध्यम् । तत एव लोकाः पृथिव्यन्तरिक्षादिव उत्तरोत्तरं विस्तृता भवन्ति। द्युलोकस्य हि बृहत्सामेत्यावेदितमवस्तादसकृत् । इतीदं यज्ञनिरूपणं पूर्णीकृतम्।

इति सामन्तप्राणनिरूपणम्

---

भाषाटीका

की तीन अवस्था-चित्य, चितेनिधेय, और पशु व्याप्त हैं। इसलिये प्रत्येक लोक में अग्नि तीन प्रकार से रहता है—यह भी कहा जा चुका है। विषय की दुरुहता के कारण उसका बार बार स्मरण कराया जाता है।

(२७) ये तीन विक्रमण संख्या में भी होते हैं। जैसे एक का प्रथम विक्रमण होने पर वह दस (१०) बन जाता है। [ विक्रमण का चिह्न ही बिन्दु है ] द्वितीय विक्रमण में शत (१००) हो जाता है। और तीसरा विक्रमण होने पर सहस्र (१०००) हो जाता है। इसी प्रकार विष्णुरूप यज्ञ के विक्रमण भी होते हैं। श्रुति की परिभाषा में सहस्र पूर्णसंख्या का नाम है, अतएव साम के सहस्र भाग (२१) पद्य में कहे गये हैं। [ यही संख्या का विक्रमण वैज्ञानिक वेद के शाखा भेद का रहस्य है, और इसी के कारण मन्त्रब्राह्मणरूप वेदों में भी शाखाभेद हुआ है। इसका विस्तृत निरूपण ग्रन्थकार ने 'शारीरकविमर्श' नामक ग्रन्थ में किया है। यहां इस विषय को संक्षेप में ही सङ्केतमात्र करके छोड़ दिया गया। छन्दोवेदों का भी यहां संक्षिप्त ही वर्णन किया है, उसका विस्तार अहोरात्रवाद आदि वैज्ञानिक ग्रन्थों में है। अधिक जिज्ञासु पाठक उन ग्रन्थों को ही देखें ]

इस प्रकार सामन्तप्राणनिरूपण समाप्त हुआ।

पारावतसोमस्य विराडुपरिभक्तित्वम् ।

( १ )तदित्थमयं सामन्तप्राणानां प्रपञ्च आख्यातः । अथैतद्विराजो यदूर्ध्वं किञ्चित्, तत्पारावतं नाम । 'अन्तो वै पारावतः' इति कौषीतकिराह । यदस्मिन् प्राजापत्येऽन्त्यं दृश्यते, तत्पारावतम् । पारावतः सोमः, विराडग्निः । ताभ्यामयमिन्द्रः समाधीयते । ननु 'वैराजः सोमः । अन्नं विराट् । अन्नं सोमः । यश उ वै सोमा राजाऽन्नाद्यम् ।' इति ( ९।६ ) कौषीतकिश्रुतौ सोमस्यापि विराज्ये-

संस्कृतव्याख्या

'प्राणस्य सप्त विभागाः' इति शीर्षकस्याधस्तात् प्राणान् प्रपञ्चयता पूर्वम् अभयम्, सामन्तम्, पारावतश्चेति त्रयो भागाः प्राणमण्डलस्याख्याताः । तत्राभयसामन्तयोरेतदवधि प्रपञ्चः कृतः । इदानीन्तु क्रमप्राप्तं पारावतं निरूपयितुं प्रकरणमारभ्यते । अयं प्रकरणस्यास्य सारः—यद्येयं विराडिदानीं प्रपञ्चिता, साग्निसमष्टिरूपेत्यारभ्य एवोक्तम् । त्रयो लोकाः, त्रयो वेदाश्च तदन्तर्गतत्वेनोक्ताः । तस्या विराज उपर्यपि सोमोऽस्ति, यश्चतुर्थस्याथर्ववेदस्य चतुर्थस्याप्लोकस्य च जनक इति । सोऽयं सोमो विराज उपरितनो भागः, स एवागच्छति विराजाहुतो नभ्यमिन्द्रमाप्याययितुम् । साम्नो ये स्तोमषट्कान्तर्गतास्त्रयस्त्रिंशद्भागा आख्याताः, तेषु एकविंशतितमभागपर्यन्तमग्निः, तावत्येव विराट्, तदुपरि द्वादश त्वहानि सौम्यानि इति । प्रजापतिस्तु त्रयस्त्रिंशदहःपर्यन्तं व्याप्नोति इति सौम्यमण्डलमपि प्राजापत्यम् । तत्र त्रय एव वेदाः इति श्रुतिभिरेव पूर्वपक्ष उत्थाप्योत्थाप्य श्रुतिभिरेव तत्समाधानपूर्वकं चतुर्थो लोकः, चतुर्थो वेदश्च संसाध्यत इति ।

तत्र सोमस्य अन्नरूपताम् अन्नस्य च विराड्रूपतां ख्यापयन्त्या कौषीतकिश्रुत्या प्रथमं विरोध उद्भाव्यते वैराजःसोमः । विराज उपरि विराजमानोऽपि-

भाषाटीका

पारावत सोम का वर्णन

[ प्रकरण के आरम्भ में 'प्राणस्य सप्त विभागाः' शीर्षक से तीन भेद किये गये थे—अभय, सामन्त तथा पारावत । उनमें अभय और सामन्त का निरूपण—यहां तक किया गया है । अब पारावत का निरूपण आरम्भ करते हैं । यह पारावत सोम विराट् के ऊपर का भाग है ] ( १ ) इस प्रकार सामन्त प्राणों का विस्तार कहा गया है । अब 'विराट्' प्राण के ऊपर जो कुछ भाग है, उसे 'पारावत' नाम से

वान्तर्भाव इतीन्द्रविराड्भ्यां द्वैतमेव प्राप्नोति–इति चेत्, सत्यम् । तस्याः श्रुतेर्द्यावापृथिव्यन्तर्गतसोमाभिप्रायकत्वाददोषात् ।

( २ ) अप्स्थानो ह्ययं सोमः । द्विविधं ह्यपां स्थानम्–पृथिव्या उपरिष्टादादित्यादुपरिष्टाच्च ।

'अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।

---

संस्कृतव्याख्या

सोमो विराजाहृत आहुतिरूपेण विराजो मध्य आगच्छति, स एवात्र कौषीतकिश्रुत्या वर्णितः । उपरि विराजमानात्तु प्रथमलोकस्थ एवेति तत्समानम् द्विविधमपां स्थानमित्यर्थे मन्त्रं प्रमाणयति—अग्ने दिवो अर्ण । मन्त्रमिमम्-हे अग्ने ? दिवः अर्णम् द्युलोके वर्तमानमम्भः, अच्छ—अभिलक्ष्य जिगासि—धूमद्वारा प्राप्नोषि । धिष्ण्याः प्राणाभिमानिनो ये देवाः, तान् अच्छ—अभिलक्ष्य ऊचिषे—समवेतान् करोषि । रोचने—यत्राग्निस्तपति, तत्र या सूर्यस्य परस्तात्–उपरिभागे, याश्च सूर्यस्यावस्तात्–अधोभागे आपः उपतिष्ठन्ते-स्थिताः

---

भाषाटीका

कहते हैं । "अन्त में पारावत है' इस कौषीतकि श्रुति के प्रमाणानुसार प्राजापत्य—प्रत्येक पदार्थ के प्रजापति के क्षेत्र में जो अन्तिम भाग होता है. वह 'पारावत' है । पारावत सोम है । विराट् अग्नि है । इन दोनों के द्वारा इन्द्र ( मध्य-अभयप्राण ) रक्षित रहता है ।

यहां प्रश्न उठता है कि सोम विराट् का अंश है । विराट् अन्न को कहते हैं और सोम अन्न है । सोम राजा यशरूप है, और वह भक्ष्य है" इस कौषीतकि श्रुति में सोम का विराट् में ही अन्तर्भाव बताया गया है, जिससे इन्द्र और विराट् ये दो पदार्थ ही सिद्ध होते हैं । पारावत नाम का पृथक् पदार्थ सिद्ध नहीं होता । इसका उत्तर यह है कि उक्त श्रुति दिव और पृथिवी के अन्तर्गत सोम के अभिप्राय से कही गई है और हम दिव् और पृथिवी से बाहर के सोम को पारावत कह रहे हैं—इस प्रकार विरोध नहीं होता । [ सोम का मुख्य स्थान विराट् के ऊपर है, किन्तु वह विराट् के द्वारा आहुति रूप से नीचे विराट् की प्राप्ति के भीतर लाया जाता है। उस आये हुए सोम का वर्णन कौषितकि श्रुति में किया है ]

( २ ] वर्णनीय सोम का स्थान 'अप्'लोक है । अप् के दो स्थान हैं—एक पृथिवी के ऊपर, दूसरा सूर्य के ऊपर । जैसा कि इस मन्त्र से स्पष्ट ज्ञात होता है—मन्त्र का अर्थ है—हे अग्ने ! आप द्युलोकस्थित अप् ( जलभाग ) की ओर जाते हैं । और जो सब लोकों के प्राणाभिमानीदेव हैं उनकी ओर जाकर उन्हें इकट्ठा

या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥'
( ऋ०सं० ३।२२।३ ) इति ।

तत्रादित्यादूर्ध्वस्य सोमस्य पारावतत्वं ब्रूमः । अधस्तात्सतस्तु सोमस्य विराट्त्वं न प्रतिरुन्ध्मः ।

( ३ ) तस्यापि च—तदन्नत्वनिबन्धनमग्न्याहुतसोमस्य विराट्त्वं गौणं द्रष्टव्यम् ।

अन्नं विराट्, अन्नं सोमः—इति हेतूपन्यासेन विवक्षितत्वावगतेः । अन्नग्राहिकोशलक्षणयज्ञरूपत्वन्तु विराट्त्वमग्नेरेवोपपद्यते ।

---

संस्कृतव्याख्या

सन्ति, ता उभयीः,त्वं प्रेरयसि इति श्रीमाधवाचार्यो व्याचष्टे । शतपथब्राह्मणेऽप्येवमेव व्याख्यातो मन्त्र इति माधवाचार्य एवाह । एतेन सूर्यादुपरि अधश्च अपां स्थितिरुपदिष्टा, आपश्च सोमस्यैवावस्थाविशेष इति सोमस्याप्युभयत्र स्थितिः सिद्धा ।

अन्नग्राहिकोशेति । अन्नरूपेण विराज्यन्तर्भूते विराजः पोषके सोमे विराट्पदम् तादर्थ्यात्तच्छब्दनेयम्–इति गौणमेव । मुख्या तु विराड्–अन्नस्य संग्राहको यः कोशः–प्राणवर्गः, तल्लक्षणः तद्रूपो यो यज्ञः, तद्रूपा । प्राण एवान्नमाहरति,–आहृत्य तस्य प्राणरूपताप्रापणमेव यज्ञ इत्युक्तमसकृत् ।

---

भाषाटीका

करते हो । आप उन अपके पास भी जाते हैं । जो देदीप्यमान सूर्य मण्डल के ऊपर तथा नीचे वर्तमान हैं" इस मन्त्र से सूर्य के ऊपर भी अप् का रहना सिद्ध हो जाता है । और अप् सोम की ही एक अवस्था है । इस प्रकार सोम का भी सूर्यमण्डल के ऊपर रहना स्पष्ट सिद्ध हो गया । इन दो अप् स्थानों में जो सूर्य के ऊपर रहने वाला सोम है, उसे हम 'पारावत' कहते हैं । तथा जो सूर्य के नीचे किन्तु पृथिवी के ऊपर ( द्यावा पृथ्वी के अन्तर्गत ) सोम है वह विराट् है, यह कहने में कोई आपत्ति नहीं है ।

( ३ ) यथार्थ में इस पृथ्वी के ऊपर का सोम ही अग्नि में आहुत होता है- इसको अन्न मानकर गौणरूप से 'विराट' कहना बन सकता है, श्रुति ने 'सोम अन्न है' और 'अन्न विराट् है' यह कारण बताकर सोम को विराट् रूप माना है । इससे वह मुख्य विराट् सिद्ध नहीं होता । मुख्य विराट तो अग्नि ही है, क्योंकि अग्नि ही यज्ञरूप है, और यज्ञ अन्न ग्रहण करनेवाले प्राणों का कोश है । "अग्नि ही यज्ञ है' 'जिसे अग्नि कहते हैं वही यज्ञ है' इत्यादि श्रुतियों से सोम की आहुत

"अग्निर्वै यज्ञः, एष वै यज्ञो यदग्निः" (श० २।१।४) इति श्रुत्या सोमाहुतिलक्षणप्रदेशस्यैव यज्ञत्वेन विराट्त्वसिद्धान्तात् ।

( ४ ) उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदुपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥"
( ऋ० सं० ६।६९।८ )

---

भाषाटीका

अग्निरपि सोमाहुतिं गृह्णान एव यज्ञ इत्याह—सोमाहुतिलक्षणेति । उभा जिग्यथुः । आख्यातं पूर्वम्–अक्षरपुरुषस्य कलारूपाविन्द्रो विष्णुश्च । तत्र विष्णुर्बहिरर्थानां संग्राहकः, इन्द्रस्तु आगतानामर्थानां बहिः प्रक्षेप्तेति विरुद्धकार्यकारित्वाद् अनयोः स्पर्धारूपं युद्धमत्र वर्णितम् । असुरान्-प्रतिबन्धकान्, उभावपि जिग्यथुः-जितवन्तौ, न पराजयं प्राप्नुतः एनोः-अनयोश्च मध्ये ( परस्परयुद्धेऽपि ) कतरश्चन-कोपि-न पराजिग्ये-न पराजितो भवति । हे विष्णो ! त्वम्, इन्द्रश्च यद् अपस्पृधेथाम्-स्पर्धाम्-परस्परमभिभवेच्छाम् ( स्वस्वकार्यविस्तारेण ) कुरुथः, तेन त्रिप्रकारकं साहस्रम्, वि ऐरयेथाम्-प्रेरयथः-उत्पादयथ इति । त्रिप्रकारकं साहस्रं चैतरेयब्राह्मणे स्पष्टीकृतमित्युक्तमेव मूले ।

अत्रोदाहृताभिः श्रुतिभिः लोकत्रयमेव साहस्रम्, लोकत्रय एवाग्निव्याप्तिः, एतावानेव यज्ञ इति प्रमाणीकृतम् । ततश्च चतुर्थो लोको यः कौषीतकिश्रुत्या गोपथश्रुत्या च स्पष्टं सिद्ध्यति, स विराजः-यज्ञाद् अग्ने., साहस्राच्च बहिर्भूतः एवेत्यत्र साधितम् । यज्ञस्य विष्णोः क्रमणमपि लोकत्रये एव, सोमलोकश्चतुर्थस्तद्बाहिर्भूतः । स्पष्टमन्यत्सर्वम् ।

---

भाषाटीका

जहां होती है, वही स्थान यज्ञ कहाता है। और वही विराट् है—यह सिद्धान्त माना गया है। [ श्रुतियों में विष्णु को यज्ञ तथा विराट् शब्द से कहा गया है। विष्णु का तीन पैर का विक्रमण ही तीन साहस्री का मूल है। ] जैसा कि मन्त्र से ज्ञात होता है।

( ४ ) [ कहा जा चुका है कि अक्षरपुरुष की कला इन्दु और विष्णु हैं। उन में से विष्णु बाहर के अर्थों को अपने भीतर लेता रहता है, दूसरा इन्द्र अन्तःस्थित पदार्थों को बाहर फेंकता रहता है। इन दो लेनेवाली और फेंकनेवाली विष्णु और इन्द्र शक्तियों का विवरण इस मन्त्र में किया है ] मन्त्र का अर्थ है कि इन्द्र और

इति मैत्रिश्रुतौ (२।४।४) पठिते मन्त्रे विष्णुमन्त्रप्रसिद्धस्य विराजः साहस्रत्वेनैव सिद्धान्तितत्वात्। तथा हि व्याख्यातोऽयमैतरेयकश्रुतौ मन्त्रः—

"इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते। सोऽब्रवीदिन्द्रः—यावदेवायं विष्णुस्त्रिर्विक्रमते, तावदस्माकमथ युष्माकमितरदिति। स इमान् लोकान् विचक्रमे। अथो वेदान्। अथो वाचम्। तदाहुः—किं तत् सहस्रमिति। इमे लोकाः, इमे वेदाः, अथो वागिति ब्रूयात्" (ऐ० ब्रा० २८।अ०) इति।

(५) कौषीतकिनश्च वाचो व्याप्तिमामनन्ति "एतावान् वै वाचो विकारो भूर्भुवः स्वरिति।" (कौ० ३।५) इति। यज्ञस्याप्येतदविनाभावं मैत्रायणीया अप्याहुः "भूर्भुवः स्वः, एतद्वै ब्रह्म, एतत् सत्यम्, एतद् ऋतम्। न वा एतस्मादृते यज्ञोऽस्ति" (१।८।५) इति।

---

भाषाटीका

विष्णु असुरों को जीतते हैं कभी हारते नहीं हैं। और इन दोनों में परस्पर भी कोई नहीं हारता है। ये दोनों परस्पर स्पर्धा करते हुए भी (एक दूसरे को दबाने की इच्छा करते हुए भी) तीन साहस्री का विस्तार करते हैं। इस मन्त्र के द्वारा विष्णुरूप विराट को साहस्री के रूप में ही निश्चित किया गया है। इस मन्त्र का ऐतरेय ब्राह्मण में इस प्रकार स्पष्टीकरण किया गया है कि इन्द्र और विष्णु असुरों से अर्थात् पदार्थ के स्वरूपविनाशक प्रतिबन्धकों से युद्ध करते हैं। इन्द्रने असुरों से कहा कि—यह विष्णु जहां तक तीन बार विक्रमण कर रहे हैं उतना प्रदेश हमारा है। उससे बचा हुआ आपका—अर्थात् असुरों का है। तब विष्णु ने तीन बार विक्रमण किया। तीनों विक्रमणों में क्रमशः लोक, वेद, और वाक् को अधिकार में ले लिया। इन्हीं तीनों की साहस्री-लोकसाहस्री, वेदसाहस्री और वाक्साहस्री प्रसिद्ध है। इससे यहां तक विष्णु का विक्रमण सिद्ध हुआ।

(५) वाक् की व्याप्ति के सम्बन्ध में कौषतिकि श्रुति ने-'भूः, भुवः, स्वः इन तीनों लोकों में ही वाक् की व्याप्ति है-'तीन लोक ही वाक् के विकार हैं' यह स्पष्ट कहा है। मैत्रायणीय श्रुति में भी कहा है कि—भूः, भुवः, स्वः ये ब्रह्म हैं, सत्य हैं, ऋत हैं। इन तीनों लोकों के अतिरिक्त स्थान में यज्ञ नहीं है। इसी प्रकार यज्ञ का तीन वेदों से ही सम्बन्ध है यह भी श्रुतियों में कहा गया है—जहां तक तीनों वेद हैं वहाँ तक समस्त यज्ञ है। इन तीनों वेदों के द्वारा ही यज्ञ का स्वरूप निर्माण होता है। इन तीनों वेदों से

त्रय्या विद्ययाऽप्ययं यज्ञः प्रमीयते—

"एतावान् वै सर्वो यज्ञो यावानेष त्रयो वेदः तस्यैतद्रूपं क्रियते" एतद् वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदाः" (श० ५।४।७।१०)

( ६ ) तथा च "अस्ति वै चतुर्थो लोक आपः ।" ( १८।२ ) इति कौषीतकिश्रुत्या—"अथर्वणां चन्द्रमा दैवतम् । आपः स्थानम्" (पू० १।२९) "आपो वै भृग्वङ्गिरसामायतनं चन्द्रमा देवता वैद्युतश्च" ( पू० २।२४ ) "चन्द्रमा ह्यप्सु चरति ( २।६ ) "सोमात्मको ह्ययं वेदः" ( पू० २।७ )

इति गोपथश्रुतिवचनेभ्यश्चास्य सोमस्य चतुर्थलोकस्थत्वात् चतुर्थवेदत्वाच्च ततोऽर्वागेव विष्णुविक्रमणसमाप्त्या त्रैलोक्यस्य त्रैविद्यस्यैव विराट्त्वमध्यवसीयते ।

( ७ ) सर्वकनिष्ठादित्यस्य विष्णोरेव यज्ञात्मकमहाविष्णुशरी-

---

संस्कृतव्याख्या

यज्ञात्मकमहाविष्णु । एतेन द्विविधोऽत्र विष्णुपदस्यार्थः सूचितः। द्वादशसु आदित्येषु अन्तिमः सर्वेभ्यः कनिष्ठ आदित्योऽपि विष्णुपदेन व्यवहि-

---

भाषाटीका

ही वाक् सहस्र बन जाता है" । इत्यादि प्रमाणों से यह स्पष्ट है कि विराट् वा यज्ञ की व्याप्ति भूः, भुवः, स्वः अर्थात् पृथिवी अन्तरिक्ष और द्युलोक—इन तीनों तक ही है । और तीनों वेदों से ही उसका सम्बन्ध है ।

( ६ ) तब चौथा लोक जो श्रुतियों से सिद्ध होता है वह तो विराट् से पृथक ही रहा । 'चौथा लोक 'अप्' संज्ञक है' इस कौषितकिश्रुति तथा 'अथर्व' का चन्द्रमा देवता है' 'अप्' स्थान है' 'अप्' भृगु और अङ्गिरा का स्थान है' 'इसका देवता चन्द्रमा तथा वैद्युत पुरुष है, ।" 'चन्द्रमा 'अप्' स्थान में विचरण करता है' यह चतुर्वेद सोमात्मक है । इत्यादि गोपथश्रुति के वचनों से इस सोम का स्थान चौथा लोक तथा चौथा वेद ज्ञात होता है । विराट्-विष्णु का विक्रमण इस लोक से पहले ही तीनों ही लोकों में तथा तीनों वेदों में समाप्त हो जाता है । अतः विराट् की व्याप्ति तीन लोक तक ही है ।

( ७ ) अन्य प्रमाणों की दृष्टि से भी यही बात पुष्ट होती है । क्योंकि यज्ञात्मक जो महाविष्णु का शरीर है उसका अन्तिम भाग द्वादश आदित्यों के अन्तिम

रान्त्यावयवत्वात् । तथा चैतरेयश्रुतिः—

"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ।...एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्चेति" (१।१।१) कौषीतकिरप्याह—"अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः । ताभ्यामेवैतत् सर्वा देवताः परिगृह्य सलोकतामाप्नोति" (७।१) इति । "अग्नाविष्णू वै देवानामन्नभाजौ" (१६।१८) इति च । याज्ञवल्क्योऽप्याह—"अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यः" तत्सर्वाश्चैवैतद्देवताः सर्वं च यज्ञं परिगृह्य दीक्षै–इति । तस्मादाग्नावैष्णवं निर्वपति" (३।१।३।१) इति ।

---

संस्कृतव्याख्या

यते, स देवरूपो विष्णुः । स एव 'विष्णुः परमः,' इत्याद्यासु श्रुतिषु उक्तः । यज्ञरूपस्तु व्यापको विष्णुरिति स महाविष्णुपदेनात्रोक्तः ।महाविष्णुशरीरस्यान्त्यावयवो देवरूपो विष्णुरित्यत्रोक्तम्। अक्षरकलारूपस्तु विष्णुरीश्वरः पृथगेव संभूय चतुर्विधो विष्णुशब्दार्थो ग्रन्थकृताऽन्यत्र निरूपित इत्युक्तमधस्तात् ।

आग्नावैष्णवम् । हविर्धानीत्याख्यात् पात्रविशेषाद् हविषः—तण्डुलादेः पृथक् पात्रे निःसारणं हविर्निर्वापः हविर्निर्वापविधाने हविषः अग्निविष्णुदेवताकत्वं श्रुत्यानया समर्थितम् । विधिशेषत्वादर्थवादानाम् ।

---

भाषाटीका

'विष्णु' नाम के आदित्य पर ही समाप्त हो जाता है । [ यहां विष्णु दो बताये गये, एक देवरूप विष्णु जो आदित्यों में सबसे छोटा है । दूसरा यज्ञरूप महाविष्णु-जोकि व्यापक है । अक्षरविष्णु ईश्वर रूप इनसे अतिरिक्त है ] जैसा कि ऐतरेय ब्राह्मण में कहा है—अग्नि देवताओं में प्रथम गणनीय है, और विष्णु ( बारहवां आदित्य ) अन्तिम है । इन दोनों के मध्य में अन्य सभी देवता हैं । अग्नि व विष्णु ये दोनों यज्ञ पुरुष के शरीर के आदि व अन्त्य के छोर हैं । कौषीतकि ने भी कहा है–'अग्नि देवताओं का प्रारम्भ स्थानीय है और विष्णु अन्तिम स्थानीय है । इन दोनों के ग्रहण से अर्थात् यजन से सब देवताओं के स्थान की समानता प्राप्त हो जाती है । और भी कहा है, अग्नि और विष्णु ये दोनों देवताओं के आद्यन्त में होने के कारण अन्नभोक्ता हैं । अर्थात् सोम का उपभोग करने वाले हैं, यह भी कौषीतकि श्रुति में

(८) तथा चाग्न्यादयोऽष्टौ वसवः पृथिव्या ऋग्वेदस्य च रूपम्। एकादश रुद्राः मध्येऽन्तरिक्षस्य—यजुर्वेदस्य च रूपम्। विष्णूतमा द्वादशादित्याः दिवः साम्नश्च रूपम् इत्येतावान् यज्ञः।

"इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च मनोर्देवा यज्ञियास–" (ऋ. ८।३०।२) इति मन्त्रश्रवणात्। स विष्णुः, स विराट्, सोऽग्निः। तत ऊर्ध्वमापो दिशश्चायं चतुर्थो लोको वैद्युतस्याथ सोमस्य। अङ्गिरसो भृगवश्चेति चतुर्थो वेदः, स सोमः। ततो विराडन्नमिद्राय संगृह्णाति ॥ अन्नभूतः स सोमोऽन्नादाद्विराजोऽतिरिच्यते।

---

संस्कृतव्याख्या

**इति स्तुतासो असथा।** रिशादसः—रिशताम्-हिंसताम्—असितारः-क्षेप्तारः नाशकाः, ये मनुनामकस्य मम (ऋषेः) यज्ञियासः—यज्ञभोक्तारः, त्रयः त्रिंशच्च त्रयस्त्रिंशद् देवाः यूयम् असथा—भवथ, ते इति—एवं प्रकारेण स्तुतासः कृतस्तुतिकाः, इति मन्त्रस्यार्थः। अत्र त्रयस्त्रिंशतो देवानामेव यज्ञियत्वमुक्तम्। तेन वसुरुद्रादित्यानामेव यज्ञभाक्त्वम् इति सिद्ध्यति। **वैद्युतस्यास्य सोमस्य।** चतुर्थलोकाधिष्ठाता वैद्युतः पुरुष इत्यग्रेऽपि स्पष्टीकरिष्यते। **अङ्गिरसो भृगवश्चेति** भृगुरङ्गिराश्च सोमलोके प्रधानावृषी। अथर्ववेदस्य च चतुर्थस्य भृग्वङ्गिरस नाम्नापि प्रसिद्धिः। अन्नभूतः। विराडन्नादः—सोमस्त्वन्नम्। अन्नादात्पृथगेव भवत्यन्नमिति विराजः पृथगेव सोम इति अतिरेकसाधनस्योपसंहारः।

---

भाषाटीका

कहा है। महर्षि यज्ञवल्क्य ने भी शतपथ ब्राह्मण में कहा है कि-दीक्षणीयेष्टि नामक इष्टि (यज्ञ) में अग्नि और विष्णु दोनों का सम्मिलित निर्वाप-(यज्ञीय हवि का पृथक्करण)—किया जाता है। क्योंकि अग्नि यज्ञ के पूर्वार्द्ध में रहने वाला है, और विष्णु परार्द्ध में। इन दोनों के परिग्रह से सब देवता और सब यज्ञ आ जाते हैं। सबका ग्रहण करके ही दीक्षा लेनी चाहिये।

(८) इन श्रुतियों से सिद्ध हुआ कि वसुसंज्ञक आठ देवता पृथिवी और ऋग्वेद के रूप हैं, उन आठ वसुदेवताओं में अग्निनामक प्रथमवसु है। एकादसरुद्र मध्यम अन्तरिक्ष तथा यजुर्वेद के रूप हैं। द्वादस आदित्य द्युलोक तथा सामवेद के रूप हैं। द्वादस आदित्यों में सबसे अन्तिम 'विष्णु' नामक आदित्य है। इन तीनों लोकों तथा तीनों वेदों में ही यज्ञ परिसमाप्त है।

"इन्द्राग्निसोमाः प्राजापत्यम्"

(९) तथा च सर्वान्तरतम इन्द्रः, तमनु परितो विराड् विष्णुः, तमनु परितोऽन्नं सोम इतीत्थं त्रिवृत्कृतानि, सर्वमेकैकं प्राजापत्यं विद्यात् । "यद् वै किञ्च प्राणि, स प्रजापतिः" (श.

संस्कृतव्याख्या

एवं सौम्यं चतुर्थलोकं प्रयाणैः प्रसाध्येदानीं प्रजापतिक्षेत्रस्य स्वरूपमाह—तथाच सर्वान्तरतमः । इन्द्रः केन्द्रगतोऽभयप्राणः । विराजि-पिण्डः, तं परितो व्याप्तोऽग्निश्च सम्मिलितौ । सोमस्त्वन्नं ततो बहिर्भूतमिति त्रयाणामेव स्थित्या त्रिवृत्कृतानि पृथिव्यादिमण्डलानि । न केवलं पृथिव्यादिमण्डलानि, अपि तु तद्वदेव सर्वा लघ्व्यो बृहत्यश्च मूर्तयो बोध्याः । सर्वत्रैवं त्रिवृत्करणमस्तीति । सर्वं चेदं प्राजापत्यम्—प्रजापतिक्षेत्रं विद्यात्, सोममण्डलपर्यन्तं प्रजापतिव्याप्तिः इत्यर्थः । सर्वत्र प्रजापतेर्व्याप्तौ श्रुतिं प्रमाणयति—यद् वै किञ्च प्राणि ।

भाषाटीका

(८) इन आठ वसु, एकादस रुद्र, द्वादस आदित्य तथा मध्यवर्ती दो अन्य इस प्रकार तैंतीस देवताओं का यज्ञसे सम्बन्ध है । यह बात ऋग्वेद के मन्त्रमें भी कही गई है । मन्त्रका अर्थ है—

"हिंसाभाव को दूर करने वाले मनु के यज्ञ के भोक्ता देवताओं ! जो आप तैंतीस संख्या में हैं, वे आप मुझसे इस प्रकार स्तुति प्राप्त करें ।" इस मन्त्रमें तैंतीस का ही यज्ञ से सम्बन्ध बताया गया है । यही त्रिलोक व्यापी यज्ञ-विष्णु है । वही विराट है, वही अग्नि है । इन तीनों लोकों से ऊपर 'अप्' और दिक्सोम जहां रहता है वह चतुर्थ लोक है, जो सोम तथा वैयत पुरुष का स्थान है । अङ्गिरा और भृगु ऋषियों का चतुर्थ वेद है, वही "परावत सोम" है त्रिलोकव्यापी विराट् इस चतुर्थ लोक से ही अन्न इन्द्र अर्थात् मध्यप्राण की पुष्टि के लिये ग्रहण करती है । अतः यह सोम स्वतः अन्नरूप होने के कारण अन्नभक्षी विराट् से पृथक् पदार्थ है, क्योंकि अन्न और अन्नादि पृथक् ही होते हैं ।

पूर्वोक्त निरूपण से यह सिद्ध हुआ कि सबके अभ्यन्तर में रहने वाला इन्द्र है उसके चारों ओर विराट्-विष्णु है । उसके चारों ओर अन्नरूप सोम है । इस प्रकार 'त्रिवृत्'—तेहरे रूप का प्रत्येक पदार्थ का पिण्डक्षेत्र प्राजापत्य अर्थात् एक एक

११।८।१७) इति वाजिश्रुतेः । इन्द्रस्यात्मनाऽग्निरन्तरङ्गम् । सोमस्य दिग्भ्यः स्वयमग्निमच्छोपेतत्वात् ।




इन्द्रे तावद्—
अग्नेस्तेजः ।
इन्द्रियं सोमात् ।
प्रत्यर्थं चेन्द्रायात्मने
अग्नौ सोमो हूयते ।
सत्यप्रजापतिरयं सर्वः ।
इन्द्रः प्रजापतिरात्मा ।
गिरिः पिण्डो मूर्तिः ।

( १० ) स्वभावाचायं सोमो वैद्युतेन पुरुषेण संसृज्यते,

---

संस्कृतव्याख्या

यत्र यत्र प्राणाः, तत्र सर्वत्र प्रजापतिरित्यर्थः । प्रजापतेर्विस्तरेण-निरूपणमेतस्य प्रकरणस्यान्ते करिष्यते । स्वयमग्निमच्छोपेतत्वात् । सोमःस्वयमग्निमभिलक्ष्य सर्वाभ्यो दिग्भ्यः आगच्छतीति । ततश्च भोग्यः सोमः, भोक्ता त्वग्निः । इन्द्रश्चापि भोक्तेति भोक्तृरूपेणाग्निना तस्यान्तरङ्गता सुव्यक्तैव ।

स्वभावाच्चायं सोमः । छान्दोग्योपनिषदि चतुर्थप्रपाठके उपकोसल-विद्यायाम्, पञ्चमे प्रपाठके पञ्चाग्निविद्यायां चार्चिमार्गेण गतानां मार्ग-

---

भाषाटीका

प्रजापति का स्थान समझना चाहिये । वाजसनेय श्रुति ने भी 'जो भी कोई प्राण-वाला पदार्थ है, वह प्रजापति है' यह उपदेश देकर इसका समर्थन किया है । इन्द्र जो पिण्ड की आत्मा है, उसका अग्नि अन्तरङ्ग अतिसमीपवर्ती है । सब दिशाओं से सोम ही अग्नि पर स्वतः आता है ।

( १० ) यह सोम स्वभावतः वैद्युत पुरुष से मिला हुआ रहता है, क्योंकि सोम और वैद्युत पुरुष दोनों ही 'अप्' तत्त्व से प्रादुर्भूत हैं । इस तेहरेपन का वर्णन मैत्रायणी श्रुति के द्वितीय काण्ड में इस प्रकार है—

'अग्नि, सोम और इन्द्र देवताओं ने कुरुक्षेत्र ( यज्ञस्थान ) में यज्ञ किया । उन्होंने आपस में कहा कि—हममें से जिसको सर्वप्रथम 'यश' प्राप्त होगा उसे हम सब

उभयोराप्यत्वसामान्यात् । एतदेव त्रिवृत्करणं श्रुतं मैत्रायण्यां श्रुतौ द्वितीयकाण्डे—

"देवा वै सत्रमासत, कुरुक्षेत्रे—अग्निः सोम इन्द्रः । तेऽब्रुवन्—यतमं नः प्रथमं यश ऋच्छात्, तं नः सहेति । तेषां वै सोमं यश आर्च्छत् । तमभिसमगच्छन्त......स हि यशस्वितमः,......स गिरिमगच्छत्, तमग्निरन्वगच्छत् । तौ गिरा अग्नीषोमौ सम-

संस्कृतव्याख्या

विवरण उक्तम्—"संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्, तत्पुरुषोऽमानवः, स एतान् ब्रह्म गमयति" इति । तत्रादित्यात्परोऽयं चन्द्रमाः—सोमप्रधानं परमेष्ठिमण्डलम् । ततः परं विद्युच्च तपोलोके । अमानवः पुरुषस्तु स्वयम्भूमण्डलस्थ इति श्रीशङ्करभगवत्पादैर्व्याख्यातम् । "अमानवः स पुरुषः ब्रह्म सत्यलोकस्थं गमयति" इति, स्वयम्भूमण्डलमेव सत्यलोक इत्यत्रोवाम लोकप्रकरणे । तद्येयं विद्युदुक्ता, सैव वैद्युतपुरुषपदेनेह ग्रन्थकृताभिहिता । एवञ्च जनलोकस्थः सोमस्तपोलोकस्थेन वैद्युतपुरुषेण स्वभावात्संसृज्यत इति युक्तमेव, सान्निध्यात् ।

उभयोराप्यत्वसामान्यात् । प्राणमयात् स्वयम्भूमण्डलादन्तरिक्षे तपसि आप एव प्रथमं प्रादुर्भवन्ति । इमा आपो अतिसूक्ष्मा वायुपदेनापि तैत्तिरीयोपनिषदादिष्वभिधीयन्ते—"आकाशाद् वायुः, वायोरग्निः, अग्नेरापः" इति । अग्नेरनन्तरं जायमानास्त्वापः स्थूला जलोपादानभूता, अस्मदन्तरिक्षे भुवर्लोके स्थिताः । ततः पृथिव्यां स्थूलजलोत्पत्तिः । एवं जलस्यानेका अवस्था अस्मच्छास्त्रेषु वर्णिताः । ततश्च स्थूलतमस्यास्य जलस्य यौगिकत्वं साधयन्त आधुनिका वैज्ञानिका यत् ख्यापयन्ति, जलं नाम न पृथक् तत्त्वमिति, तदस्मच्छास्त्राज्ञानमूलकमेव ।

तैरुपगतस्य—हाइड्रोजन-तत्त्वस्याप्यस्मच्छास्त्ररीत्या सूक्ष्मास्वप्स्वेवान्तर्भावादित्यास्तामप्रकृतम् । ताभिरेताभिर्वायुपदेनोक्ताभिरद्भिरेव सोम उत्पाद्यते ताभिरेव च विद्युत् । सोऽयं सोम परमेष्ठिमण्डले प्राधान्यं लभते इति ।

देवा वै सत्रमासत । श्रुतिरियमग्रे ग्रन्थकृतैव व्याख्यायते । तस्मात् कानिचिद्

भाषाटीका

आपस में बाँट लेंगे । उनमें सोम को पहिले 'यश' प्राप्त हुआ । अत शेष दोनों सबों के साथ मिल गये । सर्वप्रथम सोम को 'यश' प्राप्त हुआ—अतएव वह यश सम्पन्नों में श्रेष्ठ कहा जाता है । वह सोम 'गिरि' पर्वत में चला गया । अग्नि ने उसका पीछा

भवताम् ।......स वा इन्द्रः शिथिर इवामन्यत । साऽग्नीषोमा—अन्वगच्छत् । ता अब्रवीत्—याजयतं मेति । तं वा एतया अग्नीषोमा अयाजयताम् । तस्मिंस्तेजोऽग्निरदधात्, इन्द्रियं सोमः ।ता इन्द्रोऽभवत्' इति ( का० २ १ । ४ ) यज्ञस्थाल्यां कुरुक्षेत्रशब्दो निरूढः । प्रत्यर्थं चेन्द्रायात्मनेऽग्नौ सोमो नित्यमाहूयते ।

अयं सो अग्निर्यस्मिन् सोममिन्द्रः सुतं दधे जठरे वावशानः । सहस्रियं वाजमत्यं न सप्तिं ससवान् सत् स्तूयसे जातवेदः ।

---

संस्कृतव्याख्या

वैदिकानि पदान्येवात्रास्माभिः स्फुटीक्रियन्ते-यतमम्-यम् । यशः ऋच्छात्-(येन) यशः ( प्रथमं ) प्राप्येत । तं नः सहेति-स प्राप्तयशस्कः, तद्यशः, नोऽस्माकं मध्ये सहैवोपयुञ्जीत, न त्वेकाकी । तमभि समगच्छन्त-तेन सहेन्द्राग्नी मिलितौ यशः प्राप्तुम् । प्रथमं यशः प्राप्य सोमो यशस्विषु श्रेष्ठो जात इति । अग्नीषोमौ समभवताम् एकीभावं प्राप्तौ । शिथिर इव-एकाकित्वाच्छिथिलः-अकर्मण्य इव । ता इन्द्रोऽभवत्-तत इन्द्रः—यथार्थ इन्द्रः—दीप्तिमानभवत् । स्पष्टान्यन्यानि पदानि । श्रुतेरनन्तरमेव कुरुक्षेत्रादिपदानि व्याख्यातानि ग्रन्थकृता स्पष्टैः शब्दैः । व्याख्याताश्च विषया इमे अस्माभिः पूर्वमिति स्मरणीयाः ।

---

भाषाटीका

किया अतः 'गिरि' भाग में अग्नि और सोम दोनों परस्पर मिले । उस समय इन्द्रने अपने को शिथिल समझा और अग्नि सोम के पीछे गया । उन दोनों से उसने कहा कि-मुझे यज्ञ कराइये । तब उसको अग्नि और सोम ने यज्ञ कराया । यज्ञ के फलस्वरूप अग्नि ने इन्द्र में तेज का स्थापन किया और सोम ने इन्द्रिय का स्थापन किया । तेज और इन्द्रिय प्राप्त होने के कारण इन्द्र 'इन्द्र' हो गया । [ इस इतिहास का प्रकृतोपयोगी अर्थ इस प्रकार समझना चाहिये कि ) आदानप्रदानरूप यज्ञ अर्थात् कर्त्तव्य कर्म जहां होता है, उस यज्ञ स्थान के लिये वैज्ञानिक परिभाषा में 'कुरुक्षेत्र' शब्द प्रसिद्ध है ( यह कहा जा चुका है ) प्रत्येक पदार्थ को मध्यशक्तिस्वरूप इन्द्र नाम से प्रसिद्ध आत्मा के पोषण के लिये सर्वदा अग्नि में सोम की आहुति होती है जैसा कि मन्त्रभागमें कहा गया है—

मन्त्र का अर्थ है कि यह वह अग्नि है जिस में आहुति दिये गये कूटे हुए सोम को, अपने पोषण के लिये इच्छा करता हुआ इन्द्र पेट में धारण कर लेता है। यह सोम सहस्रों को निर्माण करने के कारण 'सहस्रिय' है, अन्नस्वरूप तथा सर्पण-

इति मन्त्रश्रवणात् ( यजुः सं० १२।४७)"

आहूयमानः सोमोऽग्नित्वमापद्यते । अग्निश्चायमिन्द्रमात्मानमाप्याययति । आप्याय्यमानस्त्विन्द्रोऽहरहः स्वर्गं गच्छति-इत्येष

---

संस्कृतव्याख्या

**अयं सो अग्निः ।** मन्त्रार्थस्तु अयं हूयमानः अग्निः, सः—तथाविधः, यस्मिन् (हुतम्) सुतम्—अभिषवादिसंस्कारोपेतं सोमम्, वावशानः–कामयमानः इन्द्रः जठरे स्वोदरे, दधे-दधार, सततं धारयतीति यावत् । हे जातवेदः अग्ने ! सहस्रियम्-सहस्रम्-नानारूपतां युद्धे यो भजति, स सहस्रियः ( अश्वविशेषणम् ) तादृशम्, अत्यम्-गमनशीलम्, सप्ति न-अश्वमिव, वाजम्-अन्नम्, ससवान्-भेजिवान्, त्वं स्तूयसे—इति भाष्यकृन्माधवरीत्या । यद्वा वाजः सोम एव सोऽपि सहस्रात्मरतः स्थितः सहस्रियः । तदेतेनाग्नौ सोमाहुतिः तेनेन्द्रस्य तृप्तिश्च विज्ञायत इति ।

**अहरहः स्वर्गं गच्छति ।** स्वावयवैः केन्द्रान्निष्क्रम्य द्युलोकपर्यन्तं याति, केन्द्रे चाग्नीषोमाभ्यां प्रपूरितस्तथैव तिष्ठतीत्यनेकधा व्याख्यातपूर्वम् । **तत्सत्रम् ।** सत्रा इत्यव्ययः सातत्यार्थः, सत्रा सततं प्रवर्तते यत् तदपि सत्रमुच्यते इत्यर्थः । याज्ञिकपरिभाषायां च दीर्घकालिके अनेकयजमानके बहुभिर्ऋत्विग्भिः क्रियमाणे यज्ञे सत्रशब्दो निरूढ इति । अनेके देवाः–इन्द्राग्निसोमाः, इमं यज्ञं सहैव यजमानरूपेण कृतवन्तः, तस्मात् सत्रमिदम् । यशः-

---

भाषाटीका

शील (फैलने वाला) है । हे अग्ने, इस सोमात्मक अन्न से सम्पन्न होने पर ही आप स्तुति को प्राप्त करते हैं ।

अग्नि में प्राप्त होनेवाला सोम अग्निरूप हो जाता है । यह सोमाहुतिसे निष्पन्न अग्नि, इन्द्र को-जो प्रत्येक पदार्थकी आत्मा है–उसे पुष्ट करता है । इस प्रकार पुष्ट इन्द्र प्रतिक्षण स्वर्ग ( द्युलोक ) तक जाता है । यह क्रम जब तक पदार्थका स्वरूपविनाश नहीं होता तबतक कभी बन्द नहीं होता । कभी बन्द न होनेके कारण निरन्तर अर्थवाची 'सत्रा' शब्दके अर्थमें यहाँ ( मैत्रायणी श्रुतिमें ) 'सत्र' शब्दका प्रयोग किया गया है । बडे यज्ञमें सत्र शब्द प्रसिद्ध है । अग्निमें सोमकी आहुति पड़ना ही यज्ञ है । इस यज्ञके विना कोई भी पदार्थ स्वरूपमें स्थित नहीं होसकता । यह अग्नि-सोमका सम्बन्ध प्रत्येक पदार्थ में होता है, अतः सभी पदार्थ स्वतन्त्र रूपसे

क्रमो विमुक्तिं यावन्नोपरमते । तस्मात् तत् सत्रम् । अग्नौ सामाहुतिर्यज्ञः । नान्तरेण यज्ञं किञ्चिदपीदं वस्तु रूपं धत्ते । तस्मादेकैकमिदं सर्वं देवयजनभूमित्वात् कुरुक्षेत्रम् । बहुष्वेकत्र सन्निविष्टेषु परस्परेणाक्षितेषु यदुल्बणमिद्धा दृश्यते, यत्र बुद्धिः प्रथमं संपतति, यदन्येषां प्रतिपत्तौ द्वारं भवति तद् यशः । सूक्ष्मस्थूलसन्निवेशे स्थूलं यशः । बाह्यान्तरसन्निवेशे बाह्यं यशः । प्रकाशो यशः, वाजिश्रुतौ द्वादशस्य द्वितीयप्रपाठके, गोपथश्रुतौ पञ्चमस्य विंशे "मयि भर्गो मयि महो मयि यशो मयि सर्वम्" इति विराजोऽक्षितविद्यायां तृतीयस्तरस्य यशस्त्वमाख्यातम् । इन्द्राग्निसोमेषु च क्रमसन्निविष्टेषु सोमस्तृतीयो भूत्वा द्वयोरन्ययोरक्षितो भवतीति यशस्त्वं सोमस्योपपद्यते अत एव "यशो वै सोमः" (४।२।३।९) इति वाजि-

---

संस्कृतव्याख्या

पदार्थं व्याचष्टे-बहुष्वेकत्र। अनेके धर्माः यत्रैकत्र समवेताः स्युः, परस्परेणाक्षिताः-परस्परमप्रतिघ्नन्तः-आनुकूल्येन वर्तमानाश्च ते भवेयुः, तत्र यद् उल्बणम्-उत्कटं स्यात्, यत्तत्सर्वेषु प्रथमं ज्ञायेत, यद् द्वारीकृत्यान्येषां ज्ञानं स्यात्,

---

भाषाटीका

पृथक् पृथक् यज्ञभूमि होनेके कारण 'कुरुक्षेत्र' है। एक दूसरेको हानि न पहुँचाते हुए बहुत से दृश्य विषय जहाँ एकत्र वर्तमान हों, उनमें जो विशिष्टरूपसे प्रदीप्त (जल्दी) दिखाई पड़ता है अर्थात् सर्वप्रथम जिस स्वरूपका हमें ज्ञान होता है, और जो औरों को ज्ञान करानेमें द्वार बनता है-उसे 'यश' कहते हैं। प्रत्येक पदार्थमें पिण्डके स्थूल और सूक्ष्म का सन्निवेश रहता है, उसमें स्थूल भाग 'यश है। बाहर भीतरकी कल्पनाके स्थलों मे बाहरकी कल्पनाका आश्रयभाग यश है। साधारणतः प्रकाश-रूप-जिस पर पहले दृष्टि जाता है, वही भाग यश है। शतपथ ब्राह्मणके बारहवें काण्डके द्वितीय प्रपाठकमें, तथा गोपथब्राह्मणके पांचवे प्रपाठकके बीसवें खण्डमें 'मुझमें (भर्ग) है, 'महः' है, मुझमें 'यश' है, मुझमें ही सब कुछ है'—इस विराट की अक्षितिविद्या (अविनश्वर स्वरूप) के वर्णन में तृतीयस्तर कों यश बताया है। इन्द्र-अग्नि-सोम ये तीनों क्रमशः प्रत्येक पदार्थमें वर्तमान हैं-अतः सोम तीसरा (बाहरी भाग) पड़ता है। और इन्द्र अग्नि इन दोनों के साथ रहता है। उन्हें क्षीण नहीं होने देता। अतः

श्रुतिरपीद्धा श्रूयते ।

(११) पर्वत इवाग्नेरुदीर्णो भागो गिरिः । प्रत्यक्षो मूर्तिपिण्डो गिरिः । अत एवाध्यात्मं वाक्प्राणचक्षुरादीनां ब्रह्मगिरित्वमाम्नातमैतरेयारण्यके । तत्र चान्यदन्यस्मिन्निगीर्णं भवति—इत्यतोऽपि स गिरिरुच्यते । तृतीया द्यौरग्नेर्गिरिः । तत्र ह्यग्नीषोमयोरेकीभावस्तदङ्गिरसो

---

संस्कृतव्याख्या

तद्यशः पदेनोच्यत इत्यर्थः । भर्गः, महः, यशः- इति त्रिविधेषु तत्त्वाख्येषु गुणेषु तृतीयस्तद्रूपेण यशः श्रुत्योक्तम्, तस्मात्सर्वेभ्यो बहिर्भूतं तदेवास्मद्दृष्ट्या प्रथमं प्राप्यत इत्यर्थः ।

मैत्रायणीश्रुतौ सोमस्य गिरौ गमनं यदुक्तम्, तत्र गिरिपदार्थमाचष्टे-पर्वत इवाग्नेः । योऽग्नेर्भागः पर्वत इव उद्गीर्णः बहिर्निःसृतो भवति, स गिरिरित्यर्थः । तेन प्राणाग्निना जनिता भौतिकपिण्डरूपा तत्तत्पदार्थमूर्तिरेव गिरिपदवाच्या । प्राणो हि नेन्द्रियग्राह्यः, इयन्तु मूर्तिश्चक्षुरादीन्द्रियैर्गृह्यते इति प्राणैरुद्गीर्णा स्थूला, तस्माद् गिरित्वं तत्र युज्यते । अतएवाध्यात्मम् । निर्विशेषस्य निःसीम्नो ब्रह्मणो वाक्प्राणचक्षुरादीनि स्थूलानि रूपाणीत्येव तत्रापि गिरित्वं ख्यापितं श्रुत्या ।

अन्यदन्यस्मिन् । गृणातेर्गिरिः । तत्र पूर्वमुद्गिरणार्थो व्याख्यातः, इदानीन्तु निगिरणार्थो व्याख्यायते—यत्पूर्वं दृश्यते मूर्तिपिण्डरूपम्, तत्रादृश्यमानं प्राणादि निगीर्णम्—निलीनमिव भवति, ततश्च निगीर्यते येनेत्यर्थकर-

---

भाषाटीका

सोम को यश कहाजाता है-जो कि उचित है । अतएव 'यश-सोम है' यह शतपथ ब्राह्मणमें भी कहा गया है ।

(११) मैत्रिश्रुतिमें जो गिरिशब्द आया है' उससे अग्निका पर्वतके समान उभड़ा हुआ (ऊंचा हुआ) भाग समझना चाहिए। अर्थात् प्रत्यक्ष दिखाई देनेवाला मूर्तिपिण्ड गिरि है । अतएव अध्यात्मप्रकरणमें वाणी, प्राण, चक्षु आदि का 'ब्रह्मगिरि' शब्द से ऐतरेयारण्यकमें व्यवहार किया गया है । अर्थात् निर्विशेष ब्रह्मके ये अनुभव में आनेवाले अतएव उभड़े हुए भाग हैं। इस उन्नत भागमें दूसरा भाग निगला हुआ-सा (दबा हुआ-सा) रहता है, इस लिए भी इसे गिरि कहते

रूपम् । अग्निरनुगच्छति सोमम् । सोमश्चात्मानमग्नौ धत्ते । इन्द्रश्चानुगच्छत्यग्नीषोमौ, तावपि चात्मानमिन्द्रे धत्त इति त्रयं त्रिष्वक्षितं भवति । नैकमन्येन विनाकृतं भवतीति विद्यात् । यत्त्वान्दविद्यायां वाजिश्रुतौ ( ६।१।२।३ ) सोमादर्वाक् सतोऽस्यादित्यस्य यशस्त्वमाख्यातम्, तदग्निरूपापेक्षम् । अग्निवाय्वादित्यानामग्निरू-

---

संस्कृतव्याख्या

णात् पूर्वं क्षायमानः पिण्ड एव गिरिरित्यर्थः । एवं सर्वासु मूर्तिषु गिरिपदवाच्यासु यत्र सोमो गतः, यत्र चानुगतोऽग्निस्तेन संगतः, सा उद्गीर्णा तृतीया द्यौरत्र ग्राह्येति निरुक्तं मूले । व्याख्यातव्यमिदमग्रे अङ्गिरस ऋषेः प्रकरणे इति नेह प्रपञ्च्यते । **अयं त्रिष्वक्षितं भवति** । त्रयोऽप्यन्योन्यमेकीभूय संबद्धमेकं रूपं दधत इत्यर्थः । शङ्कते—**यत्तु आन्दविद्यायाम्** । शतपथब्राह्मणे अण्डनिरूपणे "ततोऽसावादित्योऽसृज्यत, एष वै यशः" (शत ६।१।२।३) इत्यादित्यस्यैव यशःशब्देनाभिधानं कृतम् । तत्कथमत्र सोमस्य यशस्त्वमुच्यत इति समाधत्ते—**तदग्निरूपापेक्षम्** । यत्र आग्नेयानि अग्निः, वायुः, आदित्यः इति त्रीणि एव रूपाण्याख्यातानि, तत्रान्तिम आदित्य एव यशः, अन्तिमत्वात् । चतुर्थलोकस्य सोमस्यापि संग्रहणे तु स एव यशः । तत्र हि शतपथे अग्नेरूपत्रयमेवोपक्रान्तम्, तस्मादादित्यस्य

---

भाषाटीका

हैं । अर्थात् गिरिशब्द 'गॄ' धातुसे बना है जिसका अर्थ निगलजाना है । पूर्वोक्त मैत्रिश्रुतिमें तृतीय द्युलोक ही अग्निका 'गिरि' है । वहाँ पर जो अग्नि सोम का ऐक्य है वही 'अङ्गिरस्' प्राणका रूप समझना चाहिए । वहाँ अग्नि सोमके पीछे जाता है, और सोम अग्नि के साथ एकरूप होजाता है । इन दोनों के पीछे इन्द्र जाता है तब वे दोनों इन्द्रका पोषण करते हैं, इस प्रकार तीनों तीनों में अक्षीण रहते हैं अर्थात् एक के विना दूसरा नहीं रहता । यहाँ यह शंका उठती है कि शतपथब्राह्मण के आन्दविद्याप्रकरणमें चतुर्थलोकवर्ती सोमके पहिले ( तृतीयलोकस्थित ) आदित्य कों यश बताया है फिर यहाँ सोम को यश कैसे कहा ? इस का उत्तर यह है कि अग्नि की सीमामें आदित्य यश है । अग्नि-वायु-आदित्य ये तीनों अग्नि के रूप हैं, और एक दूसरेके ऊपर स्तररूपसे स्थित हैं । इनको क्रमशः भर्गः, महः और यशः कहा जासकता है । ये तीनों अपने आत्मस्वरूप इन्द्रमें सभी अपने को मिला देते हैं । और इन सबमें स्पष्टरूप से यह इन्द्र अपनी आत्मा का पोषण प्राप्त करता

पाणामुत्तरोत्तरस्तरभावेन विन्यस्तत्वात् क्रमेण तत्र भर्गो महो यश इति शब्दाः उपपद्यन्ते । ते चास्मिन्नात्मनीन्द्रे सर्वेऽप्यात्मानं दधते । सर्वेषु च तेष्वञ्जसाऽयमिन्द्र आत्मा धीयते । तस्मादन्योन्यमक्षितं भवति । अथेन्द्राग्निसोमदृष्टौ त्वयं सोम एव तृतीयस्तरो बहिःप्रकाश इति कृत्वा यश इत्यविरोधः ।

इन्द्रस्य मनःप्राणवाङ्मयत्वम्

(१२) पशुना सलोमकं चैतमिन्द्रामृतमर्त्यमयं पिण्डं बीजमित्याचक्ष्महे । तत्र मर्त्यो बीजकोशः । अमृतं मज्जा । इन्द्रस्ताभ्यां सुगुप्तो

---

संस्कृतव्याख्या

यथास्त्वमुक्तम् । सोऽयं विवक्षाभेदो न तु वस्तुभेद इति । ते चास्मिन्नात्मनीन्द्र इत्यादि पूर्वोक्तस्यैव स्मारणम्, दुरूहस्य विषयस्य पुनः पुनर्बोधनार्थम् ।

इन्द्रः, अमृतप्राणाः, मर्त्यप्राणाः, लोमस्थानीयस्तदुपरि पशुश्चेति सर्वस्य बीजरूपतां रूपयन् बीजसादृश्यं तत्र निरूपयति—तत्र मर्त्यो बीजकोशः । तण्डुलयवादिबीजे, फलरूपे वृक्षादिबीजे च सर्वत्र उपरि रक्षार्थमावरणं तुषादि भवति । तदन्तः मज्जा दृढचिक्कणभागः गुद्दा इति भाषायां प्रसिद्धः । ततोऽप्यन्तरे द्विदलं वृन्तरूपं मुख्यबीजं भवति तदेवाङ्कुरतामापद्यते उत्तम् । तथैवात्रापि मर्त्याग्निबीजनिधानार्थः कोशसंज्ञकावरणरूपः, अमृताग्निर्मज्जेति भाव्यः, इन्द्रस्तु वृन्तस्थानीयं मुख्यबीजम् ।

---

भाषाटीका

है । अतः परस्पर एक दूसरेसे संघटित हैं । इनमें आदित्य यश है । किन्तु इन्द्र अग्नि, सोम इन तीनोंका विचार करने पर तीसरा रूप होने तथा बाहरी होनेके कारण सोम ही यश माना जाता है अतः दोनों श्रुतियों का आपसमें कोई विरोध नहीं है ।

( १२ ) इस प्रकार अग्नि का उल्बण 'भाग-जो मूर्तिरूप पिण्ड बताया गया', जिसमें कि मर्त्य प्राण एवं नभ्य इन्द्र अन्तर्गत है-और पशु जिसके लोमरूप हैं, उस पिण्ड को बीज रूपसे कहा जाता है । बीजके सब धर्म बताते हैं कि इस मूर्तिपिण्डमें बीजके कोष अर्थात् बीजके ऊपरी छिलकेके स्थानमें मर्त्यभाग को समझो । अमृत-

मुख्यो बीजभागो दलवृन्तात्मकः । यथेदं मुख्यबीजं त्रैलोक्यरसाकर्षणैस्त्रिभिः प्राणैस्त्रिवृत् कृतं भवति, तथैतमिन्द्रं मनःप्राणवाग्भिस्त्रिधातुं विद्यात् । मनसा संकल्पयति, प्राणेन प्रयतते, वाचा

---

संस्कृतव्याख्या

यथेदं मुख्यबीजम् । यवतण्डुलादिमुख्यबीजे दलवृन्तात्मके स्थित तदुत्पादकः प्राणस्त्रिभिर्मर्त्यामृतेन्द्ररूपैर्भागैस्त्रयाणामपि लोकानां रसमाकर्षति, तेन स दलवृन्तात्मको मुख्यो बीजभागोऽपि त्रिवृत्कृतो भवति । तत्र सूर्यरससम्बन्धाद् बीजजातस्याङ्कुरस्योर्ध्वं प्रसर्पणम् । यो हि यस्यांशः, सः तदभिमुख एव सर्पति, अंशिना समाकृष्टत्वादिति सुप्रसिद्धाकर्षणविद्या महाभाष्यसिद्धान्तशिरोमणिप्रभृतिषु । तस्मात्सूर्यरसस्य सूर्याकर्षणप्रभावाद् युक्तमेवोर्ध्वं प्रसर्पणम् । पृथिवीरससम्बन्धात्तत्परिपोषः—स्थूलभागानां तत्रानुवृत्तिः । आन्तरिक्ष्यो वायुश्च तत्प्रसर्पणे साहाय्यमाचरति, आर्द्रतां च तत्र दधाति । तदित्थमङ्कुरस्य क्रमेण वृद्धिः, पुष्पफलाद्यवाप्तिश्च परस्परसम्बन्धरूपाद् यज्ञादेव । सूर्यस्य रसोऽग्निरूप आरक्तः, पृथिवी तु कृष्णेति तद्रसकृष्णः । उभयोः सम्मेलनाद् हरितानि अङ्कुरादीनि वृक्षपर्णानि च भवन्ति । प्रतिबन्धात् पृथिवीरसनिरोधे तु वृक्षपर्णादिकमङ्कुरादिकं च केवलसूर्यरसरूपात् पीतत्वमापद्यते । रक्तं हि परिणतं पीतं भवतीति ।

---

भाषाटीका

भाग ऊपरके छिलकेके भीतर की मज्जा ( गुद्दा ) समझो । इन दोनों भागों से सुरक्षित मुख्य-बीजभाग मध्यगत एक छोटा-सा वृन्त ( दोनोंको जोड़नेवाला ) होता है, उसके स्थानमें यहाँ इन्द्रको समझो । ( इस मुख्य दलवृन्त भाग में भी इन्द्र, अमृत, मर्त्य ) तीनों प्रकारके प्राण अन्तर्गत रहते हैं ।

जैसे यह मुख्यबीज पृथ्वी-अन्तरिक्ष-द्युलोक इन तीनों लोकोंके रसको तीनों प्राणों से खैंचने की शक्तिसे सम्पन्न तिहरा है वैसे ही इस इन्द्र को मन-प्राण-वाक्-रूप तीनों से तेहरा समझना चाहिए ।

[ मुख्यबीजमें तीन लोकों के रस यहाँ बताए गए । उनमें सूर्य के रसके द्वारा यह अंकुररूपमें ऊपर को उठता है, क्योंकि सूर्यरस पर सूर्यका आकर्षण रहना सदा स्वाभाविक है । इससे सूर्यसे खिंचकर वह रस ऊपरको ही जायगा । यह सजातीयाकर्षण विद्या हमारे शास्त्रों में महाभाष्य सिद्धान्तशिरोमणि आदि ग्रन्थों में स्पष्ट बताई गई है । अस्तु । पृथ्वी के रसद्वारा इसका स्थूल भाग से पोषण होता रहता है और अन्तरिक्ष का वायु । इसके फैलने में सहायता करता है और आर्द्रता

विकुरुते । प्राणो हि मानसं रूपमनु वाचो रूपं सृजति । तत्र मनःप्राणौ वाचमपीत इति वाच उल्बणत्वाद् वाङ्मय आत्मा । वाचश्चेन्द्रेष्वेकत्वादात्मायमिन्द्र इत्युच्यते । तथा च कौषीतकिश्रुतिराह—'तत्सर्व आत्मा वाचमप्येति, वाङ्मयो भवति। तदेतद् ऋचाऽभ्युदितम्—नेन्द्राद् ऋते पवते धाम किञ्चनेति । वाग् वा इन्द्रः । न ह्यृते वाचः पवते धाम किञ्चन'' इति ( २।७ )

---

संस्कृतव्याख्या

इन्द्रस्यापि बीजवदेव त्रिवृत्त्वं मूल उक्तम्, तच्च व्याख्यातपूर्वं पुनः स्मरणार्थम् । **मानसं रूपमनु** । यथा मनसि संकल्पः, तथैव वाचः स्थूलं रूपं भवतीत्यर्थः । वाचो रूपमिदं प्राणक्रिययैवेति प्राणस्य कर्तृत्वमुक्तम् । स्थूलेषु वागेव प्राधान्यं गच्छति,—मनःप्राणौ तु तत्रान्तर्गर्भितौ निलीनाविवेति वाङ्मय एवात्मानुभूयते । इदमग्रे कौषीतकिश्रुत्या स्पष्टार्थया प्रमाणीक्रियते । **वाचश्चेन्द्रेषु**—चतुर्दश हीन्द्राः श्रूयन्ते स्मर्यन्ते च, तेष्वेकतमा वागपीन्द्रः । स एव वाग्रूप इन्द्र एव सर्वपदार्थानां केन्द्रगतो भवतीति निरूपितं प्राक् । अयमेव स्थूलं पिण्डरूपं सृजति । अत्रैवेन्द्रे कंचिद्विशेषं व्याख्यातुमाह—

---

भाषाटीका

देता रहता है । इसी परस्पर सम्बन्धरूप यज्ञ से अंकुर बढ़ता हुआ पौधा बनजाता है, और उसमें पुष्प फलादिभी यज्ञ प्रक्रिया से हो आते हैं । सूर्यका रस अग्नि रूप होने से लाल वर्ण का है और पृथ्वी कृष्ण कहलाती है इसलिए उसका रस काला है, दोनों के मेल से अंकुर वा पत्ते आदि में हरा रूप होता है । जब किसी प्रतिबन्धक से पृथ्वी का रस रुक जाता है, तब पत्ते वा अंकुर आदि पीले पड़ जाते हैं । क्योंकि लाल रूप परिपक्व दशा में पीत बनता है ] ।

इन्द्र रूप प्राण में मन से संकल्प होता है, प्राण से प्रयत्न होता है, वाणी से विकार होता है । प्राण मन के अनुकूल ही श्रमद्वारा वाक् का रूप बनता है । इस वाक् में सुसूक्ष्म मन और प्राण छिपे रहते हैं । अतः वाक् के उभड़े हुए स्वरूप के कारण आत्मा को वाङ्मय कहा जाता है । वाणी भी इन्द्र के १४ रूपों में से एक है, अतः इस वाङ्मय आत्मा को ही इन्द्र कहते हैं । जैसा कि कौषीतकि ने कहा है—'प्रत्येक पदार्थ की आत्मा वाक्में प्रलीन है, अतः आत्मा वाङ्मय है । यह सिद्धान्त ऋचामें भी कहा हैकि-कोई भी स्थान इन्द्र के विना पवित्र वा क्रियाशील नहीं है । वाक् ही इन्द्र है, अतः वाक् के विना कोई भी वस्तु क्रियाशील या पवित्र नहीं है ।

इन्द्रस्यामृतमर्त्यस्य देवयोनित्वं भूतभावनत्वं च

तमिन्द्रमाकाशं ब्रुवते। आवपनमाकाशम्। अमृते च तत्राकाशे इन्द्रप्राणाख्ये विभवानामिन्द्रप्राणानां सर्वे विशेषा देवा उच्यन्ते। आग्नेयानामाग्नेयाः—अग्निवाय्वादित्याः। सौम्यानान्तु सौम्या

---

संस्कृतव्याख्या

**तमिन्द्रमाकाशं ब्रुवते।** आकाशपदेनापि श्रुतिष्वयमिन्द्र उच्यत इत्यर्थः। आकाशो हि शब्दघनः, स हि सर्वत्र व्याप्तः। स एव इन्द्ररूपः शब्दघनः समुद्रः, सरस्वान् इत्यप्युच्यत इति स्पष्टमुक्तं निरुक्तादौ। तत्रैव शब्दघने स्वतः प्रवहता आतोद्यैः प्राणिमुखादिभिश्च प्रेरितेन वा वायुना या ऊर्मय उत्पाद्यन्ते, ताः 'सरस्वती'पदेनोच्यन्ते। सरस्वतीति प्रसिद्धं वाङ्नाम, स एव शब्दोऽस्माभिः श्रूयते। वायुं विना न तरङ्गा इति सर्वत्र स्थितोऽपि शब्दघनो न श्रवणगोचरीभवति। तत एव कात्यायनेन महर्षिणा 'वायुः खात्, शब्दात्तत्' इति वायुरूपता शब्दस्योक्ता प्रातिशाख्ये। एनं शब्दघनमेव च नित्यं स्फोटरूपं वैयाकरणा मीमांसकाश्चाभिमन्वते। व्यापकत्वादस्मद्हृदयाकाशरूपेण स्थितोऽयं वायुनोत्पादितैर्ध्वनिभिरभिव्यञ्जितोऽर्थबोधको भवतीति कृतं विस्तरेण। **आवपनमाकाशम्।** आसमन्तात्—उप्यते बीजरूपेण स्थाप्यतेऽत्र सर्वमिति आवपनम्–'गोणी' इति भाषायां प्रसिद्धम्। आकाशादेव सर्वमुत्पद्यत इति बीजनिधानभूतत्वात् सर्वाधारत्वाच्चाकाशस्यावपनत्वं युक्तमेव। आकाशोऽपि मर्त्यामृतभेदेन द्विविधः, इन्द्रस्योभयरूपतया व्याख्याततत्वात्। तत्रामृताकाशाद्देवाः, मर्त्याकाशाच्च भूतान्युत्पद्यन्ते इत्यत्र प्रतिपादितं सुस्पष्टम्—'इन्द्रप्राणानामेव विशेषा देवाः, मर्त्यप्राणविशेषाश्च भूतानीति' शब्दैः। प्राणाः स्थूलतया परिण-

---

भाषाटीका

( १३ ) इस इन्द्रको आकाश कहते हैं। आवपन अर्थात् वस्तुओं का संग्रहस्थान आकाश है। आकाशसे ही आगेकी सृष्टि उत्पन्न होती है और उसीमें रहती है इसलिए आकाशको आवपन कहना युक्त ही है। आकाश शब्दघनरूप है और वह सर्वत्र व्यापक है। इसी इन्द्ररूप आकाशको श्रुतियोंमें समुद्र वा सरस्वान् भी कहा गया है, यह बात निरुक्तमें स्पष्ट है। इसमें स्वतः चलनेवाले अथवा बाजे आदिसे वा प्राणियों के मुखसे प्रेरित वायुके द्वारा जो इस शब्दघनमें तरंगें उठती हैं उन्हें सरस्वती कहा जाता है। सरस्वती वाणीका नाम है यह संस्कृतके कोषोंमें प्रसिद्ध है।

**बृहस्पतिदिग्भेदाद् द्विविधाः । ब्रह्मणस्पतिर्बृहस्पतिः । विद्युद् दिक् । तदित्थं पञ्चैव सर्वे देवाः । अथ मर्त्याकाशे शब्दवागाख्ये विचरतां मर्त्यप्राणानां रूपाणि भूतान्युच्यन्ते, ध्वनिवाय्वाग्नयः**

संस्कृतव्याख्या

मन्तो न कृत्स्नाः परिणमन्ति, अंशतस्तु परिणमन्तीति यावान् भागः परिणमति, स मर्त्यः, यावांस्तु अवशिष्टस्तत्र प्रविशति, सोऽमृत इति स्थूलतामप्राप्तानां देवरूपता । स्थूलतां प्राप्तानान्तु भूतरूपतेति तात्पर्यम् । इन्द्रो वाग्रूपतां गतोऽपि प्राणप्रधानः, अस्थूलत्वात् क्रियाप्रवणत्वाच्चेति तत्प्रपञ्चभूताः सप्त प्राणा ऋषय उक्ताः । तत एव ऋषिभ्यो देवानामुत्पत्तिर्मन्त्रादिभिराख्याता, मध्ये ऋषीणामेषां पितृरूपताऽपि प्राग् व्याख्यातैवेति सर्वं स्मर्तव्यम् । आग्नेयसौम्यभेदाभ्यां द्वैविध्यञ्च प्राणानां प्रागुपपादितम् । तत एव देवा अपि आग्नेयसौम्यभेदाभ्यां द्विविधाः । व्याख्यातपूर्वमन्यत्सर्वं मूलोक्तम् । ब्रह्मणस्पतिर्बृहस्पतिः । द्विविधो हि बृहस्पतिस्तारामण्डले । एको हि सौरजगति ग्रहरूपः प्रसिद्धः । परश्च वरुणलोके वरुणसहचारी महर्लोके स्थितः । स एव ब्रह्मणस्पतिरित्यप्युच्यते । स एवात्र सौम्यदेवत्वेन ग्राह्यः । दिक्पदेन च व्याख्यातपूर्वा विद्युदुच्यत इति ।

भूतेष्वपि द्वैविध्यमाह—ध्वनिवाय्वग्नयः । एते आग्नेया इति विरलावयवाः । एते च प्रसरन्तीति सञ्चारिण उक्ताः । न चैते परस्परं संहन्यन्ते ।

भाषाटीका

ये विचरते हुए तरंगरूप शब्द ही हमको सुनाई देते हैं । वायुके बिना तरंग नहीं होते, इसलिए शब्दघन सर्वत्र व्याप्त रहने पर भी सुनाई नहीं देता ] इन्द्रवाक् नामक अमृत आकाशमें इन्द्र प्राणोंमें जो विशेष उपलब्ध वा उत्पन्न होते हैं उन्हें देवशब्द से कहते हैं । आग्नेय प्राणों के विशेषण प्राण दो प्रकारके कहे जा चुके हैं—आग्नेय और सौम्य । उनमें से आग्नेय देव अर्थात् अग्निवायु आदित्य हैं । सौम्य प्राणों से सौम्य देव होते हैं, वे दो हैं-बृहस्पति और दिक् । ब्रह्मणस्पति को बृहस्पति तथा विद्युत् को दिक् कहा जाता है । इस प्रकार अग्नि, वायु आदित्य, ब्रह्मणस्पति और विद्युत् ये पांच ही मुख्य हैं । इनके भेद समस्त देवता हैं ।

इस के अतिरिक्त 'शब्द वाक्' नाम से प्रसिद्ध मर्त्याकाश है । उसमें विचरण करने वाले मर्त्यप्राणों के जो रूप हैं वे 'भूत' शब्दसे कहे जाते हैं । भूत पांच हैं, इनमें भी आग्नेय और सौम्य दो भेद हैं । आग्नेय होने के कारण ध्वनि, वायु और अग्नि ये प्रगतिशील शिथिलांग इकट्ठे होकर न रहने वाले हैं । और सौम्य होनेके कारण

सञ्चारिणो विरलावयवाः असंघस्वभावाः । जलमृत्तिके प्रतिष्ठमाने निविडावयवे सङ्घशक्तिविशिष्टे इति पञ्चैव तानि भूतानि । एषां सर्वेषां समवायाद् भूतग्रामरूपोऽयं प्रतिष्ठाप्रजापतिः पशुप्रजापतिश्चेति बोध्यम् ।

## इन्द्रब्रह्मतो वेदसृष्टिः ।

( १ ) वेदसृष्टिस्तावत्—इन्द्रामृतमर्त्यविग्रहोऽयमीश्वरो नामाद्यः प्रजापतिरकामयत—"भूयान् स्यां प्रजायेयेति । सोऽश्राम्यत् । स

---

संस्कृतव्याख्या

जलमृत्तिके प्रतिष्ठमाने । स्थितिशीले इत्यर्थः । प्रतिपूर्वकस्य स्थाधातोस्ताच्छील्ये चानशि रूपमिदम् । सौम्यत्वादिमे निविडावयवे–घनीभूतावयवे । प्रतिष्ठाप्रजापतिः पशुप्रजापतिश्चाग्रे प्रजापतिप्रकरणेऽनुपदं वक्ष्येते ।

इन्द्रब्रह्मना वेदसृष्टिः ।

वेदसृष्टिस्तावत् । वेदानां सृष्टिः—उत्पत्तिः, व्याख्यायत इत्यर्थः । प्रत्येकं पदार्थेषु एकैकः प्रजापतिरिति प्रदर्शितम् । सर्वेभ्यः प्रजापतिभ्यः पूर्वस्तु ईश्वरप्रजापतिः—ईश्वरशरीरस्थः प्राणरूपः प्रजापतिः, ईश्वररूपः प्रजापतिरिति वार्थः । नभ्यप्रजापतिपक्षे आद्यो विग्रहः, सर्वप्रजापतिपक्षे तु द्वितीयः । यथा तथा वा भवतु, तस्यापि विग्रहः शरीरम्, इन्द्रेण—नभ्यप्राणेन, अमृतैः, मर्त्यैश्च

---

भाषाटीका

जल और मिट्टी स्थिर रहने वाले दृढांग और परस्पर मिलकर नए-नए पदार्थ बनाने वाले हैं । ये ही पांच महाभूत हैं । इन सब की समष्टि जो कि भूतग्राम कही जाती है । वह प्रतिष्ठा या प्रजापति पशुप्रजापति नामसे प्रसिद्ध होती है । ( इन प्रजापतियों का निरूपण अभी आगे करते हैं )

इन्द्रब्रह्म से वेदसृष्टि

( १ ) अब वेदसृष्टिका वर्णन किया जाता है । वेदकी सृष्टि इस प्रकार हुई है कि-इन्द्र, अमृत और मर्त्य भागों से संबद्ध इस ईश्वर नामके प्रथम प्रजापतिने इच्छा की कि मैं बहुतरूपसे हो जाऊं अपनी सन्तान बढ़ाऊं । यह विचारकर उसने श्रम किया और तप किया । [ इच्छा श्रम और तपका तत्त्व पहिले बता चुके हैं उसे स्मरण कीजिये ] यों ईश्वर प्रजापतिने सर्वप्रथम ब्रह्मकी सृष्टि की उस ब्रह्मको ही त्रयीविद्या अर्थात् तीनवेद कहते हैं । " इस प्रजापतिके अनुसारही अन्य सभी प्रजापति इच्छा,

तपोऽतप्यत । स ब्रह्मैव प्रथममसृजत त्रयीं विद्याम् ।" तमन्वेवान्येऽपि सर्वे प्रजापतयः कामयमानास्तप्यन्तः श्राम्यन्तस्त्रयीं विद्या नाम स्वस्वविग्रहे पृथगिवोद्भावयन्ति । 'कारणधर्माः कार्यधर्मानारभन्ते' इति न्यायात् । सेयं त्रयी विद्यैव तस्य तस्य सर्वस्यात्मनः प्रथमा सृष्टिः । सा सा त्रयी विद्या तस्य तस्यात्मनः प्रतिष्ठा भवति ।

( २ ) ईश्वरो वातिक्षुद्रः कृमिकीटो वा सर्वोऽप्येष प्रजापतिः । सर्वाणि च भूतानि तस्यां त्रय्यां विद्यायां प्रतिष्ठितानि दृश्यन्ते ।

---

संस्कृतव्याख्या

प्राणैर्घटितम् । कामतपःश्रमाणां तात्पर्यं प्रागेवोपपादितं 'काम-तपःश्रमाः सृष्टिहेतवः' इति शीर्षके प्रकरणे । ब्रह्मैव—त्रयीं विद्याम्, असृजतेत्यन्वयः । शतपथश्रुतिरत्र क्वचित्पाठोद्धरणरूपेण क्वचिच्चार्थेनोद्धृता । यथेश्वरः प्रजापतिस्त्रयीं विद्यां सृजति, तथैव तदुत्पादितास्तत्कार्यभूता अन्येऽपि प्रजापतयः कारणमनुसृत्य त्रयीं विद्यां सृजन्तीत्यर्थः । त्रय्या विद्याया अर्थादृक्सामयजुषां तत्त्वमावेदितपूर्वम् । प्रतिष्ठा भवति । त्रय्या विद्याया आधारेणैव सर्वेऽप्यात्मानस्तिष्ठन्तीत्यर्थः । ऋग्यजुःसामान्येव तत्तत्पदार्थसत्तां बोधयन्तीत्यनेन उक्तम् । सुस्पष्टार्थमन्यत्, व्याख्यातपूर्वं च ।

---

भाषाटीका

तप और श्रमके द्वारा तीन वेदस्वरूप ब्रह्मको अपने अपने शरीरमें अलग-अलग उत्पन्न करते हैं। क्योंकि कारणके धर्म कार्यमें भी आतेहैं इस सर्वत्र प्रसिद्ध न्यायसे भी आद्यप्रजापतिके अनुसार अन्य प्रजापतियोंका चलना सिद्ध है । प्रत्येक आत्माको यह त्रयीविद्या ( वेद ) की सृष्टि पहिली सृष्टि हुआ करती है और अपनी अपनी वेदसृष्टि आत्माकी प्रतिष्ठा ( आधार ) होती है ।

( २ ) ईश्वर हो या अत्यन्त क्षुद्रकृमि कीट हो सभी ( अपनी अपनी प्रजाके ) प्रजापति हैं । यह सब प्रजापति और सब भूत अपने अपने वेदके आधारमें स्थित दिखाई पड़ते हैं । ऋक् यजुः और साम ये तीन वेद हैं । इस तीनसे चौथे अथर्ववेदको भी समझलेना चाहिये । क्योंकि सृष्टि अग्नि और सोम इन दो भागोंमें

ऋग्यजुःसामानि त्रयी विद्या। एषा चोपलक्षणं चतुर्थ्या अप्यथर्व-विद्यायाः। अग्नीषोमाभ्यां विभक्तायां सर्वस्यामपि सृष्टावग्निविभक्तिरूपायास्त्रय्या विद्याया अप्यग्रहितसंलग्नोर्ध्वदेशे सोमभक्ति-रूपाया अथर्वविद्याया अव्यभिचारेण सन्निवेशात्। न च सोमाहुतिं विनायमग्निः कुत्रापि रूपं धत्ते। सोमसंस्थैव चाथर्वणी विद्या।

"अन्तरा हि भृग्वङ्गिरसौ वेदानुदूह्य भृग्वङ्गिरसः सोमपानं मन्यन्ते। सोमात्मको ह्ययं वेदः।" इति गोपथ ( पू० २।७ ) श्रुतेः।

( ३ ) "ऋचामग्निर्दैवतम्, यजुषां वायुर्दैवतम्, साम्नामादित्यो दैवतमथर्वणां चन्द्रमा दैवतम्।" ( १।२९ )

---

संस्कृतव्याख्या

**अन्तरा हि भृग्वङ्गिरसौ।** भृग्वङ्गिरसौ तन्नामको प्राणौ, अन्तरा-एतत्प्राणमध्ये, वेदान्—ऋग्यजुःसामानि उदुह्य—स्थापयित्वा, भृग्वङ्गिरसः—एतन्नामानो मनुष्यर्षयः सोमपानं मन्यन्त इत्यर्थः। भृग्वङ्गिरसोऽथर्ववेदस्य ऋषयः। तदेतेन त्रय्या विद्ययाऽथर्ववेदस्य सहचारः सिद्धः।

---

भाषाटीका

विभक्त है। तीनों वेदोंका अग्निविभागमें समावेश है। इस अग्निसोमाके ऊपरी ( बाहरी ) हिस्सेमें सोमविभागरूप अथर्ववेदभी नियतरूपसे सदा रहता है. क्योंकि सोमकी आहुतिके विना अग्नि अपने रूपमें नहीं रह सकता [ अतः अग्निरूप तीनों वेदोंके साथ सोमरूप अथर्ववेदका रहना अनिवार्य है। यही कारण है कि त्रयी विद्या ( तीनों वेद ) शब्दसे ही अथर्ववेद को भी समझ लिया जाता है ] अथर्ववेद सोमविभागमें ही माना जाता है। जैसा कि गोपथश्रुतिमें कहा है—"भृगु और अङ्गिरा प्राणके मध्यमें वेदोंको स्थापित करके भृगु और अङ्गिरा ( मनुष्य ऋषि ) सोमपानका विधान करते हैं। यह चौथा अथर्ववेद सोमस्वरूप है।"

( ३ ) "ऋग्वेदका देवता अग्नि है, यजुर्वेदका वायु है, सामवेदका आदित्य है, और अथर्ववेदका चन्द्रमा देवता है।" यह भी कहा है। इस प्रकार तीनों वेद एवं उसके बाद वर्तमान अथर्ववेदरूप 'ब्रह्म' ( वेद ) में प्रतिष्ठित प्रजापति ब्रह्मसे व्याप्त है,

इति च तत्रैव श्रूयते। सोऽयं त्रय्यां विद्यायामथर्वविद्योत्तरायां ब्रह्मणि प्रतिष्ठितः प्रजापतिर्ब्रह्मावच्छिन्नत्वाद् ब्रह्मोच्यते। आत्मना ब्रह्मणा सृष्टोऽयं वेदो ब्रह्म। वेदावच्छिन्नस्यैवात्मनः सर्वत्र स्वरूपाधानान्नायं वेदो ब्रह्मणो व्यतिरिच्यते। विशिष्टं ह्येकं ब्रह्मेति विद्यात्।

वेदत्रये सहस्रशब्दः।

(४) प्रजापतेरेव सन्तायमानस्य सन्तानभूता इमे वेदा अभवन्। तथा च मनःप्राणाभ्यां कृतोदरा वागेवैते त्रयो वेदाः। सोऽयमस्या वाचः सन्तानः सहस्रमित्युच्यते।

---

संस्कृतव्याख्या

**ब्रह्मावच्छिन्नत्वाद्**। ब्रह्मणा वेदेन, अवच्छिन्नत्वात् कृतसीमत्वादित्यर्थः। चतुर्षु वेदेषु प्रतिष्ठितः प्रजापतिर्ब्रह्मशब्दवाच्यैर्वेदैः कृतमर्यादाबन्ध इति ब्रह्मपदेनोच्यते। वेदाश्च ब्रह्मणा—ब्रह्मशब्दस्य वृद्ध्यर्थेन, आत्मना सृष्टत्वाद्—उत्पादितत्वाद् ब्रह्मपदेनोच्यन्ते। निर्विशेष आत्मा हि न कस्यापि प्रतीतिगोचरो भवितुमर्हति। वेदैरवच्छिन्नः कृतमर्यादः ससीमस्तु प्रतीयत इति आत्मस्वरूपं वेदैरेवाहितम्। निःसीमो ह्यात्मा न स्वरूपवान्, अप्रतीतत्वादिति वेदो ब्रह्मणो न व्यतिरिच्यते—न पृथग्भवति। वेदविशिष्ट एव बृंहणस्वाभाव्याद् ब्रह्मोच्यत इति भावः। निर्धर्मके शब्दाप्रवृत्तेरिति।

**वेदत्रये सहस्रशब्दः**। इदमपि प्रकरणं व्याख्यातपूर्वं स्पष्टीकरणाय पुनः प्रोक्तम्। **अग्निपोषत्वम्**। अग्निः प्राणो यैः पुष्यति ते पश्वाद्याः पोषा

---

भाषाटीका

इसलिये वह भी ब्रह्म कहा जाता है। आत्मा ब्रह्म है। इससे उत्पन्न होनेके कारण वेदभी ब्रह्म कहा जाता है। ब्रह्मवेदसे सीमाबद्ध होकर ही आत्मा अपने स्वरूपकी रक्षा करता है, अतः वेद और ब्रह्म ये दो पृथक् पृथक् नहीं हैं, किन्तु वेदसहित एक आत्मा को ही ब्रह्म समझना चाहिये।

(४) प्रजापति ने बढ़ने का विचार किया इसलिये बढ़ते हुए प्रजापति के सन्तान भूत ये वेद हैं। ये तीनों वेद वस्तुतः मन और प्राण को मध्य में रखनेवाली

'एतद्वै सहस्रं वाचः प्रजातं यदेते त्रयो वेदाः ।' इति श्रुतेः ।

त्रय इत्युपलक्षणं चतुर्थस्यापि नान्तरीयकत्वात् । तैत्तिरीयब्राह्मणे साहस्रस्याग्निपोषत्वं श्रूयते—

'अग्निर्न्यवर्तयत स साहस्रमपुष्यत् । पृथिवी न्यवर्तयत, सौषधीभिर्वनस्पतिभिरपुष्यत् ।'' इत्यादि ।

'तिस्रो वाच ईरयति प्रवह्निः' इति मन्त्रस्येहापि तात्पर्यं संभवति ।

---

संस्कृतव्याख्या

इति पोषशब्दार्थोऽपि पूर्वमभिहितः । अग्निरेव वेदानुत्पादयति, तैश्च सहकारिभूतैः स्वयं पुष्यति, अतिरिक्तमपि च स्वस्वरूपं धत्त इति वेदानां पोषत्वाभिधाने बीजम् । अग्निर्न्यवर्तयत । अग्निः स्वरूपेण पूर्वं निर्वृत्तः संपन्नोऽभवत् । ततः साहस्रमपुष्यत् । साहस्रमुत्पाद्य तेनापुष्यदित्यर्थः । यथा पृथिवी पूर्वं स्वस्वरूपं दधती ओषधिवनस्पतीरुत्पाद्य ताभिः स्वयं पुष्यतीति ।

तिस्रो वाच ईरयति । अयं कृत्स्नो मन्त्रः-तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ऋ. ९।९७।३४। 'वह्निः-अग्निः, तिस्रो वाचः-ऋग्यजुःसामरूपाः प्रेरयति । कीदृशी वाक् ? तत्रोच्यते-ऋतस्य-यज्ञस्य, धीतिम्-धारयित्रीम् । ब्रह्मणः-सोमस्य मनीषाम्-मनसः स्वामिभूताम् । गावो यथा पृच्छमानाः-पृच्छन्त्य इव, गोपालम्-गवां स्वामिनम्, वृषभं वा यन्ति, तथा वावशानाः-

---

वाक् के ही रूप हैं । इस वाक् का विस्तार सहस्र शब्द से कहा जाता है । [ अतः तीनों वेद भी सहस्र हैं ] 'यह वाक् का सहस्र उत्पन्न हुआ है जो कि ये तीनों वेद हैं ।' यह श्रुति ने भी कहा है । यहां भी तीन में चौथे वेद को समझ लेना चाहिये, क्योंकि तीनों उसके बिना नहीं रह सकते और वह तीनों के बिना नहीं रह सकता। तैत्तिरीय ब्राह्मण में साहस्र को अग्निपोष अर्थात् अग्नि का पोषण करनेवाला बताया गया है । 'अग्नि पहले स्वयं सम्पन्न हुआ । अग्नि ने प्रगति को, जिससे उसने साहस्रको उत्पन्न कर उसके द्वारा अपने को पुष्ट किया । पृथिवी प्रथम सम्पन्न हुई । फिर उसने प्रगति की, उसने औषधि और वनस्पतियों के द्वारा अपने को पुष्ट किया ।''

'तिस्रो वाचः' इत्यादि श्रुतिका भी इस अर्थमें तात्पर्य होसकता है । श्रुतिका अर्थ है कि-आगे तीनों वाक्-ऋक्, साम, यजु को प्रेरणा करता है । वे वाक् यज्ञको धारण-

(५) तस्यैतस्य बीजपिण्डस्य शिपिविष्टाख्यस्य विष्कम्भः सहस्रप्रगुणितो यावदाकाशे प्रथमानो भ्रियते, तावदाकाश इमे वेदा इत्यतः सहस्रं नाम ।

"सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित्तत् ।

---

संस्कृतव्याख्या

कामयमानाः, मतयः—अस्माकं स्तुतयः, सोमं यन्ति—सोममभिलक्ष्य प्रवर्तन्ते, यद्वा मतयः-पूर्वोक्ता ऋगादिरूपा वाच एव, ताः सोमं प्रति प्रवर्तन्ते इति मन्त्रार्थः । अत्राग्नेः प्रेरणया ऋगादिरूपाणां वाचां सोमं प्रति गमनम्, ताभिरेव यज्ञधारणं च स्पष्टमेव, तेन साहस्रमिदं वहेरेवेति सिद्ध्यति ।

साहस्रपदेन सर्वस्य वितानस्याभिधाने हेतुमाह-तस्यैतस्य बीजपिण्डस्य । सन्ततनस्य बीजभूतः पिण्डो बीजपिण्डः, मूर्तिरूपेण यो दृश्यते सर्वैः । अयमेव शिपिविष्टपदेनोच्यत इति प्रागभिहितम् । तस्य यावान् विष्कम्भः—विस्तारः प्रदेशावगाहः,—यावत्याकाशप्रदेशे पिण्डस्य स्थितिः, तस्य सहस्रगुणितो विस्तारो यावन्तमाकाशदेशं व्याप्नुयात् तावन्तमवकाशमिमे तस्य पिण्डस्य वेदा व्याप्नुवन्तीति वेदाः साहस्रपदेनोच्यन्त इति भावः ।

अत्र सहस्रपदाभिधानेऽपि मन्त्रं प्रमाणयति-सहस्रधा पञ्चदशान्युकथा । मन्त्रार्थस्तु पञ्चदश यानि उक्थानि-अव्ययपुरुषस्याक्षरपुरुषस्य क्षरपुरुषस्य

---

भाषाटीका

करने वाली और सोमकी स्वामिनो हैं। जैसे गौएँ पूछती हुई स्वामी के पास जातीं हैं-उसी प्रकार ये सब वाक् सोमके पास जाती हैं। यहां तीन वेदों का सोम पर जाना स्पष्ट है।

(५) प्रत्यक्ष पदार्थका बीजपिण्ड (स्वरूप) जो शिपिविष्ट नामसे प्रसिद्ध है, उसका जितना विष्कम्भ (फैलाव) है उससे हजारगुना फैलाव जितने अवकाशमें रहें उतने अवकाशमें उस पदार्थके तीनों वेद व्याप्त रहते हैं। यह ऋग्वेदके 'सहस्रधा०' मन्त्रसे भी ज्ञात होता है।

इस वाक् सहस्रके द्वारा प्रजापतिके दो पीठ (स्तर) हो जाते हैं। एक तो इन्द्रसे अमृत मर्त्य पशु पर्यन्त 'शिपिविष्ट' नामका भीतरी पीठ है और दूसरा बाहरी रूप

सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक् ॥"
इति (ऋ. १०।१२४।८) मन्त्रश्रवणात। तथा चास्य प्रजापतेर्द्वे पृष्ठे संपद्येते, इन्द्रामृतमर्त्यपर्यन्तं शिपिविष्टाख्यमन्तःपृष्ठम्, सहस्रान्तन्तु बहिःपृष्ठम्।

### प्रजापतेर्दश व्यूहाः

(६) प्रजापतिश्चेत्थं दशविधः संपद्यते—१ इन्द्रस्तावदनिरुक्तो

---

### संस्कृतव्याख्या

च प्रत्येकं प्राग् व्याख्याताः पञ्च पञ्च कलाः संभूय पञ्चदश भवन्ति, उक्थे मूर्तिरूपे पिण्डेऽपि ताः समवेताः सन्तीत्युक्थस्य पञ्चदशत्वमुक्तम्। यद्वा प्राग् व्याख्यातः पञ्चदशः स्तोमो वायुदेवताकः, स एव वायुः प्राण इति प्राण एव पञ्चदशपदेनोक्तः, तस्योक्थं वं मुख्यमस्त्येव, तत एवोत्थानाद् भूतादीनाम्। तदेतदुक्थं सहस्रधा—सहस्ररूपेण भवति। तच्च सहस्रधा जातं द्यावापृथिवीमण्डले व्याप्नोति। साहस्रमण्डल एव द्यावापृथिवीविभागो भवति, सैव त्रिलोकीत्यवोचाम। एवं महिमानः—उक्थस्य महत्त्वानि सहस्रधा भवन्ति, इदं सहस्रमित्युच्यते। । यावच्च ब्रह्म-कारणीभूतम् वेदरूपं वा व्याप्नोति, तावत्येव वाग् विज्ञेयेति। वाचो व्याप्तिर्दभ्योऽपि परा अष्टचत्वारिंशदहःपर्यन्ता भवतीति रहस्यं विस्तरभयान्नात्र प्रपञ्च्यते।

साम्नोऽपि बहिःपृष्ठत्वमाह—द्वे पृष्ठे संपद्येते।

प्रजापतिशब्दोऽयमनेकेष्वर्थेषु स्थाने स्थाने प्रयुक्तः, तत्रान्यथा बोधो मा भूदिति प्रजापतिशब्दार्थान् सङ्गृह्य प्रदर्शयति—प्रजापतेर्दश व्यूहाः।

---

### भाषाटीका

जो सहस्र पर्यन्त व्याप्त है वह बाहरी पीठ है।

(६) [सम्पूर्ण निरूपण में अनेक जगह प्रजापति शब्द आया है उनमें भ्रान्ति न हो इसलिये प्रजापति शब्द के अर्थ संग्रह करके बता देते हैं कि दस प्रकार का प्रजापति होता है।

१ अनिरुक्तप्रजापति—केन्द्र में जो इन्द्रप्राण बताया गया है। इसे नभ्य शब्द से भी कहा जाता है।

२ प्राणप्रजापति—आत्मा और अङ्गरूप जो अमृत भाग कहा गया है, जिसमें

नभ्यो वा प्रजापतिः । २ आत्माङ्गलक्षणो मर्त्यभागो देवः शिरोऽग्नि-
र्निधेयाग्निर्वा प्रजापतिः । ३ आत्माङ्गलक्षणो मर्त्यभागो भूतं
शरीरं चित्याग्निर्वा प्रजापतिः । ४ ओषधिवनस्पतिचेतनादिप्राणि-
जातानि पशुप्रजापतिः । ५ त्रयी विद्या तु ब्रह्म वा यज्ञो वा सहस्रं
वा प्रजापतिः । ६ अथर्ववेदस्तु ब्रह्म वाथर्वा वा प्रजापतिः । ७ चातुर्विद्य-
मात्मनश्छादनं छन्दो वा प्रजापतिः । ८ मर्त्यान्तः स प्रतिष्ठा वा यज्ञो

---

संस्कृतव्याख्या

दशसु वक्ष्यमाणेषु व्यूहेषु सन्निवेशविशेषमात्रेषु समुदायेषु यः शक्तिविशिष्टः स्वामी स प्रजापतिरुक्त इति भावः । तत्राद्यः प्रजापतिर्नभ्यो यद्यपि न व्यूहः, तस्यैकरूपत्वात्, अथापि सन्निवेशे स्थित एव सोऽपि प्रजापतिपदेन व्यवह्रियते । सन्निवेशमन्तरेण नाभि-केन्द्रशब्दादिव्यवहारानुपपत्तेरिति सोऽपि व्यूह उक्तः । व्यूहस्य च स्वामीति व्यूहः प्रजारूपतया स च प्रजापतिरूपतया व्यवहार्य इति भावः । एवमग्रेऽपि प्रजात्वं प्रजापतित्वं तत्र तत्रोह्यम् । व्याख्यातमिदं सर्वं तत्र तत्रेति न पिष्टपेषणे प्रवर्तामहे ।

---

भाषाटीका

देवों की स्थिति बनाई है वह शिरःस्थ अग्नि। इसे चितेनिधे-याग्नि भी कहा जाता है।

३ भूत प्रजापति—आत्मा और अङ्गरूप जो मर्त्यभाग भौतिक शरीर के रूप में कहा है। इसे चित्याग्नि भी कहते हैं।

४ पशु प्रजापति—पिण्ड के बाहरी एवं उससे सम्बद्ध ओषधि वनस्पति चेतन कृमिकीट पशु मनुष्यादि जितने प्राणी हैं, जिन्हें पशुशब्द से विस्तारपूर्वक कहा जा चुका है।

५ सहस्र प्रजापति—त्रयी विद्या ( तीनों वेद ), ब्रह्म, यज्ञ, वा सहस्र शब्द से जो प्रसिद्ध है।

६ अथर्वा प्रजापति—त्रयी विद्या के बाहर व्याप्त सोमभाग जो अथर्ववेद या अथर्वा नाम से कहा जाता है।

७ छन्दः प्रजापति—चारों वेदों के अन्ततक व्याप्त जो आत्मा को छन्दन अर्थात् परिच्छिन्न कर देता है।

वा विराड् वा प्रजापतिः । ९ पश्वन्तस्तु विराड् वा शिपिविष्टो वा यज्ञो वा प्रजापतिः । १० सहस्रान्तोऽथर्वान्तो वा सर्वः प्रजापतिरिति ।

| | |
|---|---|
| १ | १ हृदयम् |
| | ३ चित्याग्निर्मर्त्यो भूतग्रामः शरीरम् । |
| २ | ४ पशुकाग्निः प्राणिवर्गः पशुग्रामः पोषाः । |
| | ५ वेदत्रयम् |
| | ६ अथर्ववेदः |
| | ७ चातुर्विद्यान्तः । |
| | ८ मर्त्यान्तः । |
| ३ | ९ पश्वन्तः । |
| | १० सहस्रान्तः । |

संस्कृतव्याख्या

'सर्वः प्रजापतिः' इत्यादौ सर्वा प्रजा, तत्राभिव्याप्ता शक्तिश्च तस्याः प्रजायाः पतिरित्येवम् नामधेयम् । तत्रापि जायमानानां पशूनां स सर्वोऽपि पतिरिति वा । प्रकारान्तरं चापि प्रजापतिस्थानादेरकं सुस्पष्टमिति तदप्यवधानेन द्रष्टव्यम् ।

भाषाटीका

८ विराट् प्रजापति—आत्मा अमृत और मर्त्य इन तीनों के समुदाय तक जो एक संघटित स्थिति । जो प्रतिष्ठा वा यज्ञ के नाम से कही जाती है ।

९ शिपिविष्ट प्रजापति—आत्मा से लेकर पशुभाग तक व्याप्त । इसे भी विराट वा यज्ञ कहते हैं ।

१० सर्व प्रजापति—आत्मा से लेकर सहस्रपर्यन्त वा अथर्वापर्यन्त भाग को संगृहीत करने वाला । [सर्व प्रजापति में सब कुछ अन्तर्गत हो जाता है ।]

( ७ ) तदित्थं दशविधत्वेऽपि प्राधान्यात् त्रैविध्यमेव नेयम् । नभ्य इन्द्रोऽनिरुक्तः प्रजापतिः, प्रतिष्ठा । शिपिविष्टो विराट् प्रजापतिः, तदुक्थम् । सर्वे लोकाः सर्वे वेदाः संवत्सरः प्रजापतिः, तत्साम । इत्थमेतं त्रिवृत्कृतमात्मानं विद्यात् ।

---

संस्कृतव्याख्या

दशसु त्रय एव मुख्याः, अन्ये तु तद्विस्तारभूता इति प्रतिपादयति—तदित्थं दशविधत्वेऽपि । त इमे त्रयः सम्यग् व्याख्यातपूर्वाः । आत्मानम् सर्वपदार्थस्वरूपम्, एवं त्रिवृत्कृतं रूपत्रयेण प्रगुणितं विद्यादिति सृष्टिप्रकरणस्योपसंहारः ।

---

भाषाटीका

( ७ ) इस प्रकार दस भेद होने पर भी मुख्य तीन भेद ही समझने चाहिये । १ एक मध्यवर्ती 'इन्द्र' जो अनिरुक्त प्रजापति है । वह 'प्रतिष्ठा' नाम से विख्यात है । २ दूसरा शिपिविष्ट—अर्थात् पिण्ड जो विराट् प्रजापति है । इसे 'उक्थ' भी कहते हैं । तीसरा संवत्सर प्रजापति जो सब लोक और सब वेदों का समुदाय है, इसे ही साममण्डल भी कहा जाता है । इस प्रकार प्रतिष्ठा-उक्थ-साम इससे तेहरे रूप का एक आत्मा समझना चाहिये ।



## सृष्टिप्रकरणनिष्कर्षः ।

( १ ) तदित्थमयमत्र निष्कर्षः—

अस्ति हीदं हिरण्मयमण्डं शरीरमिव । तत्रात्मा कश्चित् पुरुषः स्वतन्त्रस्तेजोघनः परदेवता नाम । स संवत्सरो नाम, स

---

संस्कृतव्याख्या

तदित्थं संक्षेपेण सृष्टिप्रक्रियां श्रुत्यभिमतां वर्णयित्वा सुखावबोधाय प्रकारान्तरेण तन्निष्कर्षमाह—अस्ति हीदं हिरण्मयमण्डम् । यदिदं पुरोदृश्यमानमण्डाकारं ब्रह्माण्डपदेन प्रसिद्धमस्ति, हिरण्मयमण्डं यच्छ्रुतिस्मृतिषु प्रकाशमयत्वात् ख्याप्यते, तच्छरीरस्थानीयं विज्ञेयम् । अस्मदादिशरीरेषु च यथा तदधिष्ठाता आत्मा स्थितः, तथास्य ब्रह्माण्डस्याप्ययस्त्यात्मा स च कश्चिददृश्यः, विशिष्यानिर्वचनीयः पुरुषः, य स्वतन्त्रः, तेजोघनः प्रकाशशीलश्च, स च परदेवताशब्देनापि ख्याप्यते । संवत्सराग्निप्रभृतीनि मूलोक्तानि तस्यैव नामानि । अत्रात्मपदेन निर्विशेषचैतन्यं न विवक्षितम्, अपि तु शरीरचक्रपरिचालको यथा शरीरे प्राणरूप आत्मा, तथैव ब्रह्माण्डेऽपि प्राणघनरूप आत्मायं जगच्चक्रपरिचालकः । सूक्ष्मशरीराभिमानि चैतन्यं व्यष्टिरूपेण तैजस इति, समष्टिरूपेण च हिरण्यगर्भ इत्याख्यायते वेदान्तग्रन्थेष्वित्युक्तमधस्तात् । सूक्ष्मशरीरे च प्राण एव प्रधानम् । मनइन्द्रियादीन्यपि 'प्राणाः' इत्येव व्यवह्रियन्त उपनिषत्सु । ते चैतन्यविशिष्टाः प्राणा एव हिरण्यगर्भादिपदैरुच्यन्ते । सर्वकारणभूतं हि चैतन्यं तत्रानुस्यूतमिति । ततश्च स्थूलोत्पत्तेः प्राग् यावान् प्राणानां प्ररूचः पूर्वेषु प्रकरणेष्वाख्यातः, स एव हिरण्यगर्भपदेनाभिधीयते । स्थूलभूतोत्पत्त्यनन्तरं तदभिमानित्वे व्यष्टि-समष्टिभेदेन 'विश्व'-संज्ञा 'विराट्' संज्ञा चास्य भवतीति विराट्प्रकरणे निरूपितपूर्वम् । इह तु

---

भाषाटीका

( १ ) इस पूर्वोक्त विस्तृत सृष्टिप्रकरण का सारांश दूसरी प्रक्रिया से बताते हैं कि इस प्रकार यह सारांश निकला कि यह सम्पूर्ण ब्रह्माण्ड जिसे सुवर्ण का अण्डा शास्त्रों में कहा गया है, वह एक शरीर के समान है। इस अण्डे में आत्मा स्वरूप परदेवता नाम का एक स्वतन्त्र पुरुष है, जो तेजोघन अर्थात् तेजोमय मूर्तिवाला है। वही संवत्सर ( अग्नि ) नाम से प्रसिद्ध है, वही वैश्वानर है, वही

वैश्वानरः, स हिरण्यगर्भः, स सर्वज्ञः । तमुपलक्ष्य श्रूयते—

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् । इत्यादि ।

---

संस्कृतव्याख्या

वैश्वानरपदेन विराट्समानार्थकेनायमेव व्याख्यते, कार्यकारणयोरभेदाभिमानात् । एवमेव सर्वज्ञो यद्यपि कारणशरीराभिमानी हिरण्यगर्भस्यापि पूर्वजः, तथापि सोऽत्रानुस्यूत इति सर्वज्ञपदेनाप्यत्र हिरण्यगर्भोऽभिहितः । सृष्टिप्रक्रियायां क्रियाप्रधानस्य हिरण्यगर्भस्यैव मुख्यत्वावगतेः ।

तत्प्रतिपादकान् मन्त्रानाह—सहस्रशीर्षा । स्पष्टार्थाः प्रसिद्धाश्च त्रयोऽपि मन्त्राः । सहस्रशीर्षेति पुरुषसूक्तमन्त्रोत्तरार्द्धे भूमिमिति सकलब्रह्माण्डबोधकम्, सर्वं ब्रह्माण्डमावार्येत्यर्थः । दशाङ्गुलमत्यतिष्ठत्—अतिक्रम्यातिष्ठत् । ब्रह्माण्डाद् बहिरपि व्याप्तिरनेन दर्शिता, दशाङ्गुलमित्युपलक्षणमात्रमिति केचिद् व्याख्यातारः । दशाङ्गुलपदेन दश दिश उपलक्ष्यन्ते, तेन दशसु दिक्षु अत्यतिष्ठद्-बहिरपि स्थित इत्यन्ये । दशपदेन विराडुपलक्ष्यते तेन विराड्रूपेण अत्यतिष्ठदिति परे । प्राणप्रधानस्य हिरण्यगर्भस्येदं सूक्तम् । प्राणस्य च व्याप्तिः प्रादेशमिते प्रदेशे भवति, यथास्मदादिशरीरे—मूलाधारे योनौ नाभौ हृदये कण्ठकूपे भ्रूमध्ये शिरसि च प्रतिप्रादेशं षट्सु चक्रेषु तन्त्रयोगादिप्रसिद्धेषु

---

भाषाटीका

हिरण्यगर्भ है, वही सर्वज्ञ है । पुरुष के लिए ही श्रुतियों में कहा जाता है—

"एक पुरुष जो अनन्त शिर, अनन्त आँख और अनन्त पैरवाला है, वह इस समस्त पृथिवी (ब्रह्माण्ड) को चारों ओर से घेर कर दस अङ्गुल क्षेत्र का अतिक्रमण करके ठहरा है । [ प्राण की व्याप्ति प्रादेशमात्र अर्थात् दस अङ्गुल को छोड़कर होती है । जैसा कि हमारे शरीर में मूलद्वार, योनिस्थान, नाभि, कण्ठकूप, भ्रूमध्य और शिर ये प्राण के स्थान दस दस अङ्गुल पर हैं । इस विवरण से स्पष्ट विदित होता है कि यह पुरुषसूक्त संवत्सर पुरुष अर्थात् प्राणमय आत्मा की ही स्तुति है । कुछ विद्वान् यह अर्थ करते हैं कि दस अङ्गुल उपलक्षणमात्र है, ब्रह्माण्ड से बाहर भी व्याप्त है इतना

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकआसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" । इत्यादि ।
"तस्मात्परं नापरमस्ति किञ्चित् तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।" इत्यादि ।

---

### संस्कृतव्याख्या

प्राणानां स्थितिराख्यायते । प्रादेशश्च दशाङ्गुलपरिमित इति दशाङ्गुलमतिक्रम्य तिष्ठति प्राण इत्येव विज्ञानमत्र बोधितमिति मर्मज्ञाः ।

द्वितीये मन्त्रे दाधारेति छान्दसः प्रयोगः । दधारेत्यर्थः । कस्मै देवायेति कशब्दः प्रजापतिबोधकः, प्रजापतये हविषा विधेम—हविःप्रदानं कुर्म इत्यर्थः । यद्वा ईदृशं हिरण्यगर्भमतिक्रम्य अन्यस्मै कस्मै हविषा विधेम ? न कोऽपि तादृश इत्यर्थः ।

तृतीये मन्त्रे वृक्ष इव स्तब्ध इति अप्रचलः कूटस्थ इत्यर्थः ।

---

### भाषाटीका

ही समझना । कई दस अङ्गुल से दश दिशाओं का अभिप्राय बताते हैं । दस दिशाओं में बाहर भी व्याप्त है और कई दसको विराट् का बोधक मानकर विराट्-रूपता पुरुष की बताते हैं ।

दूसरे मन्त्रका अर्थ है कि-'सर्वप्रथम सृष्टिके प्रारम्भमें हिरण्यगर्भ का प्रादुर्भाव हुआ । यह उत्पत्तिकालसे ही समस्त भूतों (दृश्य पदार्थों) का अकेला (स्वतन्त्र) स्वामी हुआ । इसने पृथिवी तथा इस द्युलोक को धारण किया है, अतः इससे अतिरिक्त किस देवताकी हविसे उपासना करें । अथवा 'क' नाम प्रजापतिका है, और हिरण्य-गर्भ प्रजापति है, इससे यह अर्थ करना कि प्रजापति देवताको हम हविसे पूजा करते हैं ।

तीसरे मन्त्रका अर्थ है कि-इस एक पुरुषने उत्कृष्ट कोई नहीं है, इससे अपकृष्ट भी कोई नहीं है । अर्थात् दूसरा कोई है ही नहीं । यही एक सब कुछ है । इससे बड़ा

(२) एकमूर्तिरेते त्रयो देवाः संवत्सर एव। सा परदेवता। तस्य जागर्तिरेषा विश्वप्रपञ्चप्रवृत्तिः। अथ सुप्तिः प्रलयावस्था। अथ सुषुप्तिर्महाप्रलयावस्था। अथ पुनर्जागर्तिः पुनः सृष्टिः। एवमयमनाद्यनन्तः स भगवान् विश्वात्मा सनातनः परमेश्वरः। तस्य हि नास्ति मृत्युः। मृत्युर्हि नामास्य शरीरिणस्तैजसः परदेवतायामपीत्यैवोपपद्यते। न चैतस्याः परदेवताया अन्यत्रापीतिः श्रूयते। तस्मान्नास्य मृत्युरुपपद्यते।

(३) स नः परमात्मा। तमेवैतमाराधयामो यमाराधयामः

---

संस्कृतव्याख्या

एते त्रयो देवाः। ब्रह्मविष्णुमहेश्वरेतिप्रसिद्धा ईश्वररूपा एकरूपेण हिरण्यगर्भ एवेत्यर्थः।

सुप्तिः—स्वप्नः। सुषुप्तिः—गाढनिद्रा।

तस्य हि नास्ति मृत्युः। प्राणो हि अव्ययपुरुषकलेति तस्य नित्यत्वमेव। न ह्यव्ययः पुरुषः कदापि नाशं गच्छति। आविर्भावतिरोभावावेव तत्कालानां भवतः। जागर्तिरेव 'एतस्माज्जायते प्राणः' इत्याद्यासु श्रुतिषु उत्पत्तिरूपतयाभिहितेत्यर्थः। यस्तु प्राणानां प्रपञ्चः पूर्वस्मिन् प्रकरणे आख्यातः, तस्य मुख्ये प्राणे लयः सुषुप्तिस्थानीय एवेति भावयन्तु विद्वांसः।

अपीत्यैवोपपद्यते। अपीतिः लयः। अन्येषां शरीरिणां तैजसः प्राणस्य परदेवतायाम्—हिरण्यगर्भे, लयो भवतीत्येव मृत्युरुच्यते। हिरण्यगर्भस्य तर्हि क्व लयो भवतु, तदन्यस्य प्राणतत्त्वस्याश्रवणादिति।

यमाराधयामः सर्वं वैकदेशं वा। प्राणप्रधानोऽक्षरपुरुषः, स एव विकासं गच्छन् हिरण्यगर्भरूपतां याति। अक्षरपुरुष एव चाराधनीयो भक्त्युपासकानाम्। ब्रह्मा, विष्णुः, महादेवः, (इन्द्रः) इत्याद्या हि तदीयाः कलाः। ता एव यथाधिकारं जनाः पर्युपासत इति तदेकदेशोपासना। केचित्तु तस्यैव प्राणस्य मूलावस्थां शक्तिमुपासत इति ते सर्वोपासकाः शाक्ताः। केचन शालग्रामशिलादिषु हिरण्यगर्भसादृश्यमभिलक्ष्य तां प्रतीकतयोपासते। यथा हि हिरण्यगर्भशरीरे मध्ये दीप्तं सौरं तेजः, परितस्तु श्यामः सोमः, तथैव शालग्रामशिलास्वपि मध्ये हिरण्यम्—स्वर्णम्, परितस्तु कृष्णवर्णः प्रस्तर इति हिरण्यगर्भसादृश्यात्तत्र समुपयुक्ता हिरण्यगर्भोपासना। सादृश्येन बुद्धिर्झटिति प्राप्ये स्थाने गच्छतीति। यद्यपि परं ब्रह्मैव सर्वसमुपास्यम्, परं निष्कर्मके

सर्वं वैकदेशं वा। तस्यैव त्वङ्गप्रत्यङ्गानां प्रतीकभूता एते वयं सर्वे दृश्यामहे जङ्गमाश्च स्थावराश्च। चेतनाश्चाचेतनाश्च। अनशनाश्च साशनाश्च। अमृताश्च मर्त्याश्च। मूर्तं चामूर्तं च। सच्चासच्च। न ततोऽतिरिच्यते किञ्चित्।

---

संस्कृतव्याख्या

तस्मिन् न मनो गच्छतीति जगद्व्यापारपरिचालकमीश्वरं द्वारीकृत्यैव ब्रह्माप्युपासितव्यं भवति। भगवद्गीतासु तु भगवता अक्षरोपासनायामपि काठिन्यमुद्भाव्य विराडुपासना, अवतारोपासना वा सर्वेषां हितायोपदिष्टा। विराडपि न हिरण्यगर्भात् पृथक् न चावतारा अप्येतस्माद्बहिर्भूता इति सर्वाप्युपासनाऽत्रैवान्तर्भवतीति युक्तं वचः।

**प्रतीकभूताः**। अङ्गप्रत्यङ्गानामप्यङ्गप्रत्यङ्गभूता इत्यर्थः। अनशनाश्चेत्यादिना 'साशनानशने अभि' 'अमृतं च मर्त्यं च' इत्याद्याः श्रुतय एवानूदिताः।

---

भाषाटीका

और इससे छोटा भी कोई नहीं है। यह अविचल वृक्षके समान अकेला द्युलोकमें रहता है। अर्थात् सबके ऊपर प्रकाशमान रहता है। इस पुरुषसे समस्त जगत् परिपूर्ण है। इन मन्त्रोंमें हिरण्यगर्भका ही वर्णन है और इनसे उसकी सर्वव्यापकता और समस्त जगत्की आत्मस्वरूपता सिद्ध होती है। [ वेदान्तशास्त्रमें सूक्ष्मशरीराभिमानी ईश्वरको हिरण्यगर्भ कहा है। सूक्ष्मशरीरमें प्राण ही प्रधान रहता है, इन्द्रिय मन आदिको भी श्रुतिमें प्राण शब्दसे व्यवहार है। इसलिये ग्रन्थकारने प्राणप्रपञ्चको हिरण्यगर्भ बताया है। यद्यपि कारणशरीराभिमानी ईश्वरको सर्वज्ञ और स्थूल शरीराभिमानीको विश्व वा विराट् कहा जाता है, किन्तु सृष्टिप्रकरणमें प्राण ही प्रधान है, इस लिये यहां हिरण्यगर्भको ही सर्वज्ञ और वैश्वानर भी कह दिया गया। कारणशरीराभिमानी भी सूक्ष्मशरीराभिमानीमें अन्तर्यामीरूपसे रहता ही है इसलिये हिरण्यगर्भको सर्वज्ञ कहना विरुद्ध नहीं होता। ]

(२) प्रसिद्ध सृष्टि-स्थिति-संहारके अधिष्ठाता ब्रह्मा, विष्णु, महादेव ये तीन देवता एकमूर्त होकर 'संवत्सर' रूप ही हैं। संवत्सर ही परदेवता है। उसकी जाग्रत् अवस्था ही इस समस्त विश्वकी स्थिति है, उसका शयन (स्वप्न) विश्वका प्रलयावस्था है और उसकी प्रगाढ निद्रा (सुषुप्ति) ही विश्वकी महाप्रलयकी अवस्था है। उसका

भाषाटीका

पुनः जागरण सृष्टि को पुनः उत्पत्ति है । इस प्रकार यह आदि और अन्तरहित विश्वात्मा भगवान् सनातन ( सर्वदा स्थायी ) परमेश्वर है । इसकी मृत्यु नहीं होती है । मृत्यु शब्दका व्यवहार इस अर्थ में है कि–इस शरीर ( क्षेत्र ) के अन्तर्गती तेज, स्वरूप प्राण आत्माका परदेवतामें मिलजाना । परन्तु इस परदेवता संवत्सरको अन्यत्र कहीं अपीति ( मिलजाना ) वेदके द्वारा ज्ञात नहीं होता, अतः इसकी मृत्यु नहीं हो सकती है । [ अव्ययपुरुषकी कलारूप में जो प्राण बताया गया है, वह सदा ही रहता है, उसका लय नहीं होसकता । जो प्राणोंका प्रपञ्च पूर्ण कहा है, उसका लीन होजाना एक प्रकारकी सुषुप्ति ही है । ]

(३) वही हम प्राणधारियों का परमात्मा है । हम जिस किसी की भी आराधना अर्थात् उपासना करते हैं वह इसके ही पूर्णरूपकी या अंशरूपको आराधना करते हैं । अर्थात् सब रूपों से इसकी उपासना होती है । [ यद्यपि मुख्य आराध्य निर्विशेष पर ब्रह्म है, किन्तु विना गुण धर्म के उपासना नहीं हो सकती, इसलिए जगत् उत्पत्ति, स्थिति करने वाला प्राणाभिमानी हिरण्यगर्भ ही उपास्य ठहराया जाता है । प्राणप्रधान अक्षर पुरुष से इस प्राणप्रधान हिरण्यगर्भ की एकरूपता की भावना की जा सकती है । अक्षरपुरुषकी कलामें ब्रह्मा, विष्णु, महादेव (इन्द्रही अग्नि और सोम से मिला हुआ महादेव कहा जाता है ) अग्नि, सोम आते हैं, वे ही उपासना के आधार माने जाते हैं । इनमें से अधिकारानुसार किसी एक की उपासना एकदेशोपासना है । सम्पूर्ण प्राण की प्रथमावस्था शक्ति के रूप में इसकी उपासना सर्वोपासना है । भगवान् ने भगवद्गीता में अक्षर उपासना को भी क्लेश प्रद बताकर विराट् की उपासना वा अवतारोपासना का उपदेश दिया है । वह विराट् भी हिरण्यगर्भ से पृथक् नहीं, । इसकी ही विकासप्राप्त अवस्था है । अवतार भी हिरण्यगर्भ से बाहर नहीं हो सकते । इससे सब उपासना हिरण्यगर्भ की ही सिद्ध होती है । शालग्रामशिला में हिरण्यगर्भ की उपासना बहुत उपयुक्त है, क्योंकि वह हिरण्यगर्भ के सदृश है । हिरण्यगर्भके शरीर ब्रह्माण्डमें बीचमें चमकता स्वर्ण रहता है और चारों ओर कृष्ण प्रस्तर । इस सादृश्यसे बुद्धि शीघ्र हिरण्यगर्भ पर पहुंच जाती है । इससे यह उपासना महत्त्वकी है । ] इस परमात्माके ही अङ्ग प्रत्यङ्गोंके अंशभूत हम सब दिखाई पड़ रहे हैं, जो स्थावर, जङ्गम, चेतन, अचेतन, अमृत ( मृत्युरहित ), मर्त्य, ( मृत्युशील ), खानेवाले, वा न खानेवाले, मूर्त और अमूर्त, सत् और असत्, जो कुछ है इस हिरण्यगर्भसे कुछ भी अतिरिक्त नहीं है । यह सर्वरूप है ।

(४) तस्य ये शारीराः प्राणाः—त एते सृष्टिप्रवर्त्तकाः पुराण-ऋषयः। यथा चैतस्मिन्-मनुष्यशरीरे प्राणा एव सर्वाः सृष्टीः कुर्वते —भूतमात्राः सृजन्ति, सर्वान् रसान्, भौतिकान् वा धातून्। अथ तेजोमात्राः सृजन्ति—सर्वाणि बलानि, सर्वाणि संज्ञाचेष्टाकर्माणि, अथ प्रज्ञामात्राः सृजन्ति—सर्वाणीन्द्रियाणि, सर्वाणि चैन्द्रियकाणि ज्ञानकर्माणि। पितॄन् वा, देवान् वा, असुरान् वा, यच्च यावच्चेह किञ्चित् पश्यामः, सर्वं तत्प्राणायत्तम्। प्राणादुत्तिष्ठते, प्राणे प्रतितिष्ठति, प्राणे च सन्तिष्ठते। प्राणो ह्येषां प्रभवश्च प्रतिष्ठा च

---

संस्कृतव्याख्या

अस्मदादिशरीरेषु त्रिविधा अवयवाः—भूतमात्राः, तेजोमात्राः, प्रज्ञामात्राश्चेति। ताः सर्वाः प्राणेनैव परिचाल्यन्त इति तास्तदीयानि कार्याणि च मूलेऽभिहितानि—भूतमात्राः सृजन्ति इत्यादिना।

---

भाषाटीका

(४) उस परमपिता परमात्मा हिरण्यगर्भ के शरीर में स्थित जो प्राण हैं, वे ही सृष्टि के प्रवृत्त करनेवाले पुराण ऋषि के नाम से विख्यात हैं। जिस प्रकार हमारे मनुष्य शरीर में प्राण ही सब सृष्टि करते हैं—भूत-मात्राओं का निर्माण करते हैं, उनसे सब प्रकार के रसों को और भौतिक धातुओं को बनाते हैं, तेजोमात्राओं का निर्माण करते हैं, उनसे सब प्रकार के बल तथा सब प्रकार की संज्ञा चेष्टा आदि क्रियाएँ चलाते हैं। प्रज्ञामात्राओं को उत्पन्न करते हैं, उनसे इन्द्रियों और इन्द्रिय सम्बन्धी ज्ञान और कर्मों को प्रवृत्त करते हैं। [शरीर में तीन प्रकार की मात्राएँ काम करती हैं—भूतमात्रा, तेजोमात्रा और प्रज्ञामात्रा। तीनों के उत्पादक और परिचालक प्राण ही हैं] पितर, देवता, असुर, इत्यादि जितना जो कुछ भी इस शरीर में जाना जाता है, सब प्राणाधीन ही है। [शरीर में भी पितृ देवता आदि हैं यह आरम्भ में ही कहा जा चुका है] इन सब वस्तुओं की उत्पत्ति प्राणों से ही होती है, ये सब प्राणों के ही आधार से रहते हैं, और प्राणों में ही लीन होते हैं। प्राण ही इन सबका उत्पत्तिस्थान स्थितिस्थान और लयस्थान है। इसी प्रकार

परायणं च । एवमेवेह पुराणेऽपि प्राणमेव त्रिचरणं विशात् ।

"अयं वै प्राणो योऽयं पवते । यो वै प्राणः, स आयुः । सोऽयमेक इवैव पवते । सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितः ।" इति राजसूयश्रुतेरेते दशैवास्मिन् शरीरे प्राणा आविर्भवन्ति, दशैव चामुष्मिन् । तैजसाद्धि मनोरनेनेऽत्र शरीरे प्राणाः प्रभवन्ति, हैरण्यगर्भात्तु मनोरमुष्मिन् ।

(५) तदुक्तं मनुना मानवीये—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।

---

संस्कृतव्याख्या

पुराणेऽपि । पुराणाकाशेऽपीत्यर्थः । हृदयाकाशः, पुराणाकाशः, परमाकाश इति त्रिधा विज्ञायमान आकाशे ब्रह्माण्डावच्छिन्नः पुराणाकाशः, तत्रैव ऋषिदेवाद्यास्तिष्ठन्ति । परमाकाशस्तु अपरिच्छिन्न इति ।

दशैवास्मिन् शरीरे । शरीरे दश प्राणाः प्राक् पद्येषु प्रतिपादिताः ब्रह्माण्डे दश प्राणाः—दश ऋषयः अग्रे मनूक्तेषु श्लोकेषु उच्यन्ते ।

आसीदिदम् । इदं सर्वं दृश्यमानं जगद्, उत्पत्तेः पूर्वं तमोभूतम्-तमसा-

---

भाषाटीका

पुराणाकाश में भी प्राणों को सवका धारण करनेवाला समझना चाहिये। [ आकाश तीन प्रकार का कहा जाता है—हृदयाकाश, जो कि प्राणियों के हृदय में स्थित है, दूसरा पुराणाकाश—जो कि ब्रह्माण्ड में व्याप्त है, और तीसरा परमाकाश-जो अनन्त अपरिच्छिन्न है, उसमें अनन्त ब्रह्माण्ड रहते हैं ] इस अंश में श्रुति का प्रमाण देते हैं। श्रुति का अर्थ है कि—'यह जो वायुरूप से चलता है, वह प्राण ही है, प्राण ही आयु है। यह प्राण एक ही रूप से चलता है। वह पुरुष में अन्तः-प्रविष्ट होकर दस प्रकार का हो जाता है।" इस प्रकार राजसूय श्रुति ने इस शरीर में दस प्रकार के प्राणों का आविर्भाव बताया है। इसी प्रकार ब्रह्माण्डरूप शरीर में भी दस प्राण हैं। [ प्राणों को भौतिक वायुरूप नहीं समझना चाहिये, किन्तु देवता-रूप, जो भौतिक वायु का भी परिचालक है, उस ही की प्राणरूपता श्रुति ने बताई है। यह पूर्व भी कहा जा चुका है ] तैजस मनुसे हमारे शरीर में प्राण उत्पन्न होते हैं, और हिरण्यगर्भ से उत्पन्न मनु से उस ( ब्रह्माण्ड ) में।

(५) यह सब विषय मनुस्मृतिमें मनुद्वारा वर्णित हुआ है। श्लोकोंका अर्थ है कि—

अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ।
ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । मनु. (१।५)
महाभूतादिवृत्तौजाः प्रादुरासीत्तमानुदः ।
सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः । (१।६)

---

संस्कृतव्याख्या

तमोगुणेन आक्रान्तं तद्रूपतां गतमासीत् । अप्रज्ञातमिति–इन्द्रियैरग्राह्यमित्यर्थः । अलक्षणम्—व्यञ्जकचिह्नरहितम्, अत एव अप्रतर्क्यम्—अनुमानेन अविज्ञेयम् । अनिर्देश्यम्–शब्दप्रमाणेनाप्यवेद्यम्, निर्धर्मत्वात्, शब्दस्यापि धर्मविशिष्टाभिधायकत्वात् । तर्हि नैव किञ्चिदिति शून्यवादप्रसङ्ग इति चेन्नेत्याह-प्रसुप्तमिव । यथा वर्तमानमपि सर्वं सुषुप्तावस्माभिर्न ज्ञायते तथैव वर्तमानमपि सर्वं तमसाक्रान्तत्वात् प्रमाणैर्न ज्ञायत इत्यर्थः ।

ततः स्वयम्भूः । स्वयम्भूर्भगवानयं हिरण्यगर्भ एव, स स्वयमव्यक्तोऽपि इदं महाभूतादि व्यञ्जयन् प्रादुरासीत् । तत्कृता अप्सृष्टिः । तत्र हैमाण्डसृष्टिश्चाग्रेऽभिहिता । परे तु लोकसृष्टिरियमिति व्याचक्षाणा स्वयम्भूरिति सर्वप्रथमं प्राणमयं स्वयंभूमण्डलम्, तदुत्तरम्, अप इति परमेष्ठिमण्डलम्, तदुत्तरं हैमाण्डरूपेण सूर्यमण्डलमिति विवृण्वते । तस्मिन् ब्रह्म जज्ञे इति ब्रह्मात्र विराड्रूपोऽग्निर्विज्ञेयः । स च न परब्रह्मणोऽतिरिक्तः, किन्तु परब्रह्मणा विसृष्टत्वात्तद्रूप एवेति पञ्चमे श्लोक उक्तम् ।

---

भाषाटीका

"प्रलय कालमें सृष्टि उत्पन्न होने से पूर्व यह सब सृष्टिप्रपञ्च अन्धकार रूप था, अर्थात् तमोगुणमें लीन था । अप्रज्ञात अर्थात् इन्द्रियों द्वारा जाननेयोग्य न था । इसका परिचय पानेके लिए कोई चिह्न शेष न था, इसलिये अप्रतर्क्य अर्थात् अनुमान से भी अगम्य था । और अनिर्देश्य अर्थात् शब्द-प्रमाण से भी नहीं जाना जा सकता था, शब्द भी गुण धर्म द्वारा ही वस्तु को बता सकता है, उस पूर्वावस्था में कोई गुण धर्म न होने के कारण शब्द से भी उसका ज्ञान नहीं हो सकता । मानों सब कुछ गाढनिद्रा में सो रहा था ।

इसके अनन्तर अव्यक्त-अप्रकट रहने वाले-एवं परिपूर्ण बल वाले, अन्धकार को नाश करनेवाले स्वयम्भू भगवान् इस जगत् प्रपंच को व्यक्त करते हुए आविर्भूत हुए ।

अप एव ससर्जादौ तासु बीजमवासृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।(१।८)
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। (१।९)
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते। (१।११)

मनुराह—

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतीन् प्रजानामसृजं महर्षीनादितो दश॥
—मनुः १।३४;

---

भाषाटीका

स्वयम्भू भगवान् ने अपने शरीर से सब प्रकार के चल और अचल प्रपञ्च को उत्पन्न करने की इच्छा से सर्वप्रथम 'अप्' का निर्माण किया, और उस अप में बीजवपन किया। [अप्–जलकी सूक्ष्मावस्था है, जिसे आजकल के वैज्ञानिक 'हाइड्रोजन' कहते हैं। वह बीज एक सुवर्णका अण्ड बन गया, जो कि सूर्य के समान कान्ति-वाला था। सब लोकों के पितामह स्वयं ब्रह्मा उसमें से प्रकट हुए। जो कि समस्त विश्वप्रपञ्च के मूल कारण हैं, अव्यक्त हैं, नित्य हैं, सत् और असत् दोनों रूप हैं, उन भगवान् ने जिस पुरुष को प्रेरणा करके भेजा वही 'ब्रह्मा' कहा जाता है। [ यहां स्वयम्भू नाम से पहिले हिरण्यगर्भ को बताया है, जो कि सूक्ष्म जगत् का अभिमानी है। और ब्रह्मा नाम से विराट् पुरुष को बताया है जो कि स्थूलजगत् का अभिमानी है। कई विद्वान् ऐसी व्याख्या करते हैं कि—यह लोकसृष्टि का वर्णन है, इसमें सबसे प्रथम प्राणमय स्वयंभूमण्डल बना, उसने 'अप्' अर्थात् सोममय परमेष्ठिमण्डल को उत्पन्न किया। उसके आगे सुवर्णमय अण्डरूप से सूर्य की उत्पत्ति बताई गई। उसमें ही ब्रह्मा नाम का प्राणविशेष अग्नि प्रादुर्भूत हुआ—जिसने आगे सब जगत् बनाया। इत्यादि। इस व्याख्या में भी प्राणप्रधान स्वयंभू को हिरण्यगर्भ कहा जा सकता है ] [ आगे मनुस्मृति में मनु की उत्पत्ति का विवरण है, जो कि पूर्व विस्तार से आ चुका है। ] वे मनु कहते हैं कि—

'सृष्टि–उत्पादन की इच्छा से मैंने बड़ी कठिन तपस्या की, और प्रजाओं के स्वामी दस ऋषियों को उत्पन्न किया, जो कि प्रजापति कहलाते हैं। जिनके नाम क्रमशः ये हैं—

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ ( १३९ )
एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः ।
यथाकर्मतपोयोगात् सृष्टं स्थावरजङ्गमम् । इति ( १४१ )

(६) हिरण्यगर्भस्तावदयं सूत्रात्मा स वाय्वात्मा । ततो विराडजायत, सोऽन्नमयात्मा । अन्नं हि विराट् । दशाक्षरा विराट् । तस्मादेते दश प्राणास्तदवयवभूताः प्रादुर्भवन्ति सर्वेषामुत्तरेषामन्नभूताः । मरीचिः, अङ्गिराः, अत्रिः, भृगुः, वसिष्ठः, ( अगस्त्यः ) पुलस्त्यः, पुलहः, यज्ञः, प्रचेताः, ( कौशिकः ) नारदश्चेति । त एते दश ब्रह्माण उच्यन्ते ।

---

संस्कृतव्याख्या

ब्रह्माण्डस्य प्राणभूतान् दश ऋषीनाह—मरीचिमत्र्यङ्गिरसौ । अत्रैव श्रुतिपुराणादिषु प्रोक्तौ अगस्त्यकौशिकौ संयोज्य द्वादश ग्रन्थकृता व्याख्यायामग्रे प्रोक्ताः । एभिरेव च सर्वं जगत्सृज्यत इत्याह—एवमेतैरिदम् ।

अग्रे स्पष्टाक्षरैर्हिरण्यगर्भादीनां स्वरूपं प्रतिपादितम् । एते ऋषयः

---

भाषाटीका

( १ ) मरीचि, (२) अत्रि (३) अङ्गिरा ( ४ ) पुलस्त्य (५) पुलह ( ६ ) क्रतु ( ७ ) प्रचेता ( ८ ) वसिष्ठ ( ९ ) भृगु और ( १० ) नारद । आगे कहा जाता है कि—इन महात्माओंने मेरी इच्छासे तपस्या और योगके द्वारा चर तथा अचर संसारको कर्मानुसार उत्पन्न किया । यह मनुस्मृति द्वारा सृष्टि का संक्षेप बताया । आगे ग्रन्थकार इन सबका स्वरूप संक्षेपमें बताते हैं कि—

( ६ ) हिरण्यगर्भ सूत्रके समान सबमें अन्तःस्यूत रहनेसे 'सूत्रात्मा' कहाता है । और वह वायुदेवतारूप होनेसे वाय्वात्मा भी है । इसके बाद विराट् जो उत्पन्न हुआ, वह अन्नमयात्मा है । अन्न ही विराड्रूप है । विराट् दस अक्षरों ( भागों ) का समुदायरूप है । उस दशाक्षर विराट् के अवयवभूत ये दस प्राण उत्पन्न होते हैं, और वे आगे उत्पन्न होनेवालोंके अन्नरूप हैं, अर्थात् उन सबका पोषण करते हैं । उनके नाम—१ मरीचि, २ भृगु, ३ अङ्गिरा, ४ अत्रि, ५ वसिष्ठ, ६ अगस्त्य, ७ पुलस्त्य, ८ पुलह, ९ यज्ञ, १० प्रचेता, ११ कौशिक और १२ नारद हैं । [ श्लोकोक्त नामों में यहां श्रुतिपुराणादिके अनुसार अगस्त्य और कौशिक का नाम और बढ़ा दिया है । किन्तु 'दश ब्रह्माणः' इस प्रसिद्धिके अनुसार संख्या दस ही कही है ] ।

(७) तेषामेषामध्यात्मं कार्यलक्षणानि यथा मरीचेः संभूतिः, सा चापत्यादिसंसारधर्मप्रवृत्तिप्रतिपत्तिः । मरीचिसंयोगाभावे संभूतिविच्छेदः। अथाङ्गिरसः स्मृतिः, यद्भावसंबन्ध्यङ्गिराः संसज्जते, तस्यैव स्मरणं सम्पद्यते। तदीयाङ्गिरसो ध्वंसे तु तदीयस्मृतिध्वंसः । अथात्रेरनसूया, गुणेषु दोषदृष्टिरसूया, तदभावोऽनसूया, असूयावृत्तिप्रवृत्तिप्रतिबन्धकवृत्तिः । अथ भृगोः ख्यातिः, श्रीविशेषः। अथ वसिष्ठस्योर्जा, सा च बलविशेषः। अथ क्रतोर्यज्ञस्य संनतिः। सा च कस्यांचित् व्यक्तौ वा कस्मिंश्चित् विषये वा प्रवणता । अथ पुलस्त्यस्य प्रीतिः क्वचिदनुरागविशेषः । अथ पुलहस्य क्षमा । अथ प्रचेता दक्षः । ततो दक्षता—उत्साहविशेषो वाग्बुद्धिशरीरारम्भप्रयाजकः। अथ नारदस्य श्रद्धानप्रतीपता धर्मः। नारा आपः । आपश्चेह श्रद्धा। तां ददातीति नारदः । आपोऽस्मै श्रद्धां सन्नयन्ते। तथा च श्रद्धायै

---

संस्कृतव्याख्या

अध्यात्मम्, अधिभूतम्, अधिदैवं च व्याप्ताः । तेषामध्यात्मम्—अस्मदादिशरीरेषु कार्यलक्षणानि—तदुत्पादिता गुणधर्मा उच्यन्त इत्यर्थः। ते च स्पष्टार्था इति न व्याख्यासापेक्षाः ।

---

भाषाटीका

(७) ये हमलोगोंके शरीर में भी रहते हैं, भूतोंमें भी व्याप्त रहते हैं और तारामण्डलादिमें भी रहते हैं। हमारे शरीर में इनके कार्यरूप भिन्न भिन्न लक्षण अर्थात् गुण उत्पन्न होते हैं—उनका विवरण इस प्रकार है कि—

मरीचिप्राणका कार्य है संभूति, अर्थात् संसार में सन्तानादि उत्पन्न करने के सांसारिक कार्यों में प्रवृत्ति करना। जिनमें मरीचि प्राण का अभाव है, उनके सन्ततिका विच्छेद हो जाता है। अङ्गिराका कार्य है स्मृति को उत्पन्न करना। जिस पदार्थ का संबन्धी अङ्गिरा प्राण हमारे भीतर हो, उसी का स्मरण होता है। जिस पदार्थका संबन्धी अङ्गिरा प्राण नष्ट होजाय, उस पदार्थकी स्मृतिभी जाती रहती है। अत्रि का कार्य है अनसूया उत्पन्न करना। गुणोंमें भी दोषदृष्टि रखना 'असूया' कहलाती है, उस असूया का न होना ही अनसूया है। भावार्थ यह हुआ कि गुणोंको दोषरूप समझनेकी प्रवृत्तिको जो रोकदे, उसे अनसूया कहते हैं। अत्रि

परिणन्तुं सञ्चरन्त्य आपा यत्संयोगान्निरुध्य प्रतिकूला भवन्ति, पूर्वविरुद्धश्रद्धानं जनयन्ति स नारदः प्राणः । तदागमे कलहकारिणी विप्रतिपत्तिः प्रवर्तते ।

एषामेव हि प्राणानां शरीरनित्यानां विषयविशेषे संयोगवियोगतारतम्यानुरोधिनस्ते ते धर्म्मास्तत्र तत्र तारतम्येनोपलभ्यन्ते इत्यनुसन्धेयम् ।

एवमेषामधिदैवतमधिभूतमध्यात्मं च प्रतिविषयमन्येऽन्ये विलक्षणा बहवः कार्य्यधर्म्मा उपपद्यन्ते, ते चारण्यकोपनिषद्ग्रन्थेषु, पुराणग्रन्थेषु च सुविशदं निरूपिताः, ते च संक्षिप्याग्रे ऋषिनिरूपणे प्रदर्श्यन्ते ।

---

भाषाटीका

प्राणका संबन्ध न रहनेसे यह असूयादोष मनुष्योंमें आ जाया करता है । भृगुका कार्य्य है ख्याति उत्पन्न करना । ख्यातिका अर्थ है विशेष प्रकारकी कान्ति होना । वसिष्ठका कार्य्य है ऊर्जा देना । ऊर्जाका अर्थ है-विशेष प्रकारका बल । यज्ञ अर्थात् क्रतुका कार्य्य है संनति । संनतिका अर्थ है-किसी व्यक्तिमें अथवा किसी बिषयमें प्रवणता अर्थात् लगन । पुलस्त्यका कार्य्य है प्रीति-अर्थात् कहीं विशेष अनुराग का होना । पुलहका कार्य्य है क्षमा । प्रचेता का कार्य्य है दक्षता उत्पन्न करना । दक्षताका अर्थ है-विशेष प्रकारके उत्साह का होना, जो कि वाणी बुद्धि और शरीरकी चेष्टाका प्रवर्तक होता है । नारद प्राणका कार्य है श्रद्धाके विरुद्ध बुद्धिका होना । नारका अर्थ है अप्, और अप् से श्रद्धा होती है, उस श्रद्धाको काटनेवाला नारद प्राण कहा लाता है । भावार्थ यह है कि अप् ही श्रद्धाको उत्पन्न करते हैं, जो अप् श्रद्धारूपमें परिणत होनेको हैं, वे नारद प्राणके संयोगसे श्रद्धामें परिणत न होकर विपरीत अर्थमें अर्थात् अश्रद्धामें परिणत हो जाते हैं व विरोधी बातोंमें श्रद्धा उत्पन्न करनेवाले बन जाते हैं । इस विपरीत परिणति करनेवाले प्राणविशेषको नारद कहते हैं । यह नारद प्राण जहां होता है, वहां कलह करनेकी विवादरूप प्रवृत्ति अधिक होती है ।

इस प्रकार यह सिद्ध होता है कि-मरीचि आदि प्राण शरीरसे सदा ही संबन्ध रखते हैं, किन्तु जिस विषयमें इनका विशेष संयोग वा वियोग जिस जिस मात्रामें होगा, उतनी ही मात्राके वे उनके उत्पादित धर्म न्यूनाधिकभावसे उन पुरुषोंमें दिखाई देंगे । इन बातोंका खूब अनुसन्धान होना चाहिये ।

इन्हीं प्राणोंके कार्य्यरूप धर्म, देवमण्डलमें भूतमण्डलमें वा आत्ममण्डलमें भी, भिन्न भिन्न विषयोंमें बहुत भिन्न भिन्न प्रकारके अनुसन्धानसे जाने जाते हैं, जिनका आरण्यक उपनिषद् और पुराणादि ग्रन्थोंमें बिस्तारसे निरूपण है । इस ग्रन्थमें भी संक्षिप्त रूपसे ऋषियोंका निरूपण अगले खण्डमें किया जायगा ।

(८) अथैतेभ्योऽन्ये सप्त प्राणा जायन्ते, ते सप्तर्षयो व्यपदिश्यन्ते। सप्त ब्रह्माणः, सप्त प्रजापतयः, सप्त मनवश्च । तेषामध्यात्मं चाधिदैवतं चाधिभूतं च प्रतिविषयमन्यान्यविलक्षणानि बहूनि कार्य्याणि श्रूयन्ते, तान्यपि तत्र तत्राकलनीयानि ॥

(९) द्विविधो हि स विराट्पुरुष इष्यते—व्याकृतश्चाव्याकृतश्च। हिरण्यगर्भादुत्पन्नमात्रः सोऽव्याकृतरूपः । अथ स पुनर्व्याक्रियमाणो वैराजः । तस्यैता दश व्यक्तयोऽवयवा इत्येके। ये त्वेतं सूक्ष्मं विकल्पं नेच्छन्ति, तेषां हिरण्यगर्भाद्विराज एवैता दश व्यक्तय इति

---

संस्कृतव्याख्या

ये त्वेतं सूक्ष्मम् । केचिद् हिरण्यगर्भं विराजं चैकीकृत्य व्याचक्षते तेषां हिरण्यगर्भ एव विराट् । तज्जन्या एव च दश ऋषय इत्यर्थः । इदं च संक्षेप-विस्ताररूपनिरूपणप्रक्रियामात्रमिति नात्र कापि विरोधशङ्का ।

---

भाषाटीका

(८) इन प्राणों से अन्य सात प्राण उत्पन्न होते हैं, जिनका लोक में सप्तर्षि-नाम से व्यवहार किया जाता है। इन सप्तर्षियोंका ही सप्त ब्रह्मा, सप्त प्रजापति, और सप्त मनु शब्दसे भी व्यवहार करते हैं। इन सात प्राणोंके प्रतिविषयोंमें अध्यात्म अधिदैवत और अधिभूत भेदसे विलक्षण कई कार्य होते हैं-जो श्रुतियोंमें वर्णित हैं। उन्हें भी उन श्रुतियोंसे समझ लेना चाहिये।

(९) विराट् पुरुष दो प्रकारका होता है-एक व्याकृत, दूसरा अव्याकृत। हिरण्यगर्भसे उत्पन्न होते ही उसका पहिला रूप अव्याकृत है, अर्थात् उसमें गुणधर्म पूरे प्रकट नहीं हुए हैं। उसीका व्याकरण अर्थात् विस्तार होता है, तो वह वैराज (मनु) कहलाता है। उस वैराज (मनु) के अवयव ही ये पूर्वोक्त दस व्यक्ति हैं—यह कई आचार्यों का मत है। जो इस सूक्ष्म भेद की कल्पना नहीं करते, उनके मतसे हिरण्यगर्भ ही विराट् है, और उससे ही ये दस प्राण व्यक्तियां उत्पन्न हो जाती हैं। इन दोनों मतोंमें केवल संक्षेप विस्तार मात्र है, कोई विरोध नहीं समझना चाहिये। क्योंकि कार्य और कारण एक रूप ही होते हैं-यह आर्यशास्त्रोंका सिद्धान्त है। इससे हिरण्यगर्भ और विराट् में कोई मौलिक भेद नहीं रहता। ये दसों प्राण नाभि

नातिविशेषः। यतो वा नाभेर्दशदिक्षु दशैते प्राणाः प्रादुर्भूय प्रवर्तन्ते, स एष नभ्यः प्राणः सर्वप्राणाधारो मनुर्नाम । सोऽहंपदेनाभिधीयते । तस्यैव प्रत्यग्ब्रह्मत्वात् स इन्द्रः ॥

इति सृष्टिनिरूपणं नाम द्वितीयं प्रकरणम् ।

समाप्तश्चायं प्रथमः खण्डः ।

---

संस्कृतव्याख्या

**सर्वप्राणाधारो मनुर्नाम** । मानुषादिषु सर्वेषु पशुषु अयमेवार्धप्राणरूपो मनुरिन्द्रस्थानीय इति सुविशदं निरूपितं पूर्वप्रकरणे ।

**सोऽहंपदेन** । मनुस्मृतौ अहंपदेन अयमेव मनुरुक्तः, मनुप्राणाविष्कारकेण मनुनाम्ना ख्यातेन पुरुषविशेषेण सा प्रोक्तेति अहंपदेन स मनुरात्मानमभिदधाति । यद्वा, सर्वेऽपि वयम् अहंपदेन यमभिदध्मः, सोऽयं मनुरूपः प्राण एव, विशुद्धचैतन्यरूपस्यात्मनः पदानभिधेयत्वात् । अत एव पञ्चदश्यां विद्यारण्यस्वामिभिर्मुक्यं चैतन्यमहंपदस्य लाक्षणिकोऽर्थः, प्राणाद्युपाधिविशिष्टस्तु मुख्योऽर्थ इति प्रतिपादितम् । तदेवात्राप्युच्यते । तस्यैव—प्राणस्यैव प्रत्यग्ब्रह्मत्वाद्व्यावहारिक आत्मा स एव मन्तव्य इत्यर्थः । अयं मनुरेव पशुषु इन्द्रस्थानीय इति पुनः स्पष्टीक्रियते स इन्द्र इति ।

इति 'महामहोपाध्याय' 'वाचस्पति' गिरिधरशर्मचतुर्वेदविरचिता
महर्षिकुलवैभवस्य प्रथमखण्डव्याख्या समाप्तिमगात् ।

---

भाषाटीका

अर्थात् केन्द्रमें स्थित जिस मुख्य प्राणसे निकलते हैं, वह नभ्य प्राण सब प्राणोंका आधार मनु नामका प्राण है । इसका विस्तृत वर्णन पूर्व प्रकरणमें कर चुके हैं। मनुष्य आदि सब पशुओंमें अर्धेन्द्ररूप यही मनुप्राण इन्द्ररूपसे रहता है। हमलोगोंको जो 'मैं हूँ' ऐसा ज्ञान होता है उसका विषय यही मनु प्राण है, अर्थात् मनुप्राण ही अहंभाव प्रकट किया करता है । यही व्यवहारदशामें प्रत्यग्ब्रह्म कहलाता है। हमलोगोंका यही इन्द्र है । [ इस मनुप्राणके आविष्कर्त्ता मनुष्य मनुने मनुस्मृतिका उपदेश किया है, और मनुप्राण लक्ष्य करके ही 'अहं' शब्दका व्यवहार किया है ]

इस प्रकार सृष्टिनिरूपण नामके द्वितीय महाप्रकरणको समाप्त किया ।

प्रथमखण्ड समाप्त।

# राजस्थान पुरातन ग्रन्थमाला

## प्रकाशित ग्रंथ

१ प्रमाणमञ्जरी – तार्किकचूड़ामणि सर्वदेव। २ यन्त्रराजरचना–महाराजाधिराज जयसिंहदेव कारित। ३ कान्हडदे प्रबन्ध – महाकवि पद्मनाभ। ४ क्यामखांरासा – नवाब अलफखां (कविवर जान)। ५ लावारासा – चारण कविया गोपालदान। ६ महर्षिकुलवैभवम् – विद्यावाचस्पति स्व. श्री मधुसूदनजी ओझा।

## प्रेस में

त्रिपुराभारतीलघुस्तव – सिद्धसारस्वत लघुपण्डित। २ बालशिक्षा व्याकरण –ठक्कुर संग्रामसिंह। ३ करुणामृतप्रपा – महाकवि ठक्कुर सोमेश्वरदेव ४ पदार्थरत्नमञ्जूषा–पं. कृष्णमिश्र। ५ शकुनप्रदीप – पं. लावण्य शर्मा। ६ उक्तिरत्नाकर – पं. साधुसुन्दर गणी। ७ प्राकृतानन्द – पं. रघुनाथ कवि। ८ ईश्वरविलासकाव्य – पं. कृष्णभट्ट। ९ चक्रपाणिविजयकाव्य – पं. लक्ष्मीधर भट्ट। १० काव्यप्रकाश–भट्ट सोमेश्वर। ११ वृत्तिदीपिका- मौनीकृष्ण भट्ट। १२ तर्कसंग्रह फक्किका–क्षमाकल्याण पं. गणी। १३ राजविनोद काव्य – कवि उदयराज। १४ कारकसंबन्धोद्योत – रभसनन्दी। १५ शृंगारहारावलि – हर्षकवि। १६ कृष्णागीतिकाव्यनि – कवि सोमनाथ १७ नृत्यसंग्रह – अज्ञातकर्तृक। १८ नृत्यरत्नकोश – महाराजाधिराज कुम्भकर्णदेव। १९ नन्दोपाख्यान – अज्ञातकर्तृक २० चान्द्रव्याकरण - चन्द्रगोमी। २१ शब्दरत्नप्रदीप - अज्ञातकर्तृक। २२ रत्नकोश- अज्ञातकर्तृक। २३ कविकौस्तुभ – पं. रघुनाथ मनोहर। २४ एकाक्षरकोशसंग्रह–विविधकविकर्तृक। २५ शतकत्रयम् – भर्तृहरि, धनसारकृत व्याख्यायुक्त। २६ वसन्तविलास – अज्ञातकर्तृक। २७ दुर्गापुष्पाञ्जलि – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २८ दशकण्ठवधम् – म. म. पं. दुर्गाप्रसादजी द्विवेदी। २९ गोरा बादल पदमिणी चउपई–कवि हेमरतन। ३० बांकीदासरी ख्यात–महाकवि बांकीदास। ३१ मुंहतानैणसीरी ख्यात- मुंहता नैणसी इत्यादि

प्राप्तिस्थान—सञ्चालक, राजस्थान पुरातत्वान्वेषण मन्दिर, जयपुर।

काशिराज मुद्रणालय, रामनगर में साहित्याचार्य पं० पुरुषोत्तम शर्मा चतुर्वेदी द्वारा मुद्रित।
मुखपृष्ठादि ४ पृष्ठ के मुद्रक—धनपतराय शर्मा, हनुमान प्रेस जयपुर।